श्रेष्ठि-देवचन्द्र-लालभाई-जैन-पुस्तकोद्धारे ग्रन्थाङ्क ७२

जगद्गुरुश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयविरचितो

# विचाररत्नाकरः ।

संशोधकाः-ज्योतिःशास्त्रविशारद-आचार्यवर्य्यश्रीमद्विजयदानसूरीश्वराः

मुद्रणकारिका-श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धार संस्था ।

प्रसिद्धिकारकः-जीवनचन्द्र साकरचन्द्र जह्वेरी, अस्याः कार्यवाहकः ।

इदं पुस्तकं मोहमय्यां जीवनचन्द्र साकरचन्द्र झवेरी इत्यनेन

भावनगरे 'आनंद' मुद्रणालये गुलाबचंद लल्लुभाई द्वारा मुद्रापयित्वा प्रकाशितम् ।

वीर संवत् २४५३ — विक्रम संवत् १९८३ — सन १९२७

[ प्रति १००० ] — वेतन रु ३-०-० — [ Rs 3-0-0 ]

Shreshthi Devchand Lalbhai Jain Pustakoddhâr Series No 72

# VICHÂRA RATNÂKARA.

By

*Shree Keêrttivijaya Upâdhyâya.*



A D 1927



Price Rupees Three

*From Page No. 1 to Page No. 68 Printed at "Manoranjan" Press, Girgam, Bombay and from Page No. 69 to all Printed by Gulabchand Lallubhai Shah at the 'Anand' Press, Station Road, Bhavnagar, and published by Jivanchand Sakerchand Javeri, on behalf of Sheth Devchand Lalbhai Jain Pustakoddhar Fund.*

No. 114-116 Javeri Bajar Bombay.



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| जन्म १९०९ वैक्रमाब्दे कार्तिकशुक्लैकादश्यां, सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |
|---|---|

## The Late Sheth Devchand Lalbhai Javeri.

Born 1853 A. D. Surat, Died 13th January 1906 A D Bombay.

9-21.-Copies 5000.

श्रेष्ठिदेवचन्द्रलालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्के—

# विचाररत्नाकरस्योपोद्घात ।

" नम । पारमेश्वर्यप्रवचने महर्षिभि श्रुतसागरादनेके ग्रन्थरत्ना समुध्धृता सन्ति । तत्रायमप्येकोऽतिगहनो विपुलतरङ्गलोलश्च नानाविधविषयविचाररत्नपरिपूर्णो विचाररत्नाकराभिधानश्चिराजयति । अस्य ग्रन्थस्य के विधातार: कदा च सजाता इति जिज्ञासाया मकब्बरभूपतिप्रतिबोधकश्रीमद्विजयहीरसूरीश्वरपादैर्न कोऽप्यज्ञो भविष्यति, तेषा शिष्यरत्नै सुगृहीतनामधेयैर्महामहोपाध्यायश्रीमत्कीर्त्तिविजयगणिभिर्निर्मितोऽय ग्रन्थ । तेषा समयस्तु सुप्रसिद्ध एव । ग्रन्थरचना तु श्रीमद्विजयहीरसूरीशपट्टप्रभावकश्रीमद्विजयसेनसूरीशपट्टालङ्कारश्रीमद्विजयतिलकसूरीन्द्रपट्टप्रतिष्ठित-श्रीमद्विजयानन्दसूरिशेखराणा साम्राज्ये नवत्यधिकषोडशशताब्दे समभवत्, तेषामेव सूरीश्वराणामादेशादय ग्रन्थ श्रुतसागरात् समुध्धृत । उपाध्यायदेवविजयगणिभि॰ सशोधितो लोकप्रकाशाद्यनेकग्रन्थनिर्म्माणप्रस्तुतग्रन्थकृच्छिष्यरत्नवाचकवरविनयविजयगणिभिश्च सशोधित प्रथमादर्शे लिखितश्च । तदुक्तम्—

तदनुमनुजमान्योऽनन्यसामान्यभाग्य-स्त्रिभुवनगुरपट्टे सूरिशक्रो बभूव ।
विजयिविजयसेन फेनपिण्डावदात , प्रसृमरवरकीर्त्तिर्मूर्त्तिमान् पुण्यराशि ॥ १८ ॥
येनात्युन्मदवादिवृन्दहृदयक्ष्मापीठजन्मा महान्, गर्वक्षोणिरुह क्षणादपि तथा निर्मूलमुन्मूलित ॥
भूपाक वरससदि स्ववचनैर्युक्तिप्रथापेशलै-र्मोचद्गन्धुरसिन्धुरोध्धुरकरैरम्भोजमाला यथा ॥ १९ ॥

शीलं यस्य परे स्तुवन्ति मतिनोऽप्यन्तर्मनोऽभीष्टदं. कालेऽस्मिन्नपि जामदुग्ममहिमा यद्गोत्रमन्त्रोद्धुतः ।
निःशेषागमवारिधेरपि सुखं दत्तावकाशे हृदि, स्थातुं न प्रभुरङ्गजश्चिरमिदं यस्य त्रयं चित्रकृत् ॥
एतेषामादेशात् समुचितः प्रवचनादयं ग्रन्थ. । श्रीहीरविजयगणपतिशिशुपाठककीर्त्तिर्विजयेन ॥ २८ ॥
संशोधितश्च सुविहितचूडामणिरामविजयबुधशिष्यैः । श्रीदेवविजयवाचक—वृषभैः कोविदकुलोत्तंसैः ॥ २९ ॥
किञ्चात्र लेखनशोधनविषये यत्नं चकार मच्छिष्य' । विनयविजयाभिधानः प्रथमादर्शं च स लिलेख ॥ ३० ॥

अस्मिन् विचाररत्नाकरे आचाराङ्गाद्येकादशाङ्गात्मकविचारतरङ्गसंकुलोऽपूर्व. पूर्वतटो वर्तते । औपपातिकादिद्वादशोपाङ्ग-नन्द्यनुयोगद्वाररूपशास्त्रविचारवीचिबहुलः कतिपयसूत्रमतान्तरावर्त्तयुत आवश्यकदशवैकालिकोत्तराध्ययनौघनिर्युक्त्यादिसूत्रसन्दर्भरूप-कलिकाकलितश्चालब्धमध्यो मध्यभागो वर्तते । निशीथमहानिशीथदशाश्रुतस्कन्धबृहत्कल्पव्यवहारपञ्चकल्पनामकच्छेदसूत्राणा-माशयस्फटिकस्फीतोऽपश्चिमपश्चिमतटो वर्तते । किं बहुना प्रकीर्णकप्रकरणादिविचारात्मजलतरङ्गध्वनितो यथाऽयं दर्शनेन नेत्रमधुरो निदर्शनेन मनोवेधकस्तथा श्रवणेनापि निरन्तरं कर्णपेशलसंगीतदायको वेलावारिधिः श्रुतरत्नाकरैकोपासनारासिकत्वेनेतस्ततो भ्राम्य-माणानां वेलार्थिनां परमार्थपूरकः केवलनिधानसंवाहको भविष्यतीत्यत्र नास्ति संशयलेशोऽपि । अस्मिन्ग्रन्थे—" गणस्तव कोटिकः स्थानीयं कुलं वैराख्या शाखा, अमुकाभिधान आचार्य उपाध्यायश्च । साध्व्याः प्रवर्त्तिनी तृतीयोद्देशष्टव्या " इत्येवं रूपदिग्बन्धउक्तः, न प्रवर्त्तकाभिधानं नापि श्रावकश्राविकयोरिति । तथा—" अजातश्मश्रुणः शिष्यादेराचारप्रकल्पाध्ययनं पाठयितुं न कल्पते " " यो वस्त्रस्यैकं थिग्गलं ददाति ददतं वा स्वादयति—अनुमोदयति तस्य दोषाः " इत्युत्सर्गः, कारणे तु त्रयाणामनुज्ञा परत' प्रायश्चित्तम् ।

तत्पट्टाभ्रमुकान्तसुन्दरशिर शृङ्गारवास्तोष्पति । पट्टतर्कोदधिमन्दर स्मरजयी चारित्रचूडामणि ॥
चञ्चचन्द्रकुलाब्धिचन्द्रसदृशश्चन्द्रोज्ज्वलश्रीयशा । स श्रीमान् विजयप्रयुक्ततिलक सूरीश्वर सोऽभवत् ॥ २० ॥
य श्रीसूरिवर समत्वमदधद्धाजिष्णुना जिष्णुना । लक्ष्मीदत्तकटाक्षपात्रमतनुप्रद्युम्नसम्पादक ॥
दध्रे येन जिनाधिराजवचनश्रेणीधरित्री ध्रुवम् । दर्पान्धोरगघोरसागरजलैराप्लाव्यमाना बलात् ॥ २१ ॥
तत्पट्टाधिपति क्षितीशततिभि स्तुत्यक्रमाम्भोरुह । सूरिश्रेणिशिरोमणि स विजयानन्द क्षमाभृद्विभु ॥
स्वच्छश्रीस्तपगच्छराज्यमखिल शास्ति प्रशस्ताभिध–स्तीर्थाधीशपदारविन्दविलसद्भक्तिर्विमुक्तिप्रिय ॥ २२ ॥
आजन्माऽपि रज प्रसङ्गरहिते रत्नप्रदीपोज्ज्वले, विश्वामोदिसुवासने श्रुतधने चातुर्यचन्द्रोदये ।
यच्चेत सदने निरस्तमदने स्वाध्यायदौवारिके, श्रीधर्मे क्षितिप क्षमादिगृहिणीवर्गै सह क्रीडति ॥ २३ ॥
यत्कीर्त्याद्भुतमेतदद्य विहित शुभ्र सृजन्त्या जगत्, कृष्णश्वेतरुचि श्रित श्रियमिय प्रोवाच शङ्काकुला ।
कस्त्व तद्दयितो न सोऽसिततनुर्नून स एव प्रिये, दम्पत्योरितरेतर सशपथ क्लृप्त कलिर्नैकश ॥ २४ ॥
कठे सारस्वती हृदि कृपानीतिक्षमाशुद्धयो, वक्त्राब्जे मुखवस्त्रिका सुभगता काये करे पुस्तिका ।
भूपालप्रणति पदे दिशि दिशि श्लाघाऽभित सम्पद, इत्थ भूरिवधूवृतोऽपि विदितो यो ब्रह्मचारीश्वर ॥ २५ ॥
लक्ष्मीमीश्वरता च य परिचितामुत्सृज्य बाल्यादपि, श्रामण्य श्रितवानगण्यगुणभृत्पुण्यप्रवीणाशय ।
तत्रौज्ज्वल्यपरान्तिक तदितरा त्वद्गुणापि नाङ्किता–ऽप्येतत्पादपवित्रगेहिसदने तिष्ठत्यहो रागिता ॥ २६ ॥

श्रेष्ठिदेवचंद्रलालभाई-जैनपुस्तकोद्धार-ग्रन्थांके—

# विचाररत्नाकरस्योपोद्घातः ।

ऐं नमः । पारमेश्वर्यप्रवचने महर्षिभिः श्रुतसागरादनेके ग्रन्थरत्नाः समुध्धृताः सन्ति । तत्रायमप्येकोऽतिगहनो विपुलतरङ्गलोलश्च नानाविधविषयविचाररत्नपरिपूर्णो विचाररत्नाकराभिधानश्चिराज्जयति । अस्य ग्रन्थस्य के विधातारः कदा च संजाताः इति जिज्ञासाया- मकब्बरभूपतिप्रतिबोधकश्रीमद्विजयहीरसूरीश्वरपादैर्न कोऽप्यज्ञो भविष्यति, तेषां शिष्यरत्नैः सुगृहीतनामधेयैर्महामहोपाध्यायश्रीम- त्कीर्त्तिविजयगणिभिर्निर्मितोऽयं ग्रन्थः । तेषां समयस्तु सुप्रसिद्ध एव । ग्रन्थरचना तु श्रीमद्विजयहीरसूरीशपट्टप्रभावकश्रीमद्विजय- सेनसूरीशपट्टालङ्कारश्रीमद्विजयतिलकसूरीन्द्रपट्टप्रतिष्ठित-श्रीमद्विजयानन्दसूरिशेखराणां साम्राज्ये नवत्यधिकषोडशशताब्दे समभवत्, तेषामेव सूरीश्वराणामादेशादयं ग्रन्थः श्रुतसागरात् समुध्धृतः। उपाध्यायदेवविजयगणिभिः संशोधितो लोकप्रकाशाद्यनेकग्रन्थनिर्मातृ- प्रस्तुतग्रन्थकृच्छिष्यरत्नवाचकवरविनयविजयगणिभिश्च संशोधितः प्रथमादर्शः लिखितश्च । तदुक्तम्—

तदनुमनुजमान्योऽनन्यसामान्यभाग्य-स्त्रिभुवनगुरुपट्टे सूरिशक्रो बभूव ।
विजयिविजयसेनः फेनपिण्डावदातः, प्रसृमरवरकीर्त्तिर्मूर्त्तिमान् पुण्यराशिः ॥ १८ ॥
येनात्युन्मदवादिवृन्दहृदयक्ष्मापीठजन्मा महान्, गर्वक्षोणिरुहः क्षणादपि तथा निर्मूलमुन्मूलितः ॥
भूपाकब्बरसंसदि स्ववचनैर्युक्तिप्रथापेशलै-र्माद्यद्बन्धुरसिन्धुरोध्धुरकरैरम्भोजमाला यथा ॥ १९ ॥

रवधि कार्या, अवधिमध्ये तूद्ग्राहणिका विनापि शीघ्र देयमन्यथा देवद्रव्योपभोगदोपप्रसक्ति, तद्द्रव्यचिन्तकैरुद्ग्राहणियापि शीघ्रम भग्नतया स्वद्रव्यवद्देवद्रव्येऽपि कार्या " । " तथान्त्यावस्थाया पित्रादीना यन्मान्यते तत्सावधानत्वे गुरुश्राद्धादिबहुसमक्षमेव वान्यम – यन्भवन्निमित्तमियद्दिनमध्ये इयद्व्ययिष्यामि तदनुमोदना भवद्भि कार्या । तदपि सद्य सर्वज्ञात व्ययितव्यम् । स्वनाम्ना व्यये तु स्तैन्यादिदोप " इत्यादयोऽनेके उपयोगिनो विपया प्रपञ्चिता इति ॥

| | |
|---|---|
| स्तम्भननगरे<br>आषाढ कृष्णद्वितीयायां वीर सवत् २४५१ | पूज्यपाद–आचार्यदेवश्रीमद्विजयदानसूरीश्वरसाम्राज्यवर्त्ती–अनुयोगाचार्य<br>श्रीमत्प्रेमविजयगणिवरविनेयाणुर्जम्बूविजय. |



श्रेष्ठि देवचन्द्र लालभाई-जैन पुस्तकोद्धारे-ग्रन्थांकः ७२.

# आभारदर्शनम्.

अयं ग्रन्थोऽतीवाशुद्ध आसीत्, तस्य शुध्यर्थं प्रातःस्मरणीयमहामहोपाध्यायश्रीमद्वीरविजयानां ज्ञानकोषात् हस्तलिखिते द्वे प्रते मिलीते। ययोरेका नूतना, द्वितीया जीर्णा, द्वेऽप्यतीवाशुद्धेस्तः। अयं ग्रन्थः प्रायेण सर्वत्राशुद्धिमान्नेव दृष्टः। तादृशस्यापि शोधनेऽखण्डप्रतापयुक्तशासननायकश्रीमद्विजयकमलसूरीशानां सुविहितपट्टाकाशेऽज्ञानतमोध्वंसकनभोमणिभिः श्रीमद्विजयदानसूरीश्वरैः यत्परिश्रमः संसेवितस्तेनैवास्यासीमोपकारकस्य ग्रन्थरत्नाकरस्य प्रकाशने समर्थीकृता वयं, ततस्तेषां नामसंकीर्त्तनेनैव वयमस्माकं रसनां पावनीं कूर्मः। तेषां प्रभावाच्चास्य ग्रन्थस्याध्येतारः सकलरहस्यार्थसार्थसम्पादनसुखभाजना भवन्त्वित्यभिलषामो वयम्। दृष्टिदोषात् मुद्रकदोषाद्वा या अशुद्धयः संजाताः ताः धीमद्भिः कृपां कृत्वा संशोधनीयाः ॥

मोहमयीपत्तने
आषाढ कृष्ण पञ्चम्या वीर संवत् २४५२. }

साकरचन्द्रात्मजो जीवनचन्द्रः

अर्हम्

॥ श्रीपरमात्मने नमः ॥

श्रेष्ठि–देवचन्द्र लालभाई–जैनपुस्तकोद्धार–ग्रन्थाङ्के-

श्रीकीर्त्तिविजयोपाध्यायविरचित.—

# श्रीविचाररत्नाकरः ॥

॥ अथ प्रथमस्तरङ्ग. ॥

स जयति जिनवीरः क्षीरपूराच्छकीर्त्तिर्भवति भुवनमान्यो यत्प्रसत्तेर्नरोऽपि ।
अथ किमिव न शक्य दिव्यशक्तेर्घटोऽपि, श्रयति जननुता यत्कामकुम्भप्रतिष्ठाम् ॥ १ ॥

जीयासुर्जिनशासनोन्नतिकरा. श्रीहीरसूरीश्वराः , सिद्धान्तोदधय॰ समाश्रिततदा रत्नार्थिभिर्धीवरै ।
शिष्टाभीष्टरसाश्रया घनजना येभ्यो निपीतामृताः, गर्जन्तोऽप्यजडाशया. प्रतिदिश प्रीति समातन्वते ॥ २ ॥

तेषामच्छस्वयश परिमलपरिकलितसकलभुवनानाम् । हृदि गोत्रमन्त्रमिलं निधाय कामितफलवदान्यम् ॥ ३ ॥
अङ्गोपाङ्गाद्यागमतद्वृत्तिप्रकरणादिदृष्टानाम् ।
रचयामि विचाराणा निचय ग्रन्थेऽत्र रुचिराणाम् ॥ ४ ॥ त्रिभिर्विशेषकम्

ये सिद्धान्तमयाशयाः कृतधियः संदब्धशास्त्राश्च ये, तेषामेष विशेषलेशलिखनायासोऽस्तु हासाय वै ।
अन्येषां तु मुदे भविष्यति जने हास्या न कृत्यासहा, किं क्रीडाशकटी करोति विकटीभावं शिशूनां मुदः ॥ ५ ॥

अत्र च यथाक्रममङ्गोपाङ्गाद्यागमप्रकरणविचारा उद्देशकादिक्रमेण लिख्यन्ते । तत्र च प्रथममाचाराङ्गविचारास्तत्राऽपि पूर्वं ज्ञानाधिकारतया मंगलत्वेन जातिस्मृतिमान् कियतो भवाञ्जानातीति जिज्ञासया च तत्स्वरूपं लिख्यते—

"से जं पुण जाणेज्जा सहसम्मइयाए" इत्येतस्य निर्युक्तौ—"एत्थ य सहसम्मइयाए जं पयं तत्थ जाणणा होइ । ओहीमणपज्जवनाणकेवले जाइसरणे य ॥ ६४ ॥" एतद्वृत्तिश्च—अत्र च 'सहसम्मइयाएत्ति' सूत्रे यत्पदं तत्र 'जाणणत्ति' ज्ञानमुपात्तं भवति 'मन ज्ञाने' मननं मतिरितिकृत्वा, तच्च किंभूतं? इति दर्शयति—अवधिमनःपर्यायकेवलजातिस्मरणरूपमिति । तत्रावधिज्ञानी संख्येयानसंख्येयांश्च भवाञ्जानाति । एवं मनःपर्यायज्ञान्यपि । केवलज्ञानी तु नियमतोऽनन्तान् । जातिस्मरणस्तु नियमतः संख्येयानिति । शेषं स्पष्टम् । इत्याचारांगप्रथमश्रुतस्कन्धप्रथमाध्ययनप्रथमोद्देशकनिर्युक्तिगाथावृत्तौ २३७ प्रतौ १४ पत्रे ॥ १ ॥

एकपर्याप्तकाश्रयेणासंख्येया अपर्याप्तका भवन्तीति जिज्ञासया लिख्यते—

"जे बायरे विहाणा, पज्जत्ता तत्तिया अपज्जत्ता । सुहुमावि होंति दुविहा, अपजत्ता चेव पज्जत्ता ॥ ७९ ॥" 'जे बायरे इत्यादि' यानि बादरपृथ्वीकाये विधानानि भेदाः प्रतिपादिताः, तानि यावन्ति

पर्याप्तकाना तावन्त्येवापर्याप्तकानामपि। अत्र च भेदाना तुल्यत्व द्रष्टव्यं न तु जीवानाम्। यत एकपर्याप्तका-श्रयेणासख्येया अपर्याप्तका भवन्ति। सूक्ष्मा अपि पर्याप्तकापर्याप्तकभेदेन द्विविधा एव। किन्त्वपर्याप्तकनिश्रया पर्याप्तकाः समुत्पद्यन्ते, यत्रैकोऽपर्याप्तकस्तत्र नियमादसख्येयाः पर्याप्तकाः स्यु.। इत्याचाराङ्गप्रथमश्रुतस्कन्धप्रथमाध्ययनद्वितीयोद्देशकनिर्युक्तिगाथावृत्तौ २३७ प्रतौ १९ पत्रे ॥ २ ॥

पृथिव्युपमर्देन तज्जीवाना यादृशी वेदना भवति तज्जिज्ञासया लिख्यते—

"पायच्छेयणभेयण जघोरु तहेव अगुवगेसु। जह हुति नरा दुहिया, पुढविकाए तहा जाण ॥ ९७ ॥"
'पायेत्यादि' यथा पादादिकेष्वङ्गप्रत्यङ्गेषु छेदनभेदादिकया क्रियया नरा दुःखितास्तथा पृथिवीकायेऽपि वेदना जानीहि, यद्यपि पादशिरोग्रीवादीन्यङ्गानि पृथिवीकायिकाना न सन्ति, तथापि तच्छेदनानुरूपा वेदनास्त्येवेति दर्शयितुमाह—"णत्थि य सि अगमगा, तयाणुरूवा य वेयणा तेसि। केसिंचि उदीरेंति, केसिंचि य घायए पाणे ॥९८॥" पूर्वार्द्धं गतार्थम्। केषाञ्चित्पृथिवीकायिकाना तदारम्भिण. पुरुषा वेदनामुदीरयन्ति। केषाञ्चित्तु प्राणानप्यतिपातयेयुरिति। तथा हि भगवत्या दृष्टान्त उपात्तो यथा—चतुरङ्ग(न्त)चक्रवर्त्तिनो गन्धपेषिका यौवनवर्त्तिनी बलवत्याद्रामलकप्रमाण सचित्तपृथिवीगोलकमेकविंशतिकृत्वो गन्धपट्टके कठिनशिलापुत्रकेण पिष्यात्ततस्तेषा पृथिवीजीवाना कश्चित्सङ्घट्टित'। कश्चित्परितापितः। कश्चिद्व्यापादित'। कश्चित्पर किल न तेन शिलापुत्रकेण स्पृष्टोऽपि। इत्याचाराङ्गप्रथमश्रुतस्कन्धप्रथमाध्ययनद्वितीयोद्देशकनिर्युक्तिगाथावृत्तौ २३७ प्रतौ २१ पत्रे ॥ ३ ॥

व्यवहारं हि केवलिनोऽपि सुतरां मन्यन्त इत्यर्थगर्भितो जलविचारो लिख्यते—

" संति पाणा उदयनिस्सिया जीवा अणेगे, इह च खलु भो अणगाराणां उदयजीवा वियाहिया" इत्येतस्य वृत्तौ–शाक्यादयस्तूदकाश्रितानेव द्वीन्द्रियादिजीवानिच्छन्ति नोदकमित्येतदेव दर्शयति–खलुशब्दोऽवधारणे। इहैव ज्ञातपुत्रीये प्रवचने द्वादशाङ्गे गणिपिटकेऽनगाराणां साधूनामुदकरूपा जीवाः। चशब्दात्तदाश्रिताश्च पूतरकच्छेदनकलोद्दनकभ्रमरकमत्स्यादयो जीवा व्याख्याताः। अवधारणफलं च नान्येषामुदकरूपा जीवाः प्रतिपादिताः। यद्येवमुदकमेव जीवस्ततोऽवश्यं तत्परिभोगे सति पातकभाजः साधव इत्यत्रोच्यते–नैव त(नैत)देवं यतो वयं त्रिविधमप्कायमाचक्ष्महे–सचित्तं मिश्रमचित्तं च। तत्र योऽचित्तोऽप्कायस्तेनोपयोगविधिः साधूनां नेतराभ्यां, कथं पुनरसौ भवत्यचित्तः? किं स्वभावादाहोस्विच्छस्त्रसम्बन्धात्? उभयथाऽपीति। तत्र यः स्वभावादेवाऽचित्तीभवति न बाह्यशस्त्रसम्बन्धात्तमचित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते, अनवस्थाप्रसङ्गभीरुतया। यतोऽनुश्रूयते–भगवता किल श्रीवर्द्धमानस्वामिना विमलसलिलसमुल्लसत्तरङ्गः शैवलपटलत्रसादिरहितो महाह्रदो व्यपगताशेषजलजन्तुकोऽचित्तवारिपूर्णः स्वशिष्याणां तृड्बाधितानामपि पानाय नानुजज्ञे, तथाऽचित्ततिलशकटस्थण्डिलपरिभोगानुज्ञा चानवस्थादोषसंरक्षणाय भगवता न कृतेति, श्रुतज्ञानप्रामाण्यज्ञापनार्थं च, तथाहि–सामान्यश्रुतज्ञानी बाह्येन्धनसम्पर्कारुपितस्वरूपमेवाचित्तमिति व्यवहरन्ति जलं, न पुनर्निरिन्धनमेवेति। अतो यद्बाह्यशस्त्रसंपर्कात्परिणामान्तरापन्नं वर्णादिभिस्तदचित्तं साधुपरिभोगाय कल्पते। इत्याचाराङ्गप्रथमश्रुत-

स्कन्धप्रथमाध्ययन ३ उद्देशकवृत्तौ २३७ प्रतौ २९ पत्रे ॥ ४ ॥

केचिद्वासं प्रति विप्रतिपद्यन्ते, तेन वासविधिसत्तासूचक उपस्थापनाविधिर्लिख्यते, कः पुनरुपस्थापने विधिरित्यत्रोच्यते—

शोभनेषु तिथिकरणनक्षत्रमुहूर्त्तेषु द्रव्यक्षेत्रभावेषु च भगवता प्रतिकृतीरभिवन्द्य प्रवर्द्धमानाभिः स्तुतिभिरथ पादपतितोत्थितः सूरिः सह शिष्येण महाव्रतारोपणप्रत्ययं कायोत्सर्गमुत्सार्यैकैकं महाव्रतमादित आरभ्य त्रिरुच्चारयेद्यावन्निशिभुक्तिविरतिरविकला त्रिरुच्चारिता पश्चादिदं त्रिरुच्चारितव्यम्—" इच्चेइयाइं पंच महव्वयाइं राइभोयणवेरमणछट्ठाइं अत्तहियट्ठयाए उवसंपज्जित्ताणं विहरामि " पश्चाद्वन्दनकं दत्त्वोत्थितोऽवनताङ्गयष्टिः सन्दिशत किं भणामीति भणति । सूरिः प्रत्याह—वन्दित्वाऽभिधत्स्वेत्येवमुक्तोऽभिवन्द्योत्थितो भणति, युष्माभिर्मम महाव्रतान्यारोपितानीच्छाम्यनुशिष्टिमिति । आचार्योऽपि प्रणिगदति, निस्तारकपारगो भवाचार्यगुणैर्वर्द्धस्व, वचनविरतिसमनन्तरं च सुरभिवासचूर्णमुष्टिं शिष्यशिरसि किरति, पश्चाद्वन्दनकं दत्त्वा प्रदक्षिणीकरोत्याचार्यं नमस्कारमावर्त्तयन्, पुनरपि वन्दते । तथैव च करोति सकलक्रियानुष्ठानम् । एवं त्रिः प्रदक्षिणीकृत्य विरमति शिष्यः । शेषाः साधवश्चास्य मूर्ध्नि युगपद्वासमुष्टिं विमुञ्चन्ति सुरभिपरिमलान् यतिजनसुलभकेसराणि वा । पश्चात्कारितकायोत्सर्गः सूरिरभिदधातिगणस्तव कोटिकः, स्थानीयं कुलम्, वैराख्या शाखा, अमुकाभिधान आचार्य उपाध्यायश्च । साध्व्याः प्रवर्त्तिनी तृतीयोद्दे-

ष्टव्या। यथासन्नं चोपस्थाप्यमाना रत्नाधिका भवन्ति। पश्चादाचाम्लं निर्विकृतिकं वा स्वगच्छसन्ततिसमायातं समाचरन्ति। इत्याचाराङ्गप्रथमश्रुतस्कन्धशस्त्रपरिज्ञाध्ययनसप्तमोद्देशकान्ते 'तं परिण्णाय मेहावीति' गाथावृत्तौ २३७ प्रतौ ४७ पत्रे ॥ ५॥

देवानामपि जरासद्भावोऽस्तीति जिज्ञासया लिख्यते—

"जरामच्चुवसोवणीए नरे सततं मूढे धम्मं नाभिजाणइत्ति"। वृत्तिर्यथा 'जरा इत्यादि' जरा च मृत्युश्च ताभ्यामात्मवशमुपनीतो नरः प्राणी सततमनवरतं मूढो महामोहेन मूढमतिर्धर्मं स्वर्गापवर्गमार्गं नाभिजानीते नाभिगच्छति। तत्संसारे स्थानमेव नास्ति यत्र जरामृत्यू न स्तः। देवानां जराऽभावः? इति चेन्न तत्राप्युपान्त्यकाले लेश्याबलसुखवर्णप्रभुत्वहान्युपपत्तेरस्त्येव तेषामपि जरासद्भावः। उक्तं च—"देवाणं भंते! सव्वे समवन्ना? नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चति?, गोयमा! देवा दुविहा पण्णत्ता। तंजहा–पुव्वोववन्नगा य पच्छोववन्नगा य। तत्थ णं जे ते पुव्वोववन्नगा ते णं अविसुद्धवन्नयरा। जे णं पच्छोववन्नगा ते विसुद्धवन्नयरा" एवं लेश्यास्वपीति। च्यवनकाले तु सर्वस्यैवैतद्भवति, तद्यथा—"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः। दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रंशो वेपथुश्चारतिश्च ॥ १॥" इत्याचाराङ्गप्रथमश्रुतस्कन्धतृतीयाध्ययनप्रथमोद्देशकवृत्तौ २३७ प्रतौ ९६ पत्रे ॥ ६॥

केचित्केवलिशरीरात्सर्वथा जीवविराधना न भवतीत्यूचुः। आगमाज्ञया तु केवलिनां यावच्छैलेशीप्रति-

पन्नानामपि शरीरादवश्य भाविनया जायमाना जीवविराधना न विरुध्यते । कर्मबन्धवैचित्र्यं भवतु नाम। इत्यर्थविजिज्ञापयिषया लिख्यते—

" एगया गुणसमितस्स रीयतो कायफासमणुचिन्ना एगतिया पाणा उद्दायतित्ति "। वृत्तिर्यथा–एकदा कदाचिद्गुणसमितस्य गुणयुक्तस्याप्रमत्तयतेः रीयमाणस्य सम्यगनुष्ठानवतोऽभिक्रामतः प्रतिक्रामतः सङ्कुचतः प्रसारयतो विनिवर्त्तमानस्य सपरिमृजतः कस्याञ्चिदवस्थाया कायः शरीर तत्संस्पर्शमनुचीर्णाः कायसङ्गमागताः सपातिमादयः प्राणिन एके परितापमाप्नुवन्त्येके ग्लानतामुपयान्त्येके च ध्वंसमापद्यन्ते । अपश्चिमावस्था तु सूत्रकृदेव दर्शयति–एके प्राणाः प्राणिनोऽपद्रान्ति प्राणैर्विमुच्यंते । अत्र च कर्मबन्ध प्रति विचित्रता । तथाहि–शैलेश्यवस्थाया मशकादीनां कायसंस्पर्शेन प्राणत्यागेऽपि बन्धोपादानकारणयोगाभावान्नास्ति बन्धः । उपशान्त-११क्षीणमोह१२सयोगिकेवलिना १३ स्थितिनिमित्तकषायाभावात्सामयिकः। अप्रमत्तयतेर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतोऽन्त'कोटाकोटी स्थितिरिति । प्रमत्तस्य त्वनाकुट्टिकयोपेत्य प्रवृत्तस्य क्वचित्पाण्याद्यवयवसंस्पर्शात्प्राण्युपतापनादौ जघन्यतः कर्मबन्ध उत्कृष्टतश्च प्राक्तन एव विशेषिततर इत्यादि । इत्याचाराङ्गप्रथमश्रुतस्कन्धपञ्चमलोकसाराध्ययनचतुर्थोद्देशकवृत्तौ २३७ प्रतौ १३२ पत्रे ॥ ७॥

अभव्यस्य भव्यत्वाभव्यत्वशङ्का न स्यादित्यभिप्रायो लिख्यते—

" सिया वेगे अणुगच्छन्ति असिया वेगे अणुगच्छति अणुगच्छमाणेहिं अणणुगच्छमाणे कहं न निव्विज्जे"।

वृत्तिर्यथा–'सिया इत्यादि' सिताः पुत्रकलत्रादिभिरवबद्धाः, वाशब्द उत्तरापेक्षया पक्षान्तरमाह, "एगे अणुगच्छंतित्ति", एके लघुकर्माणः सम्यक्त्वं प्रतिपादयन्तमाचार्यमनुगच्छन्त्याचार्योक्तं प्रतिपद्यन्ते। तथा, असिता वा गृहपाशविमुक्ता वैके विचिकित्सावादरहिता आचार्यमार्गमनुगच्छन्ति, तेषां च मध्ये यदि कश्चित्कङ्कटुकदेश्यः स्यात्, स तान् प्रभूताननपाचीनमार्गप्रतिपन्नानवलोक्यासावपि कर्मविवरतः प्रतिपद्येताऽपीति दर्शयितुमाह–'अणुगच्छमाणेहिं इत्यादि' आचार्योक्तं सम्यक्त्वमनुगच्छद्भिर्विरतैर्विरताविरतैः सह संवसंस्तैर्वा चोद्यमानोऽननुगच्छन्नप्रतिपद्यमानः कथं न निर्वेदं गच्छेद्? असदनुष्ठानस्य मिथ्यात्वादिरूपां विचिकित्सां परित्यज्याचार्योक्तं सम्यक्त्वमेव प्रतिपद्यत इत्यर्थः। यदि वा सितासितैराचार्योक्तमनुगच्छद्भिर्बुध्यमानैः सद्भिः कश्चिदज्ञानोदयान्मतिजाड्यतया क्षपकादिश्चिरप्रव्रजितोऽप्यननुगच्छन्ननवधारयन् कथं न निर्विद्येत न निर्वेदं तपःसंयमयोर्गच्छेत्? निर्विण्णश्चेदमपि विभावयेद्यथा नाहं भव्यः स्यां न च मे संयतभावोऽप्यस्तीति, यतः स्फुटविकटमपि कथितं नावगच्छामि, एवं च निर्विण्णस्याचार्याः समाधिमाहुः, यथा–भो साधो! मा विषादमवलम्बिष्ठाः, भव्यो भवान् यतो भवता सम्यक्त्वमभ्युपगतं तच्च न ग्रन्थिभेदमृते तद्भेदश्च न भव्यत्वमृतेऽभव्यस्य हि भव्याभव्यशङ्काया अभावादिति भावः। किं चायं विरतिपरिणामो द्वादशकषायक्षयोपशमाद्यन्यतमसद्भावे सति भवति, स च भवतावाप्तः। तदेवं दर्शनचारित्रमोहनीये भवतः क्षयोपशमं समागते दर्शनचारित्रान्यथानुपपत्तेः। यत्पुनः कथ्यमानेपि समस्तपदार्थावगतिर्न भवति, तज्ज्ञानावरणीयविजृम्भितम्। तत्र च श्रद्धानरूपं सम्यक्त्वमालम्बनमित्याह। इत्याचाराङ्गप्रथमश्रुतस्कन्ध-

पञ्चमलोकसाराध्ययनपचमोद्देशके २३७ प्रतौ १३६ पत्रे ॥ ८ ॥

केषाञ्चित्सिद्धान्ततात्पर्यानभिज्ञानामेकान्ततो दयाविडम्बिना 'सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता न हतव्वा' इत्याद्युपदेष्टा कथं भगवान् जलपुष्पजीवोपमर्दिनीं प्रतिमापूजामुपदिशति ? इत्यादि वृथावावदूकानामुत्सर्गापवादाद्यनेकविचारवितानगहनश्रीजिनागमसूत्रवैचित्र्यदर्शनाय तादृशं चक्रवर्त्तिगन्धपेषिकापेषणादनचित्तीभवदसंख्यातजीवात्मकमपि लवणमजानता गृहीतं तत्स्वामिना चानुज्ञातं कारणात्स्वयं भुञ्जीत साधर्मिकेभ्यो वा दद्यात्साधुरिति सूत्रार्थौ लिख्येते—

"से भिक्खू वा भिक्खुणी वा जाव समाणे सिया परो अभिहट्टु अंतो पडिग्गहंसि बिडं वा लोणं उब्भियं वा लोणं परिभाएत्ता णीहट्टु दलएज्जा तहप्पगारं पडिग्गहं परहत्थंसि वा परपायंसि वा अफासुयं जाव नो पडिगाहेज्जा। से आहच्च पडिग्गाहिते सिया तं च णातिदूरगए जाणिज्जा से तमायाए तत्थ गच्छेज्जा। पुव्वामेव आलोएज्जा—आउसोत्ति भइणित्ति वा इमं ते किं जाणया दिन्नं उदाहु अजाणया दिन्नं? सो अ भणेज्जा णो खलु मए जाणया दिन्नं अजाणया दिन्नं, कामं खलु आउसो इयाणिं निसिरामि तं भुंजह च णं परिभाएह च णं। तं परेहिं समणुण्णायं समणुसिट्ठं तत्तो संजयामेव भुंजेज्ज वा पिएज्ज वा जं च णो संचाएति भोत्तए वा पायए वा साहम्मिया तत्थ वसंति संभोइया समणुण्णा अपरिहारिया अदूरगया तेसिमणुप्पदायव्वं सिया" इति। वृत्तिर्यथा—'से इत्यादि' स भिक्षुर्गृहादौ प्रविष्टस्तस्य स्यात्कदाचित् परो गृहस्थः। 'अभिहट्टु अंतो इति' अन्तः प्रविश्य पतद्गृहे काष्ठच्छव-

कादौ ग्लानाद्यर्थं खण्डादियाचने सति बिडं वा लवणं खनिविशेषोद्भवमुद्भिजं वा लवणाकराद्युत्पन्नं "परिभाएत्ताणि" दातव्यं विभज्य दातव्यद्रव्यात्किञ्चिदंशं गृहीत्वेत्यर्थः, निःसृत्य दद्यात्तथाप्रकारं परहस्तादिगतमेव प्रतिषेधयेत्तच "आहच्चत्ति" सहसा प्रतिगृहीतं भवेत्तं च दातारमदूरगतं ज्ञात्वा स भिक्षुस्तल्लवणादिकमादाय तत्समीपं गच्छेत्। गत्वा च पूर्वमेव तल्लवणादिकमालोकयेद्दर्शयेदेतच्च ब्रूयात्, अमुक इति वा, भगिनी इति वा । एतल्लवणादिकं त्वया जानता दत्तमुताजानता ? एवमुक्तः सन् पर एवं वदेद्यथा–पूर्वं मया जानता दत्तं साम्प्रतं तु यदि भवतोऽनेन प्रयोजनं ततो दत्तमेतत्परिभोगं कुरुध्वम्। तदेवं परैः समनुज्ञातं समनुसृष्टं सत्प्रासुकं कारणवशादप्रासुकं वा भुञ्जीत पिबेद्वा। यच्च न शक्नोति भोक्तुं वा पातुं वा तत्साधर्मिकेभ्यो दद्यात्तदभावे च बहुपर्यापन्नविधिं प्राक्तनं विदध्यादेतत्तस्य भिक्षोः सामग्र्यम् । इत्याचाराङ्गद्वितीयश्रुतस्कन्धपिण्डैषणाध्ययनदशमोद्देशके २३७ प्रतौ २०३ पत्रे ॥९॥

इह हि केचिच्चिरन्तनाज्ञानवासनातिमिरनिरुद्धान्तरदृशः परमकृपापीयूषपूरपूतान्तरश्रीजिनेश्वराज्ञैकजीवितां परमार्थदयामजानाना मणिबुद्ध्या ग्रहिलगृहीतोपलशकलन्यायेन स्वमनीषिकाविजृम्भितमेव श्रेयो मन्यमानाः पारगतप्रतिमापूजानिषेधादि यत्किञ्चिद्ब्रुवते, न च तत्तेषां सूत्राज्ञया विहरतां नद्याद्युत्तरतां कारणाद् वृक्षाद्यवलम्बतामाद्यव्रतरक्षणक्षमं द्वितीयव्रतरक्षणक्षमं च । तस्मादाज्ञामनोज्ञैव दयाऽऽश्रयणीया । अन्यथा दयाज्ञयोर्विरोधापत्तिः स्यादिति दर्शनाय लिख्यते—

"से भिक्खू वा भिक्खुणी वा गामाणुगामं दूइज्जमाणे वा अंतरा से वप्पाणि वा फलिहाणि वा

पागाराणि वा तोरणाणि वा अग्गलाणि वा अग्गलपासगाणि वा गड्डाओ वा दरिओ वा सते परक्कमे सजयामेव परक्कमेज्जा नो उज्जुअ गच्छेज्जा । केवली बूया आयाणमेय, से तत्थ परक्कममाणे पयलेज्ज वा पवडेज्ज वा से तत्थ पयलमाणे वा पवडमाणे वा रुक्खाणि वा गुम्माणि वा लयाओ वा वल्लीओ वा तणाणि वा गहणाणि वा हरिताणि वा अवलबिय अवलबिय उत्तरेज्जा से (जे) तत्थ पाडिपहिया उवागच्छति ते पाणी जाएज्जा तओ सजयामेव अवलबिय अवलबिय उत्तरेज्जा तओ सजयामेव गामाणुग्गामं दूइज्जेज्जत्ति ।" वृत्तिर्यथा—'से इति' स भिक्षुर्ग्रामान्तराले यदि वप्रादिक पश्येत्ततः सत्यन्यस्मिन् सत्क्रमे तेन ऋजुना पथा न गच्छेद्यतस्तत्र गर्त्तादौ पतन् सचित्त वृक्षादिकमवलम्बेत्तचायुक्तमथ कारणिकस्तेनैव गच्छेत् । कथञ्चित्पतितश्च गर्तगतो वल्ल्यादिकमवलम्ब्य प्रातिपथिकहस्त वा याचित्वा सयत एव गच्छेत् । इत्याचाराङ्गद्वितीयश्रुतस्कन्धतृतीयाध्ययनद्वितीयोद्देशके २३७ प्रतौ २१९ पत्रे ॥ १० ॥

आस्तामगीतार्थाना सभासमक्ष व्याख्यानकरणादि, अविदितैतत्षोडशविधवचनाना जल्पनमप्यनुचितमित्यभिप्रायो लिख्यते—

"समियाए सजए भास भासेज्जा । तजहा—एगवयण १ दुवयण २ बहुवयण ३ इत्थीवयण ४ पुरिसवयण ५ नपुसगवयण ६ अज्झत्थवयण ७ उवनीतवयण ८।१ अवणीयवयण ९।२ उवणीयअवणीयवयण १०।३ अवणीयउवणीयवयणं ११ । तीयवयण १२ पडुप्पन्नवयण १३ अणागयवयण १४ पचक्खवयण १५ परोक्खवयण १६ । से एगवयण

वदिस्सामीति एगवयणं वदेज्जा जाव परोक्खवयणं वदिस्सामीति परोक्खवयणं वएज्जा।" वृत्तिर्यथा—भाषासमित्या समतया वा रागद्वेषाकरणलक्षणया षोडशवचनविधिज्ञो भाषां भाषेत। यादृग्भूता च भाषितव्या तां षोडशवचनविधिगतां दर्शयति, तद्यथेत्ययमुपदर्शनार्थः—एकवचनं वृक्षः१ द्विवचनं वृक्षौ २ बहुवचनं वृक्षाः३ इति। स्त्रीवचनं वीणा कन्या इत्यादि४। पुंवचनं घटः पट इत्यादि५। नपुंसकवचनं पीठं देवकुलमित्यादि ६। अध्यात्मवचनं आत्मन्यधि अध्यात्मं हृदयगतं तत्परिहारेणान्यद्भणिष्यतस्तदेव सहसा पतितम् ७। उपनीतवचनं प्रशंसावचनं यथा रूपवती स्त्री ८। तद्विपर्ययेणापनीतवचनं, यथेयं रूपहीनेति ९। उपनीतापनीतवचनं कश्चिद् गुणः प्रशस्यः कश्चिन्निन्द्यः, यथा रूपवतीयं स्त्री किं त्वसद्वृत्तेति १०। अपनीतोपनीतवचनं यथाऽरूपवती कुरूपा स्त्री किं तु सद्वृत्तेति११। अतीतवचनं कृतवान्१२। वर्त्तमानवचनं करोति१३। अनागतवचनं करिष्यति १४। प्रत्यक्षवचनमेष देवदत्तः१५। परोक्षवचनं स देवदत्तः१६। इत्येतानि षोडशवचनान्यमीषां च स भिक्षुरेकार्थविवक्षायामेकवचनमेव ब्रूयाद्यावत्परोक्षवचनमेव ब्रूयात्। इत्याचाराङ्गद्वितीयश्रुतस्कन्धचतुर्थभाषाध्ययनप्रथमोद्देशके २३७ प्रतौ २२१ पत्रे ॥ ११ ॥

निर्लक्षण उपधिर्ज्ञानदर्शनचारित्रोपघातकारित्वान्मुनिभिर्न रक्षणीय इत्यभिप्रायजिज्ञापयिषया लिख्यते—

"से भिक्खू वा भिक्खुणी वा से जं पुण वत्थं जाणिज्जा अप्पंडं जाव संताणगं अनलं अथिरं अधुवं अधारणिज्जं रोइज्जंतं न रोचइ तहप्पगारं वत्थं अफासुअं जावनो पडिगाहेज्जा" इति। वृत्तिर्यथा—'से भिक्खू इत्यादि' स

भिक्षुर्यत्पुनरेवंभूत वस्त्र जानीयात्तद्यथा-अल्पाण्ड यावदल्पसन्तानकं किं त्वनलमभीष्टकार्यासमर्थ हीनादित्वा-त्तथाऽस्थिर जीर्जमध्रुव स्वल्पकालानुज्ञापनात्तथाऽधारणीयमप्रशस्तदेश खञ्जनादिकलङ्काङ्कितत्वात्, तथा चोक्तम्-" चत्तारि देवया भागा, दुवे भागा य माणुसा । आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥१॥ देवेसु उत्तमो लाभो, माणुसेसु अ मज्झिमो । आसुरेसु अ गेलन्न, मरण जाण रक्खसे॥ २॥ " किं च-' लक्खणहीणो उवही, उवहणइ णाणदसणचरित्तमित्यादि'। तदेवभूत-मप्रायोग्य रोच्यमान प्रशस्यमान दीयमानमपि दात्रा न रोचते साधवे न कल्पत इत्यर्थः॥ इत्या-चाराङ्गद्वितीयश्रुतस्कन्धपञ्चमाध्ययनप्रथमोद्देशके २३७ प्रतौ २२३ पत्रे ॥ १२॥

| | | |
|---|---|---|
| देव | असुर | देव |
| मनुष्य | राक्षस | मनुष्य |
| देव | असुर | देव |

इद वस्त्रविभागयन्त्रम्।

वस्त्रपरिकर्मणा साधूनामनुचितेति जिज्ञापयिषया लिख्यते—

" से भिक्खू वा भिक्खुणी वा अहेसणिज्जाइ वत्थाइ जाइज्जा अहापरिग्गहियाइ वत्थाइ धारेज्जा नो धोएज्जा नो रएज्जा नो धोअरत्ताइ वत्थाइ धारेज्जा अपलीउचमाणे गामंतरेसु ओमचेलिए एत खलु वत्थधारिस्स सामग्गिय " इति । वृत्तिर्यथा-' से भिक्खू इत्यादि ' स भिक्षुर्येषणीयान्यपरिकर्माणि वस्त्राणि याचेत यथापरिगृहीतानि च धारयेन्न तत्र किञ्चित्कुर्यादिति दर्शयति। तद्यथा-न तद्वस्त्र गृहीत सत्प्रक्षालयेन्नाऽपि रञ्जयेत्तथा नाऽपि बाकुशिकतया धौतरक्तानि धारयेत्तथाभूतानि न गृह्णीयादि-त्यर्थः । तथाभूताधौतरक्तवस्त्रधारी च ग्रामान्तरे गच्छन् "अपलिउचमाणेत्ति" अगोपयन् सुखेनैव गच्छे-

१ जाणेज्जा

यतोऽसावयमचेलिकोऽसारवस्त्रधारीत्येतत्तस्य भिक्षोर्वस्त्रधारिणः सामग्र्यं संपूर्णो भिक्षुभावो । यदेवंभूतवस्त्रधारणमित्येतच्च सूत्रं जिनकल्पिकोद्देशेन द्रष्टव्यम् । वस्त्रधारित्वविशेषणाद्गच्छान्तर्गतेऽपि चाविरुद्धम् । इत्याचाराङ्गद्वितीयश्रुतस्कन्धपञ्चमाध्यनद्वितीयोद्देशके २३७ प्रतौ २२९ पत्रे ॥ १३ ॥

केचिद्दण्डकग्रहणमनागमिकमिति वदन्ति तच्चासत्, राद्धान्ते दण्डकग्रहणस्य स्पष्टमुक्तत्वात् । न च वाच्यं कारणिकोऽयं विधिर्ग्लानादीनां नाशेषाणामिति, तथात्रानुक्तत्वात् । न च वाच्यं छत्रकवदस्याऽपि कारणिकता भावनीया, इहैवाऽग्रे वक्ष्यमाणेषु श्रीभगवतीसूत्राक्षरेषु हे आयुष्मन्! एको दण्डकस्त्वया ग्राह्योऽन्ये साधर्मिकेभ्यो देया इत्यत्र सर्वेषां ग्लानादिकताकल्पनस्याऽनुचितत्वात् । अत्रैव सूत्रकृताङ्गतरङ्गे 'पाणहाउ य छत्तं च' इत्यादिना छत्रकनिषेधवद्दण्डकनिषेधस्य कुत्राऽप्यश्रूयमाणत्वाच्चालं कल्पनया । सिद्धान्त एव प्रमाणम् । स चाऽयं लिख्यते–

"समणे भविस्सामि अणगारे अकिंचणे अपुत्ते अपसू परदत्तभोई पावं कम्मं नो करिस्सामीति समुट्ठाए, सव्वं भंते ! अदिण्णादाणं पच्चक्खामि । से अणुपविसित्ता गामं वा जाव रायहाणिं वा नेव सयं अदिन्नं गिण्हेज्जा, नेवन्नेणं अदिन्नं गिण्हावेज्जा, नेवन्नं अदिन्नं गिण्हतंपि समणुजाणेज्जा । जेहिं वि सद्धिं संपव्वइए तेसिं पि याइं भिक्खू छत्तयं वा मत्तयं वा दंडगं वा जाव चम्मच्छेयणगं वा तेसिं पुव्वामेव उग्गहं अणणुन्नविय अपडिलेहिय अप्पमज्जिय नो उगिण्हेज्ज वा पगिण्हेज्ज वा, तेसिं पुव्वामेव उग्गहं अणुन्नविअ पडिलेहिय पमज्जिय तओ संजयामेव उगिण्हेज्ज वा पगिण्हेज्ज वा" इति । वृत्तिर्यथा–'समणे इत्यादि' श्राम्यतीति श्रमणस्तपस्वी । यतोऽहमेवंभूतो

भविष्यामीति दर्शयति—'अनगारो' अगा वृक्षास्तैर्निष्पन्नमगारम्, तन्न विद्यते यस्येत्यनगारस्त्यक्तगृहवास इत्यर्थः। तथा न विद्यते किमप्यस्येत्यकिञ्चनो निष्परिग्रह इत्यर्थः । तथाऽपुत्रः स्वजनबन्धुरहितो निर्मम इत्यर्थः । एवमपशुर्द्विपदचतुष्पदादिरहितः। यत एवमतः परदत्तभोजी सन् पापं कर्म न करिष्यामीत्येवं समुत्थायैतत्प्रतिज्ञो भवामीति दर्शयति–यथा सर्वं भदन्तादत्तादानं प्रत्याख्यामि दन्तशोधनमात्रमपि परकीयमदत्तं न गृह्णामीत्यर्थः। तदनेन विशेषणकदम्बकेनापरेषां शाक्यसरजस्कादीनां सम्यक् श्रमणत्वं निराकृतं भवति, स चैवम्भूतोऽकिञ्चनः श्रमणोऽनुप्रविश्य ग्रामं वा यावद्राजधानीं वा नैव स्वयमदत्तं गृह्णीयान्नैवापरेण ग्राहयेन्नाप्यपरं गृह्णन्तं समनुजानीयात्। यैर्वा साधुभिः सह सम्यक् प्रव्रजितस्तिष्ठति तेषामपि सम्बन्ध्युपकरणमननुज्ञाप्य न गृह्णीयादिति दर्शयति—तद्यथा–'छत्रकं' इति, छद अपवारणे छादयतीति छत्रं वर्षाकल्पादि, यदि वा कारणिकः क्वचित्कोङ्कणदेशादावतिवृष्टिसंभवाच्छत्रकमपि गृह्णीयाद्यावच्चर्मच्छेदनकमप्यननुज्ञाप्याप्रत्युपेक्ष्य वाऽप्रमृज्य च नावगृह्णीयात्सकृत्प्रगृह्णीयादनेकशः। तेषां सम्बन्धि यथा गृह्णीयात्तथा दर्शयति—पूर्वमेवताननुज्ञाप्य प्रत्युपेक्ष्य चक्षुषा प्रमृज्य रजोहरणादिना सकृदनेकशो वा गृह्णीयात्। इत्याचाराङ्गद्वितीयश्रुतस्कन्धसप्तमाध्ययनप्रथमोद्देशके २३७ प्रतौ २२७ पत्रे ॥ १४ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालशालातिशालिशीलश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि श्रीआचाराङ्गकियद्विचारसमुच्चयनामा प्रथमस्तरङ्गः ॥ १ ॥

इति श्रीविचाररत्नाकरे प्रथमस्तरंगः सम्पूर्णः ।

॥ अथ द्वितीयस्तरङ्गः ॥

अनन्तचैतन्यविकासनाय, सर्वज्ञलक्ष्मीकनकासनाय।
कृतान्यतीर्थोन्नतिनाशनाय, नमो नमः श्रीजिनशासनाय ॥ १ ॥

अथ क्रमायाताः श्रीसूत्रकृताङ्गविचारा लिख्यन्ते—

इह हि केचिदसद्ग्रहग्रस्तहृदयाः प्रतिपदमालोक्यमानश्रीजिनप्रतिमाक्षरभीरवः सूत्रसूचितार्थसार्थसमर्थितान्यपि प्रकरणसिद्धान्तविवरणानि न स्वीकुर्वते, न च ते विदन्ति सिद्धान्तार्था एवैते। तत्र चागमो लिख्यते—

"सुत्तेण सूचियं चिय, अत्था तह सूचिया य जुत्ता य। तो बहुविहप्पउत्ता, एया पसिद्धा अणादीया ॥२१॥" निर्युक्तिगाथा। वृत्तिर्यथा—अर्थस्य सूचनात्सूत्रम् तेन सूत्रेण केचिदर्थाः साक्षात्सूचिताः मुख्यतयोपात्तास्तथाऽपरे सूचिता अर्थापत्त्याक्षिप्ताः। साक्षादनुपादानेऽपि दध्यानयनचोदनया तदाधारानयनचोदनावदिति। एवं च कृत्वा चतुर्दशपूर्वविदः परस्परं षट्स्थानपतिता भवन्ति। तथा चोक्तम्— "अक्खरलंभेण समा, ऊणहिया होंति मतिविसेसेहिं। ते वि य मईविसेसा, सुयनाणब्भिंतरे जाण ॥ १ ॥" तत्र ये साक्षादुपात्तास्तान् प्रति सर्वेऽपि तुल्याः, ये पुनः सूचितास्तदपेक्षया कश्चिदनन्तभागाधिकमर्थं वेत्त्यपरोऽसंख्येयभागाधिकमन्यः संख्येयभागाधिकं तथाऽन्यः संख्येयासंख्येयानन्तगुणमिति। ते च सर्वेऽपि युक्ता युक्त्युपपन्नाः सूत्रोपात्ता एव वेदितव्याः। तथा चोक्तम्—'ते वि य मईविसेसा' इत्यादि, ननु किं सूत्रोपात्तेभ्योऽन्येऽपि केचनार्थाः सन्ति येन तदपेक्षया चतुर्दशपूर्वविदां षट्स्थान-

पतित्वमुद्घुष्यते, याः विद्यन्ते, यतोऽभिहितम् "पण्णवणिज्जा भावा, अणंतभागो उ अणभिलप्पाणं । पण्णवणिज्जाण पुण, अणंतभागो सुयनिबद्धो ॥१॥" इति श्रीसूत्रकृताङ्गप्रथमश्रुतस्कन्धप्रथमाध्ययने २७१ प्रतौ ५ पत्रे ॥१॥

अधिकरणकारि वचनं वदतः साधोर्भूयसी हानिर्भवतीति यतिजनजिज्ञापयिषया लिख्यते—

"अहिगरणकडस्स भिक्खुणो, वयमाणस्स पसज्झ दारुणं । अट्ठे परिहायइ बहु, अहिगरणं न करेज्ज पंडिए ॥ १९ ॥" 'अहिगरण' इत्यादि, अधिकरणं कलहस्तत्करोति तच्छीलश्चेत्यधिकरणकरस्तस्यैवम्भूतस्य भिक्षोस्तथाऽधिकरणकरीं दारुणां वा भयानकां प्रसह्य प्रकटमेव वाचं ब्रुवतः सतोऽर्थो मोक्षस्तत्कारणभूतो वा संयमः स बहुः परिहीयते ध्वंसमुपयाति इदमुक्तं भवति, बहुना कालेन यदर्जितं विकृष्टेन तपसा महत्पुण्यं तत्कलहं कुर्वतः परोपघातिनीं वाचं ब्रुवतस्तत्क्षणमेव ध्वंसमुपयाति। तथा हि—"जं अज्जियं समीखल्लएहिं तवनियमबंभमईएहिं । मा हु तयं छड्डेहह, कलहंता सागपत्तेहिं ॥ १ ॥" इत्येवं मत्वा मनागप्यधिकरणं न कुर्यात्पण्डितः सदसद्विवेकी । इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धद्वितीयवैतालीयाध्ययने द्वितीयोद्देशकवृत्तौ २७१ प्रतौ ४२ पत्रे ॥ २ ॥

दुःकर्मवशतो नारका अशुच्यादिविरूपमाहारमाहारयन्तीति जिज्ञासया लिख्यते—

"ते हम्ममाणा णरगे पडंति, पुन्ने दुरूवस्स महाभितावे । ते तत्थ चिट्ठंति दुरूवभक्खी, तुट्टंति कम्मोवगया किमीहिं ॥ २० ॥" ते वराका नारका हन्यमानास्ताड्यमाना नरकपालेभ्यो नष्टा अन्यस्मिन् घोरतरे नरकैकदेशे पतन्ति गच्छन्ति । किंभूते नरके? पूर्णे भृते, दुष्टं रूपं यस्य तद्दुरूपम् विष्ठाऽसृग्मांसादिकमलं तस्य भृते । तथा

॥ ९ ॥ महाभितापेऽतिसन्तापोपेते ते नारकाः स्वकर्मावबद्धास्तत्रैवंभूते नरके दुरूपंभक्षिणोऽशुच्यादिभक्षकाः प्रभूतं कालं यावत्तिष्ठन्ति । तथा कृमिभिर्नरकपालापादितैः परस्परकृतैश्च स्वकर्मोपगताः स्वकर्मढौकितास्तुद्यन्ते व्यथ्यन्त इति । तथा चागमः–"छट्ठीसत्तमीसु णं पुढवीसु नेरइया पहू महंताइं लोहियकुंथुरूवाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा समतुरंगेमाणा अणुघायमाणा अणुघायमाणा चिट्ठंति" । इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धे निरयविभक्तिनामपञ्चमाध्ययनेप्रथमोद्देशे २७१ प्रतौ ७७ पत्रे ॥ ३ ॥

न च परभवकृतमेव कर्मात्र भुज्यते, अत्र कृतं परत्रैव भोक्तव्यमिति निर्भेदकता। नापि च–'अत्युग्रपापपुण्यानामिहैव फलमाप्यते' इदं लौकिकमेव, आगमेऽप्यस्य श्रूयमाणत्वात्। स चायम्–

"अस्सिं च लोए अदुवा परत्था, सयग्गसो वा तह अन्नहा वा। संसारमावन्न परं परं ते, बंधंति वेयंति य दुन्नियाइं ॥ ४ ॥" 'अस्सिं च' इत्यादि, यान्याशुकारीणि कर्माणि तान्यस्मिन्नेव जन्मनि विपाकं ददति, अथवा परस्मिन् जन्मनि नरकादौ तस्य कर्मविपाकं ददाति। एकस्मिन्नेव जन्मनि विपाकं तीव्रं ददति, शताग्रशो वेति बहुषु जन्मसु। येनैव प्रकारेण तदशुभमाचरन्ति तथैवोदीर्यते तथाऽन्यथा चेति, इदमुक्तं भवति, किञ्चित्कर्म तद्भव एव विपाकं ददाति किञ्चिज्जन्मान्तरे, यथा मृगापुत्रस्य दुःखविपाकाख्ये विपाकश्रुताङ्गश्रुतस्कन्धे कथितमिति। दीर्घकालस्थितिकं परजन्मान्तरकृतं वेद्यते, येन प्रकारेण सकृत्तथैवाऽनेकशो वा। यदि वान्येन प्रकारेण ॥ २ ॥
सकृत्सहस्रशो वा शिरश्छेदादिकं हस्तपादच्छेदादिकं चानुभूयत इति। तदेवं ते कुशीला आयतदण्डाश्चतुर्ग-

तिकससारमापन्ना अरघट्टघटीयन्त्रन्यायेन ससारसागरं पर्यटन्तः पर पर प्रकृष्ट प्रकृष्ट दुःखमनुभवन्ति । जन्मान्तरकृत कर्मानुभवन्तश्चैकमार्त्तध्यानोपहता अपर बध्नन्ति वेदयन्ति च, दुष्ट नीतानि दुर्नीतानि दुष्कृतानि । न हि स्वकृतस्य कर्मणो विनाशोऽस्तीति भावः । तदुक्तम्–"मा रोहि रे विसन्नो, जीव तुम विमणदुम्मणो दीणो । ण हु चितिएण फिटइ, त दुक्ख जं पुरा रइय ॥ १ ॥ जइ पविससि पायालं, अडवि व दरिं गुह समुद्द वा । पुव्वकयाओ न चुक्कसि, अप्पाण घाइसे जइ वि ॥ २ ॥" एव तावदोघत' कुशीलाः प्रतिपादिताः । इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धससमकुशीलाध्ययने २७१ प्रतौ ९२ पत्रे ॥४॥

सन्निधिदोषदुष्टस्य स्नातुर्वस्त्रविभूषणप्रक्षालनादिकारिणश्च दूरे संयम इत्यर्थप्रतिपादनपरा सार्धा सूत्रगाथा लिख्यते–

"जे धम्मलद्धु वि निहाय भुजे, वियडेण साहट्टु य जे सिणाइ । जो धावई लूसई य वत्थ, अथाहु से नागणियस्स दूरे ॥ २२ ॥" ये केचन शीतलविहारिणो धर्मेण सुधिकया लब्ध धर्मलब्धमौद्देशिकक्रीतकृतादिदोषरहितमित्यर्थः । तदेवभूतमप्याहारजात निधाय व्यवस्थाप्य सन्निधि कृत्वा भुञ्जते । तथा ये विकटेन प्रासुकोदकेनापि सङ्कोच्याङ्गानि प्रासुक एव प्रदेशे देशसर्वस्नान कुर्वन्ति । तथा यो वस्त्र धावति प्रक्षालयति तथा लूषयति शोभार्थम् । दीर्घ सत्पाटयित्वा ह्रस्व करोति ह्रस्व वा सन्धाय दीर्घ करोति, एवं लूषयति । तदेव स्वार्थ परार्थ वा यो वस्त्र लूषयति । अथासौ "नागणियस्स त्ति" निर्ग्रन्थभावस्य सयमानुष्ठानस्य दूरे वर्तते, न तस्य संयमो भवतीत्येवं तीर्थकरगण-

धरादय आहुः। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धकुशीलपरिभाषानाम्नि सप्तमाध्ययने २७१ प्रतौ ९६ पत्रे ॥ ५ ॥

परिणतपत्रफलशाकाद्यादरणे तु तत्तत्कालीनसंविग्नगीतार्थाचारणैव प्रमाणं, परं सर्वथा निषिद्धत्वं तु न संभाव्यते, यतोऽत्र तात्पर्यतोऽपरिणतानामेव निषेधस्य टीकाकारव्याख्यातत्वात्। सा गाथा चेयम्—

"कम्मं परिन्नाय दगंसि धीरे, विअडेण जीविज्जइ आदिमोक्खं। से बीअकंदाइ अभुंजमाणे, विरए सिणाणाइसु इत्थिआसु॥२२॥" "कम्मं परिन्नाय" इत्यादि, धिया राजत इति धीरो बुद्धिमान् 'दगंसि त्ति' उदकसमारम्भे सति कर्मबन्धो भवतीति परिज्ञाय किं कुर्यादित्याह—विकटेन प्रासुकोदकेन सौवीरादिना जीव्यात्प्राणधारणं कुर्यात्। च शब्दादन्येनाप्याहारेण प्राशुकेनैव प्राणवृत्तिं कुर्यात्। आदिः संसारस्तस्मान्मोक्ष आदिमोक्षः संसारविमुक्तिं यावदिति, धर्मकारणानां वादिभूतं शरीरं तद्विमुक्तिं यावत्, यावज्जीवमित्यर्थः। किं चासौ साधुर्बीजकन्दादीनभुञ्जानः। आदिग्रहणान्मूलपत्रफलादीनि गृह्यन्ते, एतान्यप्यपरिणतानि परिहरन् विरतो भवति। कुतः? इति दर्शयति—स्नानाभ्यङ्गोद्वर्त्तनादिक्रियासु निःप्रतिकर्मशरीरतयाऽन्यासु च चिकित्सादिक्रियासु न वर्त्तते, तथा स्त्रीषु च विरतः। वस्तिनिरोधग्रहणादन्येऽप्याश्रवा गृह्यन्ते। यश्चैवंभूतः सर्वेभ्योऽप्याश्रवद्वारेभ्यो विरतो नासौ कुशीलदोषैर्युज्यते, तदयोगाच्च न संसारं बम्भ्रमीति। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धकुशीलपरिभाषानाम्नि सप्तमाध्ययने २७१ प्रतौ ९६ पत्रे ॥ ६ ॥

मुनीनामाहाराद्यर्थं गृहस्थप्रशंसनं परमापायकारणमिति जिज्ञापयिषया लिख्यते—

"णिक्खम्म दीण परभोयणंमि, मुहमगलिए उदराणुगिद्धे । नीवारगिद्धे व महावराहे, अदूरए एहति घातमेव ॥ २५ ॥" यो ह्यात्मीय धनधान्यहिरण्यादिक त्यक्त्वा निष्क्रान्तो निष्क्रम्य च परभोजने पराहारविषये दीनो दैन्यमुपगतो जिह्वेन्द्रियवशादार्त्तो वन्दिवन्मुखमाङ्गलिको भवति, मुखेन मङ्गलानि प्रशसावाक्यानीदृशस्तादृशस्त्वमित्येव दैन्यभावमुपगतो वक्ति। यदुक्तम्–"सो एसो जस्स गुणा, विअरतनिवारिया दसदिसासु। इहरा कहासु सुव्वसि, पच्चक्ख अज्ज दिट्ठोसि ॥ १ ॥" इत्येवमौदर्ये प्रतिगृद्धोऽध्युपपन्नः किमिव ? नीवारः शूकरादिमृगभक्ष्यविशेषस्तस्मिन् गृद्ध आसक्तमना गृहीत्वा च स्वयूथ महावराहो महाकाय शूकरः, स चाहारमात्रगृद्धोऽतिसङ्कटे प्रविष्टः सन्नदूर एव शीघ्रमेव घात विनाशमेष्यति प्राप्स्यति। एवकारोऽवधारणे। अवश्यं तस्य विनाश एव नापरा गतिरस्तीति। एवमसावपि कुशील आहारमात्रगृद्धः संसारोदरे पौन पुन्येन विनाशमेवैति। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धकशीलपरिभाषानाम्नि सप्तमाध्ययने २७१ प्रतौ ०७ पत्रे ॥ ७ ॥

साधूना परस्परक्रिया "अह त्वदीय पात्र सज्जीकरोमि, त्व मदीय वस्त्र सज्जीकुरु" इत्यादिरूपा न कल्पते इत्यादिप्रतिपादनपरा गाथा लिख्यते—

"पाणहाउ य छत्त च, णालीय वालवीयण । परकिरिय अन्नमन्न च त विज्जं परिजाणिया ॥ १८ ॥" उपानहौ काष्ठपादुके च, तथा तापादिनिवारणाय छत्रं, तथा नालिका द्यूतक्रीडाविशेषस्तथा वालैर्मयूरपिच्छैर्वा व्यजनक, तथा परेषा सम्बन्धिनी क्रियामन्योन्य परस्परतोऽन्यनिष्पाद्यामन्यः करोत्यपरनिष्पाद्या चापर इति, चः

समुच्चये, तदेतत्सर्वं विद्वान् पण्डितः कर्मोपादानकारणत्वेन ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेदिति । इति श्रीसूत्रकृताङ्गप्रथमश्रुतस्कन्धनवमधर्माध्ययने २७१ प्रतौ १०२ पत्रे ॥ ८ ॥

केचिदविदितपरमार्थाः "पाडिहारियपीढफलग" इत्यादि दर्शयन्तो गृहस्थवस्त्रव्यापारणं स्वीकुर्वते तच्चासङ्गतम् । येन 'पाडिहारिय' इति, प्रतिगृहीतत्वेन पीठफलकादिविशेषणं मन्तव्यम् । तथैव च गृहस्थवस्त्रपात्रभोगनिषेधः श्रूयते सिद्धान्ते, स चायम्—

" परमत्ते अन्नपाणं न भुंजेज्ज कयाइ वि । परवत्थं अचेलो वि, तं विज्जं परिजाणिया ॥ २० ॥" "परमत्ते" इत्यादि, परस्य गृहस्थस्यामत्रं भाजनं परामत्रम्, तत्र पुरःकर्मपश्चात्कर्मभयात् ( तद्भयात् ) हृतनष्टादिदोषसम्भवाच्चान्नं पानं च मुनिर्न कदाचिदपि भुञ्जीत, यदि वा पतद्ग्रहधारिणश्छिद्रपाणेः पाणिपात्रं परपात्रम्, यदि वा पाणिपात्रस्याच्छिद्रपाणेर्जिनकल्पिकादेः पतद्ग्रहः परपात्रं तत्र संयमविराधनाभयान्न भुञ्जीत । तथा परस्य गृहस्थस्य वस्त्रं परवस्त्रम्, तत्साधुरचेलोऽपि सन् पश्चात्कर्मादिदोषभयात् हृतनष्टादिदोषसंभवाच्च न बिभृयात्, यदि वा जिनकल्पिकोऽचेलो भूत्वा सर्वमपि वस्त्रं परवस्त्रमिति कृत्वा न बिभृयात् । तदेतत्सर्वं परपात्रभोजनादिकं संयमविराधकत्वेन ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेदिति । इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धनवमाध्ययने २७१ प्रतौ १०२ पत्रे ॥ ९ ॥

एतेन प्रतिग्रामं ये गृहस्थस्य घटादिपात्रं व्यापारयन्ति, ते निरस्ता द्रष्टव्याः ॥

केचिदिह कुमतितमस्विनीयक्त्यमुक्त्यध्वान' प्रतिपदमागमोक्तमपि योगोद्वहनमस्वीकुर्वाणा' सिद्धान्तपदान्यगारिणामगणिताशातना पाठयन्ति । ते च ससार पल्लवयन्ति सिद्धान्तनिषिद्धत्वात् । निषेधश्चैतद्गाथातात्पर्यार्थावगमगम्य , सा चेयम्–

" गिहे दीवमपासत्ता, पुरिसादाणिया नरा । ते वीरा बधणुम्मुक्का, नावकखति जीविय ॥ ३४ ॥" ' गिहे दीव' इत्यादि, गृहे गृहवासे गृहपाशे वा गृहस्थभाव इति यावत्, ' दीव ति ' दीपी दीप्तौ, दीपयति प्रकाशयतीति दीप , स च भावदीप श्रुतज्ञानलाभ', यदि वा द्वीपः समुद्रादौ प्राणिनामावासभूत', स च भावद्वीपः ससारसमुद्रे सर्वज्ञोक्तचारित्रलाभस्तदेवभूत दीप द्वीप वा गृहस्थभावेऽपश्यन्त अप्राप्नुवन्तः सन्तः सम्यक् प्रव्रज्योत्थानेनोत्थिता उत्तरोत्तरगुणलाभेनैवंभूता भवन्तीति दर्शयति–नराः पुरुषाः पुरुषोत्तमत्वाद्धर्मस्य नरोपादनमन्यथा स्त्रीणामप्येतद्गुणभाक्त्व भवति, अथवा देवादिव्युदासार्थमिति । मुमुक्षूणा पुरुषाणा आदानीया आश्रयणीया' पुरुषादानीया (महतोऽपि ) महीयासो भवन्ति, यदि वा आदानीयो हितैषिणा मोक्षस्तन्मार्गो वा सम्यग्दर्शनादिकः पुरुषाणा मनुष्याणामादानीयः, स विद्यते येषामिति विगृह्य मत्त्वर्थीयोऽर्श आदिभ्योऽजिति । तथा ये एवभूतास्ते विशेषेणेरयत्यष्टप्रकार कर्मेति वीरास्तथा बन्धनेन सबाह्याभ्यन्तरेण पुत्रकलत्रादिस्नेहरूपेणोत्मावलयेन मुक्ता बन्धनोन्मुक्ताः सन्तो जीवितमसयमजीवित प्राणधारणं वा नाभिकाङ्क्षन्ति नाभिलषन्ति। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धनवमधर्माध्ययनप्रान्ते २७२ प्रतौ १११ पत्रे ॥ १० ॥

अथ केचिदनध्यक्षमिति पृथिव्यादिजीवत्वं प्रति विप्रतिपद्यन्ते वदन्ति च। नास्माकमागमः प्रमाणम्, केवलं युक्तिप्रिया हि वयम्। ततस्तान् प्रति युक्तिसन्दर्भित आगमो लिख्यते—

यथा—"सव्वाहिं अणुजुतीहिं, मइमं पडिलेहिआ। सव्वे अक्कंतदुक्खा य, अतो सव्वे न हिंसया ॥ १ ॥"
'सव्वाहिंति' सर्वा याः काश्चनाऽनुरूपाः पृथिव्यादिजीवसाधनत्वेऽनुकूला युक्तयः साधनानि। यदि वाऽसिद्धविरुद्धानैकान्तिकपरिहारेण पक्षधर्मत्वसपक्षसत्वाविपक्षव्यावृत्तिरूपतया युक्तिसङ्गता युक्तयोऽनुयुक्तयस्ताभिरनुयुक्तिभिर्मतिमान् सदसद्विवेकी पृथिव्यादिजीवनिकायान् प्रत्युपेक्ष्य पर्यालोच्य जीवत्वेन प्रसाध्य तथा सर्वेपि प्राणिनोऽक्रान्तदुःखा दुःखाद्विषः सुखलिप्सवश्च मत्वाऽतो मतिमान् सर्वानपि प्राणिनो न हिंस्यादिति। युक्तयश्च तत्प्रसाधिकाः सङ्क्षेपेणेमाः। सात्मिका पृथिवी तदात्मनां विद्रुमलवणोपलादीनां समानजातीयाङ्कुरसद्भावादर्शोविकारांकुरवत्। तथा सचेतनमम्भो भूमिखननादाविष्कृतस्वभावसंभवाद्दर्दुरवत्। तथा सात्मकं तेजस्तद्योग्याहारवृद्ध्याघृद्ध्युपलब्धेर्बालवत्। तथा सात्मको वायुः अपरप्रेरितानियततिरश्चीनगतिमत्त्वाद्गोवत्। तथा सचेतना वनस्पतयः जन्मजरामरणरोगशोकादीनां समुदितानां सद्भावात् स्त्रीवत्। तथा क्षतसंरोहणाहारोपादानदौहृदसद्भावसङ्कोचसायाह्नस्वापप्रबोधाश्रयोपसर्पणादिभ्यो हेतुभ्यो वनस्पतेश्चैतन्यसिद्धिः। द्वीन्द्रियादीनां तु पुनः कृम्यादीनां स्पष्टमेव चैतन्यम्। तद्वेदनाश्चोपक्रमिकाः स्वाभाविकाश्च समुपलभ्यमाना मनोवाक्कायैः कृतकारितानुमतिभिश्च नवकेन भेदेन तत्पीडाकारिण उपमर्दान्निवर्त्तितव्यम्। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धैकादशमोक्षमार्गाध्ययने २७१ प्रतौ १२२ पत्रे ॥ ११ ॥

साधुना केनचिद्विप्रादिना वापीकूपसत्रादिषु पुण्य न वेति पृष्टे सति तैर्यत्कार्यं तदभिधायिन्यौ सूत्रगाथे लिख्यते—

"जे अ दाण पससति, वहमिच्छंति पाणिण। जे अ ण पडिसेहति, वित्तिच्छेय करति ते॥२०॥" 'जे अ दाणमित्यादि' ये केचन प्रपासत्रादिक दान बहूना जन्तूनामुपकारीतिकृत्वा प्रशसन्ति–श्लाघन्ते, ते परमार्थानभिज्ञाः प्रभूततरप्राणिना तत्प्रशसाद्वारेण वध–प्राणातिपातमिच्छन्ति। तद्दानस्य प्राणातिपातमन्तरेणानुपपत्ते। येऽपि च किल सूक्ष्मधियो वयमित्येव मन्यमाना आगमसद्भावानभिज्ञाः प्रतिषेधयन्ति–निषेधयति, तेऽप्यगीतार्थाः प्राणिनां वृत्तिच्छेद–वर्त्तनोपायविघ्न कुर्वन्तीति ॥ २० ॥ तदेव राज्ञा अन्येन वेश्वरेण कूपतडागयागसत्रदानाद्युद्यतेन पुण्यसद्भाव पृष्टैर्मुमुक्षुभिर्यद्विधेय तद्दर्शयितुमाह—"दुहओवि ते ण भासंति, अत्थि वा नत्थि वा पुणो। आय रयस्स हेचा ण, निव्वाण पाउणति ते ॥२१॥" 'दुहओवीत्यादि' यद्यस्ति पुण्यमित्येवमूचुः ततोऽनन्ताना सत्त्वाना सूक्ष्माणा बादराणा सर्वदा प्राणत्याग एव स्यात्। प्रीणनमात्र तु पुन स्वल्पाना स्वल्पकालीयमतोऽस्तीति न वक्तव्यम्। नास्ति पुण्यमित्येव प्रतिषेधेऽपि तदर्थिनामन्तराय' स्यादित्यतो द्विधाप्यस्ति नास्ति वा पुण्यमित्येव ते मुमुक्षवः साधव' पुनर्न भाषन्ते, किं तु पृष्टै. सद्भिर्मौन समाश्रयणीयम्। निर्बन्धे त्वस्माक द्विचत्वारिंशद्दोषवर्जित आहार' कल्पते, एवंविधविषये मुमुक्षूणामधिकार एव नास्तीति, उक्तञ्च—"सत्य वप्रेषु शीत शशिकरधवलं वारि पीत्वा प्रकाम, व्युच्छिन्नाशेषतृष्णा' प्रमुदितमनसः प्राणिसार्था भवन्ति। शोष नीते जलौघे दिनकरकि-

रणैर्यान्त्यनन्ता विनाशं, तेनोदासीनभावं व्रजति मुनिगणः कूपवप्रादिकार्ये ॥ १ ॥" तदेवत्तु भयथापि भाषिते रजसः—कर्मण आयो लाभो भवति अतस्तमायं रजसो मौनेनानवद्यभाषणेन वा हित्वा-त्यक्त्वा तेऽनवद्यभाषिणो निर्वाणं-मोक्षं प्राप्नुवन्ति ॥२१॥ इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धैकादशमोक्षमार्गाध्ययने २७१ प्रतौ१२४ पत्रे ॥१२॥

औदयिकादिभावस्वरूपं जिज्ञासया लिख्यते—

"भावसमोसरणं पुण,णायव्वं छव्विहंमि भावंमि। अहवा किरिय अकिरिया, अण्णाणी चेव वेणइया॥२॥" 'भावसमोसरणमित्यादि' भावानामौदयिकादीनां समवसरणमेकत्र मेलापको भावसमवसरणम्। तत्रौदयिको भाव एकविंशतिभेदः। तद्यथा—गतिश्चतुर्धा, कपायाश्चतुर्विधाः, एवं लिङ्गं त्रिविधम् , मिथ्यात्वाज्ञानासंयतत्वासिद्धत्वानि प्रत्येकमेकैकविधानि, लेश्याः कृष्णादिभेदेन षड्विधा भवन्ति १। औपशमिको द्विविधः, सम्यक्त्वचारित्रोपशमभेदात् २। क्षायोपशमिकोऽष्टादशभेदः। तद्यथा—ज्ञानं मतिश्रुतावधिमनःपर्यायभेदाच्चतुर्विधम् । अज्ञानं मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदात्त्रिविधम् , दर्शनं चक्षुरचक्षुरवधिदर्शनभेदात्त्रिविधम्,लब्धिः दानलाभभोगोपभोगवीर्यभेदात्पञ्चधा, सम्यक्त्वचारित्रसंयमासंयमाः प्रत्येकमेकैकप्रकारा इति ३। क्षायिको नवप्रकारः। तद्यथा—केवलज्ञानं केवलदर्शनं दानादिलब्धयः पञ्च सम्यक्त्वं चारित्रं चेति ४। जीवत्वभव्यत्वाभव्यत्वभेदात्पारिणामिकस्त्रिविधः ५। सान्निपातिकस्तु द्वित्रिचतुःपञ्चकसंयोगैर्भवति। तत्र द्विकसंयोगः सिद्धस्य क्षायिकपारिणामिकभावद्वयसद्भावादवगन्तव्यः। त्रिकसंयोगस्तु मिथ्यादृष्टिसम्यग्दृष्ट्यविरतविरतानामौदयिकक्षायोपशमिकपारिणामिक-

भावसद्भावादवगन्तव्य, तथा भवस्थकेवलिनोऽप्यौदयिकक्षायिकपारिणामिकभावसद्भावाद्विज्ञेय इति। चतुष्कसयोगोपि क्षायिकसम्यग्दृष्टीनामौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावसद्भावात्, तथौपशमिकसम्यग्दृष्टीनामौदयिकौपशमिकक्षायोपशमिकपारिणामिकभावसद्भावाचेति। पञ्चकसयोगस्तु क्षायिकसम्यग्दृष्टीनामुपशमश्रेण्या समस्तोपशान्तचारित्रमोहाना भावपञ्चकसद्भावाद्विज्ञेय इति। तदेव भावाना द्विकत्रिकचतुष्कपञ्चकसयोगात्सभविन सान्निपातिकभेदा षड् भवन्ति। एत एव त्रिकसयोगचतुष्कसयोगगतिभेदात् पञ्चदशधा प्रदेशान्तरेऽभिहिता'। इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धद्वादशसमवसरणाध्ययननिर्युक्तिगाथा ७७१ प्रतौ १२७ पत्रे॥१३॥

अत्र केचित्कठिनहठा प्राक्कृतकर्मकप्राधान्यवादिनः केचिचोद्यमप्राधान्यैकवादिन एव कालादिप्राधान्यवादिनोऽपि, तचासत्। जैनसिद्धान्तवेदिभिस्तु समुदाय एव प्राधान्येन वाच्य इत्यर्थसूचको विचारो लिख्यते–

इदानीं तेषा सम्यग्मिथ्यावादित्व विभागेन यथा भवति तथा दर्शयितुमाह–"सम्मद्दिट्ठी किरियावादी मिच्छा य सेसगा वादी। जहिऊण मिच्छवाय, सेवह वाय इम सच॥६॥" 'सम्मद्दिट्ठीत्यादि' सम्यगविपरीता दृष्टिदर्शन पदार्थपरिच्छित्तिर्यस्याऽसौ सम्यग्दृष्टिः। कोऽसावित्याह–क्रियामस्तीत्येवभूता वदितु शीलमस्येति क्रियावादी। अत्र क्रियावादीत्येतत् 'अत्थित्ति किरियवादी' इत्यनेन प्राक्प्रसाधित सदनूद्य सम्यग्दृष्टित्व विधीयते, तस्यासिद्धत्वादिति। तथाहि–अस्ति लोकालोकविभागः। अस्त्यात्मा। अस्ति पुण्यपापविभागः। अस्ति तत्फल स्वर्गनरकावासिलक्षणम्। अस्ति काल कारणत्वेनाऽशेषस्य जगत प्रभवद्वृद्धिस्थितिविनाशेषु साध्येषु तथा शीतो-

णवद्धौवनस्पतिपुष्पफलादिषु चेति । तथा चोक्तम्-"कालः पचति भूतानि, कालः संहरते प्रजाः । कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥१॥" तथाऽस्ति स्वभावोऽपि कारणत्वेनाशेषस्य जगतः स्वो भावः स्वभाव इति कृत्वा, तेन हि जीवाजीवभव्यत्वाभव्यत्वमूर्त्तत्वामूर्त्तत्वानां स्वस्वरूपानुविधानात् । तथा धर्माधर्माकाशकालादीनां च गतिस्थित्यवगाहपरत्वापरत्वादिस्वरूपापादनादिति । तथाचोक्तम्-'क कण्टकानां' इत्यादि । तथा नियतिरपि कारणत्वेनाश्रीयते । तथा पदार्थानां नियतेरेव निष्पन्नत्वात् । तथाचोक्तम्-"प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा । भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ १ ॥" तथा पुराकृतं तच्च शुभाशुभमिष्टानिष्टफलकारणम् । तथा चोक्तम्-"यथा यथा पूर्वकृतस्य कर्मणः, फलं निधानस्थमिहोपतिष्ठते । तथा तथा पूर्वकृतानुसारिणी, प्रदीपहस्तेव मतिः प्रवर्त्तते ॥ १ ॥" तथा-"स्वकर्मणा युक्त एव, सर्वो ह्युत्पद्यते जनः। स तथा कृष्यते तेन, न यथा स्वयमिच्छति ॥२॥" इत्यादि । तथा पुरुषकारोऽपि कारणं, यस्मान्न पुरुषकारमन्तरेण किञ्चित्सिध्यति। तथा चोक्तम्-"न दैवमिति सञ्चिन्त्य, त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं, तिलेभ्यः प्राप्तुमर्हति? ॥१॥" तथा-"उद्यमाच्चारुचित्राङ्गि!, नरो भद्राणि पश्यति । उद्यमात्कृमिकीटोऽपि, भिनत्ति महतो द्रुमान् ॥ २॥" तदेवं सर्वानपि कालादीन् कारणत्वेनाभ्युपगच्छंस्तथाऽऽत्मपुण्यपापपरलोकादिकं चेच्छन् क्रियावादी सम्यग्दृष्टित्वेनाभ्युपगन्तव्यः। शेषकास्तु वादा अक्रियावादाज्ञानवादवैनयिकवादा मिथ्यावादा इत्येवं द्रष्टव्याः, तथाहि-अक्रियावादी अत्यन्तनास्तिकोऽध्यक्षसिद्धं जीवाजीवादिपदार्थजातमपह्नुवन्मिथ्यादृष्टिरेव

भवति अज्ञानवादी तु सति मत्यादिके हेयोपादेयप्रदर्शके ज्ञानपञ्चकेऽज्ञानमेव श्रेय इत्येव वदन् कथ नोन्मत्तः स्यात्? । तथा विनयवाद्यपि विनयादेव केवलाद् ज्ञानक्रियासाध्या सिद्धिमिच्छन्नपकर्णयितव्य. । तदेव विपरीतार्थाभिधायितयैते मिथ्यादृष्टयोऽवगन्तव्या' । ननु च क्रियावाद्यप्यशीत्युत्तरशतभेदोऽपि तत्र तत्र प्रदेशे कालादीनभ्युपगच्छन्नेव मिथ्यावादित्वेनोपन्यस्त.,तत्कथमिह सम्यग्दृष्टित्त्वेनोच्यत इति, उच्यते, स तत्रास्त्येव जीव इत्येव सावधारणतयाऽभ्युपगम कुर्वस्तथा काल एवैक सर्वस्यास्य जगतः कारणम् तथा स्वभाव एव नियतिरेव पूर्वकृतमेव पुरुषकार एवेत्येवमपरनिरपेक्षतयैकान्तेन कालादीना कारणत्वेनाश्रयणान्मिथ्यात्वम् । तथाहि—अस्त्येव जीव इत्येवमस्तिना सह जीवस्य सामान्याधिकरण्याद्यदस्ति तज्जीव इत्येव प्राप्तमतो निरवधारणपक्षसमाश्रयणादिह सम्यक्त्वमभिहितम् । तथा कालादीनामपि समुदितानां परस्परमन्यपेक्षाणा कारणत्वेनेहाश्रयणादिह सम्यक्त्वमभिहितमिति । ननु च कथ कालादीना प्रत्येक निरपेक्षाणा मिथ्यात्वस्वभावत्वे सति समुदिते सम्यक्त्वसद्भाव'?, न हि यत्प्रत्येक नास्ति तत्समुदाये भवितुमर्हति, सिकतातैलवत् । नैतदस्ति । प्रत्येक पद्मरागादिमणिष्वविद्यमानाऽपि रत्नावली समुदाये भवन्ती दृष्टा । न हि दृष्टेऽनुपपन्न नामेति यत्किञ्चिदेतत् । इति सूत्रकृताङ्गप्रथमश्रुतस्कन्धद्वादशाध्ययने २७१ प्रतौ १३४ पत्रे ॥ १४ ॥

अत्र केषाञ्चिदन्यदर्शनिनामपि ज्योतिर्निमित्तशकुनादिभिर्भाविवस्तुसंवादीनि ज्ञानान्यालोक्याविदितपरमार्थरहो एतेऽप्यतिशयवन्तः प्रशस्या इति व्यामोहो न विधेय. । तेषा तद्गतानामपि ज्योतिर्निमित्तादिज्ञानाना पूर्वान्त पातित्वेन गणधरप्रणीतत्वात् । तत्र चागम'—

"संवच्छरं सुविणं लक्खणं च, निमित्तदेहं च उपाइयं च। अट्ठंगमेयं बहवे अहित्ता, लोगंसि जाणंति अणागयाइं॥९॥" 'संवत्सरमित्यादि' सांवत्सरं ज्योतिषं, स्वप्नप्रतिपादको ग्रन्थः स्वप्नस्तमधीत्य, लक्षणं श्रीवत्सादिकं, चशब्दादान्तरबाह्यभेदभिन्नं, निमित्तं वाक्प्रशस्तशकुनादिकम्, देहे भवं दैहं मषतिलकादिकम्, उत्पाते भवमौत्पातिकमुल्कापातदिग्दाहनिर्घातभूमिकंपादिकम्, तथाऽष्टाङ्गं च निमित्तमधीत्य। तद्यथा—भौममुत्पातं स्वप्नं आन्तरिक्षं आङ्गं स्वरं लक्षणं व्यञ्जनं इत्येवंरूपं नवमपूर्वतृतीयाचारवस्तुविनिर्गतं सुखदुःखजीवितमरणलाभालाभादिसंसूचकं निमित्तमधीत्य लोकेऽस्मिन्नतीतानि वस्तूनि अनागतानि च जानन्ति परिच्छिदन्ति। न च शून्यादिवादेष्वेतद्घटते, तस्मादप्रमाणमेव तैरभिधीयते, इत्येवं व्याख्याते सति आह परः—ननु व्यभिचार्यपि श्रुतमुपलभ्यते। तथाहि—चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वमागम उद्घुष्यते, किं पुनरष्टाङ्गनिमित्तशास्त्रविदाम्?। अत्र चाङ्गवर्जितानां निमित्तशास्त्राणामानुष्टुभेन छंदसाऽर्द्धत्रयोदशशतानि सूत्रम्, तावन्त्येव सहस्राणि वृत्तिः, तावत्प्रमाणलक्षा परिभाषेति। अङ्गस्यार्द्धत्रयोदशसहस्राणि सूत्रम्, तावत्परिमाणलक्षा वृत्तिः, अपरिमितं वार्त्तिकमिति ॥ ९ ॥ तदेवमष्टाङ्गनिमित्तवेदिनामपि परस्परतः षट्स्थानपतितत्वेन व्यभिचारित्वमत इदमाह—"केई निमित्ता तहिया भवंति, केसिंच तं विप्पडिएति णाणं। ते विज्जभावं अणहिज्जमाणा, आहंसु विज्जापरिमोक्खमेव। (जाणाम लोगंसि वयंति मंदा)॥ १०॥" 'केई णिमित्ता इत्यादि' छान्दसत्वात्प्राकृतशैल्या वा लिङ्गव्यत्ययः कानिचिन्निमित्तानि तथ्यानि सत्यानि भवन्ति। केषाञ्चित्तु निमित्तानां निमित्तवेदिनां वा बुद्धिवैकल्या-

त्तावधिक्षयोपशमाभावेन तन्निमित्तज्ञान विपर्यास–व्यत्ययमेति। आर्हतानामपि निमित्तव्यभिचारः समुपलभ्यते, किं पुनरन्यतीर्थिकाना (स्तीर्थिकानाम्)। तदेव निमित्तशास्त्रस्य व्यभिचारमुपलभ्य ते अक्रियावादिनो विद्यासद्भावमनधीयमानाः सन्तो निमित्त तथा चान्यथा च भवतीति मत्वा ते 'आहसु विज्जा परिमोक्खमेव' विद्याया'–श्रुतस्य व्यभिचारेण तस्य परिमोक्ष–परित्यागमाहुरुक्तवन्तः। यदि वा क्रियाया अभावाद्विद्यया–ज्ञानेनैव मोक्ष सर्वकर्मच्युतिलक्षणमाहुरिति। क्वचिच्चरमपादस्यैव पाठ'–'जाणाम लोगंसि वयंति मंदा त्ति' विद्यामनधीत्यैव स्वयमेव लोकमस्मिन् वा लोके भावान्वय जानीमः, एव मन्दा–जडा वदन्ति। नच निमित्तस्य तथ्यता। तथाहि—कस्यचित्क्वचित्क्षुतेऽपि गच्छत' कार्यसिद्धिदर्शनात्, शकुनसद्भावेऽपि कार्यविघातदर्शनात्, अतो निमित्तबलेनादेशविधायिना मृषावाद एव केवलमिति। नैतदस्ति। नहि सम्यगधीतस्य श्रुतस्यार्थे विसवादोऽस्ति। यदपि षट्स्थानपतितत्वमुद्घुष्यते तदपि पुरुषाश्रितक्षयोपशमवशेन। नच प्रमाणाभासव्यभिचारे सम्यक्प्रमाणव्यभिचारशङ्का कर्तुं युज्यते। तथाहि—मरुमरीचिकाजले (निचये) जलग्राहिप्रत्यक्ष व्यभिचरतीतिकृत्वा किं सत्यजलग्राहिणोऽपि प्रत्यक्षस्य व्यभिचारो युक्तिसङ्गतो भवति ?। नहि मशकवर्त्तिरग्निसिद्धावुपदिश्यमाना व्यभिचारिणीति सत्यधूमस्यापि व्यभिचारो। नहि सुविवेचित कार्यं कारणं व्यभिचरतीति। ततश्च प्रमातुरयमपराधो न प्रमाणस्य। एव सुविवेचित निमित्तश्रुतमपि न व्यभिचारीति। यश्च क्षुतेऽपि कार्यसिद्धिदर्शनेन व्यभिचार' शङ्क्यते, सोऽनुपपन्नः। तथाहि—कार्याकृतात्क्षुतेऽपि गच्छतो या कार्यसिद्धिः साऽपान्तरालेतरशोभन-

निमित्तबलात्सञ्जातेत्येवमवगन्तव्यम् । शोभननिमित्तप्रस्थितस्यापीतरनिमित्तबलात्कार्यव्याघात इति । तथा च श्रुतिः-किल बुद्धः स्वशिष्यानाहूयोक्तवान् यथा-द्वादशवार्षिकमत्र दुर्भिक्षं भविष्यत्यतो देशान्तराणि गच्छत यूयम् । ते च तद्वचनाद्गच्छन्तस्तेनैव प्रतिषिद्धाः । यथा-मा गच्छत यूयम् । इहाद्यैव पुण्यवान् महासत्त्वः सञ्जातः, तत्प्रभावात्सुभिक्षं भविष्यति । तदेवमन्तरापरनिमित्तसद्भावान्न तद्व्यभिचारशङ्केति स्थितम् । इति श्रीसूत्रकृताङ्गप्रथमश्रुतस्कन्धे द्वादशे समवसरणाध्ययने २७१ प्रतौ १४७ पत्रे ॥ १५ ॥

एतेन ये केचन वदन्ति शकुनादिनिमित्तमनैकान्तिकत्वाद्व्यभिचारित्वाच्चान्वयव्यतिरेकाभ्यामप्रमाणमिति तेऽपि निरस्ता वेदितव्याः ॥

केचिच्चाऽत्रामुद्राज्ञाननिद्रामुद्रितान्तःकरणाः स्वमतविशेषदर्शनाय च स्त्रीषु नाग्न्यमेव विशेषः,इति न्यायमङ्गीकृत्य यथोक्तावसरविधेयामपि वाङ्मात्रेण निद्रां निषिद्ध्य स्वपाण्डित्यं दर्शयन्ति । स च गृहज्वालनात्कीर्त्युत्पादनमयमेव न्यायः, शास्त्रे निद्राकालस्याप्युक्तत्वात्, स चायं सूत्रार्थाभ्यां लिख्यते—

"संजमजायामायावत्तियं बिलमिव पन्नगभूतेणं अप्पाणेणं आहारं आहारेज्जा । अन्नं अन्नकाले, पाणं पाणकाले, वत्थं वत्थकाले, लेणं लेणकाले, सयणं सयणकाले, से भिक्खू मायन्ने अन्नयरं दिसं अणुदिसं वा पडिवन्ने धम्मं आइक्खे विभए किट्टे उवट्ठिएसु वा अणुवट्ठिएसु वा सुस्सूसमाणेसु पवेदए ॥" इति । वृत्तिर्यथा—संयमयात्रायां

मात्रा संयमयात्रामात्रा, यावत्याऽऽहारमात्रया संयमयात्रा भवति सा तथा तया संयमयात्रामात्रया वृत्तिर्यस्य तत्तथा। तदपि बिलप्रवेशपन्नगभूतेनात्मनाऽऽहारमाहरेत्। इदमुक्तं भवति। यथा—अहिर्बिलं प्रविशस्तूर्णं प्रविशति, एवं साधुनाप्याहारस्तत्स्वादमनास्वादयता शीघ्रं प्रवेशयितव्य इति। यदिवा सर्पेणेवाहारो लब्ध्वाऽनास्वादमभ्यवहार्येत इति। तदेव चाहारादिकं दर्शयितुमाह—अन्नं भक्तं अन्नकाले सूत्रार्थपौरुष्यनन्तरकाले, भिक्षाकाले प्राप्ते पुरः पश्चात्कर्मपरिहृतं भवति। यथोक्तभिक्षाटनेन ग्रहणकालावाप्तं भैक्ष्यं परिभोगकाले भुञ्जीत। तथा पानकं पानकाले, नातितृषितो भुञ्जीत, नाऽप्यतिबुभुक्षितः पानकं पिबेदिति। वस्त्रं वस्त्रकाले गृह्णीयादुपभोगं वा कुर्यात्। तथा लयनं—गुहादिकमाश्रयस्तस्य वर्षास्ववश्यमुपादानमन्यदा त्वनियमः। तथा शय्यतेऽस्मिन्निति शयनं संस्तारकः, स च शयनकाले। तत्राप्यगीतार्थानां प्रहरद्वयं निद्राविमोक्षो गीतार्थानां तु प्रहरमेकमिति। स भिक्षुराहारोपधिशयनस्वाध्यायध्यानादीनां मात्रां जानातीति तद्विधिज्ञः सन्नन्यतरां दिशं अनुदिशं वा प्रतिपन्नः समाश्रितो धर्ममाख्यापयेत्प्रतिपादयेत्, येन यद्विधेयं तद्यथायोगं विभजेत्, धर्मफलानि च कीर्त्तयेदाविर्भावयेत्, तच्च धर्मकर्मकथनं परहितार्थप्रवृत्तेन साधुना सम्यगुपस्थितेष्वनुपस्थितेषु वा कौतुकादिप्रवृत्तेषु शुश्रूषमाणेषु—श्रोतुं प्रवृत्तेषु स्वपरहिताय प्रवेदयेदावेदयेत्। इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धप्रथमपुण्डरीकाध्ययने २७१ प्रतौ १९१ पत्रे ॥ १६ ॥

य. साधूनामवज्ञाकारी भवति स आगाढमिथ्यादृष्टिरुच्यते, इत्यभिप्रायो लिख्यते—

'से एगइओ समणं वा माहणं वा दिस्सा णाणाविधेहिं पावकम्मेहिं अत्ताणं उवक्खाइत्ता भवइ।

अदुवा णं अच्छराते आफालेत्ता भवइ । अदुवाणं फरुसं वइत्ता भवइ । कालेणवि से अणुपविट्ठस्स असणं वा पाणं वा जाव नो दवावेत्ता भवइ । जे इमे भवंति वोन्नमंता भारोक्कंता अलसगा वसलगा किवणगा पव्वयंति" इति । वृत्तिर्यथा—सांप्रतं विपर्यस्तदृष्टयो गाढमिथ्यादृष्टयोऽभिधीयन्ते 'से एगइओ' इत्यादि । अथैककः कश्चिदभिगृहीतमिथ्यादृष्टिरभद्रकः साधुप्रत्यनीकतया श्रमणादीनां निर्गच्छतां प्रविशतां वा स्वतश्च निर्गच्छन् प्रविशन् वा नानाविधैः पापोपादानभूतैः कर्मभिरात्मानमुपख्यापयिता भवतीति । एतदेव दर्शयति—अथवेत्यय-मुत्तरापेक्षया पक्षान्तरोपग्रहार्थः । कचित्साधुदर्शने सति मिथ्यात्वोपहतदृष्टितया अपशकुनोऽयमित्येवं मन्यमानः सन् दृष्टिपथादपसारयन् साधुमुद्दिश्यावज्ञयाऽप्सरायाः—चप्पुटिकाया आस्फालयिता भवति । अथवा तत्तिरस्कार-मापादयन् परुषं वचो ब्रूयात् । तद्यथा—ओदन ( उदर ) मुंड ! निरर्थककायक्लेशपरायणदुर्बुद्धे ! अपसराग्रतस्तदसौ भृकुटिं वा विदध्यादसभ्यं वा ब्रूयात् । तथा भिक्षाकालेनापि से—तस्य भिक्षोरन्येभ्यो भिक्षाचरेभ्योऽनु—पश्चा-त्प्रविष्टस्य सतोऽत्यन्तदुष्टतयाऽन्नादेर्नो दापयिता भवति, अपरं च दानोद्यतं निषेधयति । तत्प्रत्यनीकतयैतच्च ब्रूते—ये इमे पाखण्डिका भवन्ति ते एवंभूता भवन्तीत्याह—'वोणन्ति' तृणकाष्ठहारादिकं अधमं कर्म, तद्विद्यते येषां ते तद्वन्तः । तथा भारेण कुटुम्बभारेण पोट्टलिकादिभारेण वाऽऽक्रान्ताः-पराभग्नाः सुखलिप्सवोऽलसा क्रमागतं कुटुम्बकं पालयितुमसमर्थास्ते पाखण्डव्रतमाश्रयन्ति । तथा चोक्तम्—"गृहाश्रमपरो धर्मो, न भूतो न भविष्यति । पालयन्ति नराः शूराः, क्लीवाः पाखण्डमाश्रिताः ॥ १ ॥" तथा—'वसलगा' इति, वृषला अधमाः

शूद्रजातयस्त्रिवर्गप्रतिचारकास्तथा कृपणाः क्लीवा अकिञ्चित्करा' श्रमणा भवन्ति प्रव्रज्यां गृह्णन्तीति । इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धद्वितीयक्रियास्थानाख्याध्ययने २७१ प्रतौ २०४ पत्रे ॥ १७ ॥

एतेन ये केचिज्जैनश्राद्धतया विदिता अपि मुनीनामाहारादि निषेधयन्ति, साधुतया विदिताश्च ये केचन तमुपदेशं ददति ते उभयेऽपि आगाढमिथ्यात्विनो द्रष्टव्या' ।

अपरे च केचन केवलिनामाहारमनागमिकमयौक्तिकं च मन्वते ततस्तदवबोधाय तत्र युक्त्यागमौ लिख्येते-

"अंतोमुहुत्तमद्धा, सेलेसीए भवे अणाहारो । सादीयमणिधणं पुण, सिद्धाणाहारगा होंति ॥ ८ ॥" 'अंतोमुहुत्तमित्यादि' । शैलेश्यवस्थायां आरभ्य सर्वथाऽनाहारकः सिद्धावस्थाप्रासावनन्तमपि कालं यावदिति । पूर्वं तु कावलिकव्यतिरेकेण प्रतिसमयमाहारकः । कावलिकेन तु कादाचित्क इति । ननु केवलिनो घातिकर्मक्षयेऽनन्तवीर्यत्वान्न भवत्येव कावलिकाहार' । तथाहि-आहारादाने यानि वेदनीयादीनि षट् कारणान्यभिहितानि तेषां मध्ये एकमपि न विद्यते केवलिनि, तत्कथमसावाहारं बहुदोषदुष्टं गृह्णीयात् ? । तत्र न तावत्तस्य वेदनोत्पद्यते, तद्वेदनीयस्य दग्धरज्जुस्थानिकत्वात्सत्यामपि न तस्य तत्कृता पीडा, अनन्तवीर्यत्वात् । वैयावृत्यकारणं तु भगवति सुरासुरनराधिपतिपूज्यत्वे न सम्भाव्यते एवेति । ईर्यापथं (थ) केवलज्ञानावरणपरिक्षयात् सम्यगवलोकयत्येवासौ । संयमस्तु तस्य यथाख्यातचारित्रिणो निष्ठितार्थत्वादनन्तवीर्यत्वान्नाहारग्रहणाय कारणीभवति । प्राणवृत्तिस्तु तस्यानपवर्त्तित्वादायुषोऽनन्तवीर्यत्वाचान्यथा सिद्धैव । धर्मचिन्तावसरस्त्वपगतो निष्ठितार्थत्वात् । तदेव

केवलिनः कावलिक आहारो बह्वपायत्वान्न कथञ्चिद् घटते इति स्थितम्। अत्रोच्यते। तत्र यत्तावदुक्तं घातिकर्मक्षये केवलज्ञानोत्पत्तावनन्तवीर्यत्वान्न केवलिनो भुक्तिरिति। तदागमानभिज्ञस्य तत्त्वविचाररहितस्य युक्तिहृदयमजानतो वचनम्। तथाहि-यदाहारनिमित्तं वेदनीयं कर्म तत्तस्य तथैवास्ते। किमिति शारीरी स्थितिः प्राक्तनी न भवति ?, प्रमाणं च-अस्ति केवलिनो भुक्तिः समग्रसामग्रीकत्वात्पूर्वभुक्तिवत्। सामग्री चेयं प्रक्षेपाहारस्य, तद्यथा-पर्याप्तत्वं वेदनीयोदयः आहारपाक्तिनिमित्तं तैजसशरीरं दीर्घायुष्कत्वं चेति। तानि च समस्तान्यपि केवलिनि सन्ति। यदपि दग्धरज्जुस्थानिकत्वमुच्यते वेदनीयस्य तदप्यनागमिकमयुक्तिसङ्गतं च, आगमे ह्यत्यन्तोदयः सातस्य केवलिन्यभिधीयते, युक्तिरपि-यदि घातिकर्मक्षयाद् ज्ञानादयस्तस्याऽभूवन् वेदनीयोद्भवायाः क्षुधः किमायातं? येनाऽसौ न भवति। न तयोश्छायातपयोरिव सहानवस्थानलक्षणो नापि भावाभावयोरिव परस्परपरिहारलक्षणः कश्चिद्विरोधोऽस्तीति। सातासातयोश्चान्तर्मुहूर्त्तपरिवर्त्तमानतया यथा सातोदय एवमसातोदयोऽपीत्यनन्तवीर्यत्वे सत्यपि शरीरबलापचयः क्षुद्वेदनीयोद्भवा पीडा च भवत्येव। न चाहारग्रहणे तस्य किञ्चित्क्षीयते, केवलमाहोपुरुषिकामात्रमेवेति। यदप्युच्यते वेदनीयस्योदीरणाया अभावात्प्रभूततरपुद्गलोदयाभावः, तदभावाचात्यन्तं वेदनीयपीडाऽभावः,इति वाङ्मात्रम्।तथाहि-अविरतसम्यग्दृष्ट्यादिष्वेकादशसु गुणस्थानकेषु वेदनीयस्य गुणश्रेणीसद्भावात्प्रभूतपुद्गलोदयसंभवः किं तेषु प्राक्तनेभ्योऽधिकपीडासद्भाव ? इति। अपि च यो जिने सातोदयस्तीव्रः किमसौ प्रचुरपुद्गलोदये ? नेत्यतो यत्किञ्चिदेतदिति। तदेवं सातोदयवदसातोदयोऽप्यनिवारित इति,

तयोरन्तर्मुहूर्त्तकालेन परिवर्त्तमानत्वात्, यदपि कैश्चिदभिधीयते–विपच्यमानतीर्थंकरनाम्नो देवस्य च्यवनकाले षण्मासकाल यावदत्यन्त सातोदय एवेति। असावपि यदि स्यान्न नो बाधायै, केवलिना भुक्तेरनिवारितत्वात्। यदप्युच्यते आहारविषयाकाङ्क्षारूपा क्षुद्भवति, अभिकाङ्क्षा चाहारपरिग्रहबुद्धिः, सा च मोहनीयविकारस्तस्य चापगतत्वात् केवलिनो न भुक्तिरिति । एतदप्यसमीचीनम् । यतो मोहनीयविपाका क्षुन्न भवति । तद्विपाकस्य प्रतिपक्षभावनया प्रतिसङ्ख्यानेन निवर्त्यमानत्वात् । तथाहि–कषायाः प्रतिकूलभावनया निवर्त्तन्ते। तथा चोक्तम्— "उवसमेण हणे कोहं, माण मद्दवया जिणे। माय चऽज्जवभावेण, लोह संतुट्ठिए जिणे ॥ १ ॥" मिथ्यात्वसम्यक्त्वयोश्च परस्परनिवृत्तिर्भावनाकृता प्रतीतैव। वेदोदयोऽपि विपरीतभावनया निवर्त्तते । तदुक्तम्—"काम! जानामि ते मूलं, सङ्कल्पात्किल जायसे । ततस्त न करिष्यामि, ततो मे न भविष्यसि ॥ १ ॥" हास्यादिषट्कमपि चेतोविकाररूपतया प्रतिसङ्ख्यानेन निवर्त्तते । क्षुद्वेदनीय तु रोगशीतोष्णादिवज्जीयपुद्गलविपाकितया न प्रतीपवासनामात्रेण विनिवर्त्तते अतो न मोहस्वभावा क्षुदिति। तदेव व्यवस्थिते यत्कैश्चिदाग्रहगृहीतैरभिधीयते यथा–"अपवर्त्तते कृतार्थं, नायुर्ज्ञानादयो न हीयन्ते। जगदुपकृतावनन्तं, वीर्यं किं गततृपो भुक्ति' ॥ १ ॥ "इति। तदेतत्प्लवते, यतश्छद्मस्थावस्थायामप्येतदस्तीति तत्रापि किमिति भुङ्क्ते ? तत्र समस्तवीर्यान्तरायक्षयाभावाद्भुक्तिसद्भावः इति चेत्तदयुक्तम्। यतः–किं तत्रायुष्कस्यापवर्त्तनं स्यात् ? किं वा चतुर्णां ज्ञानाना काचिद्धानिः स्यात् ? येन भुक्तिः, इति। तस्माद्यथा दीर्घकालस्थितेरायुष्क कारणम्

एवमाहारोऽपि। यथा सिद्धिगतेर्व्युपरतक्रियस्य ध्यानस्य चरमक्षणः कारणम् एवं सम्यक्त्वादिकमपीति। अनन्तवीर्यताऽपि तस्याहारग्रहणे सति न विरुद्ध्यते। यथा तस्य देवच्छन्दादीनि विश्रामकारणानि गमननिषीदनानि च भवन्ति एवमाहारक्रियाऽपि विरोधाभावात्, न ह्यत्र बलवत्तरस्य वीर्यवतोऽल्पीयसी क्षुदिति। एवं व्यवस्थिते यत्किञ्चिदेतत्। अपि च-एकादशपरीषहा वेदनीयकृता जिने प्रादुष्पन्ति। अपरे त्वेकादश ज्ञानावरणीयादिकृतास्तत्क्षयेऽपगता इतीयमप्युपपत्तिः केवलिनि भुक्तिं साधयति। तथाहि-क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाच्ञालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानदर्शनानि, इत्येते द्वाविंशतिः मुमुक्षूणां परिषोढव्याः परीषहाः। तेषां च मध्ये ज्ञानावरणीयोत्थौ प्रज्ञाज्ञानाख्यौ, दर्शनमोहनीयसंभवो दर्शनपरीषहो, अन्तरायोत्थोऽलाभपरीषहः, चारित्रमोहनीयसंभवास्त्वमी-नाग्न्यारतिस्त्रीनिषद्याऽऽक्रोशयाच्ञासत्कारपुरस्काराः, एते चैकादशापि जिने केवलिनि न संभवन्ति। तत्कारणानां कर्मणामपगतत्वात्, न हि कारणाभावे क्वचित्कार्योत्पत्तिः, शेषास्त्वेकादश जिने संभवन्ति, तत्कारणस्य वेदनीयस्य विद्यमानत्वात्। ते चामी-क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलाख्याः, एते च वेदनीयप्रभवास्तत्र केवलिनि विद्यन्ते। न च निदानानुच्छेदे निदानिन उच्छेदः संभाव्यते; अतः केवलिनि क्षुद्वेदनीयादिपीडा संभाव्यते। केवलमसावनन्तवीर्यत्वान्न विह्वलीभवति। न चासौ निष्ठितार्थो निष्प्रयोजनमेव पीडामधिसहते। न च शक्यते वक्तुम् एवंविधमेव तस्य भगवतः शरीरं यदुत क्षुत्पीडया न बाध्यते आहारमन्तरेण च वर्त्तते,

यथा स्वभावेनैव स्वेदादिरहितम् एव प्रक्षेपाहाररहितमिति । एतच्चाप्रमाणकत्वादपकर्णनीयम् । अपि च केवलोत्पत्तेः प्राग्भुक्तेरभ्युपगमात्केवलोत्पत्तावपि तदेवौदारिकं शरीरमाहाराद्युपस्कार्यं, अथान्यथाभावः कैश्चिदुच्यते असावपि युक्तिरहितत्वादभ्युपगमकमात्र एवेति । तदेव देशोनपूर्वकोटिकालस्य केवलिस्थितेः संभवादौदारिकशरीरस्थितेश्च यथायुष्कं कारणमेव प्रक्षेपाहारोऽपि, तथाहि–तैजसशरीरेण मृदूकृतस्याभ्यवहृतस्य द्रव्यस्य स्वपर्याप्त्या परिणामितस्योत्तरोत्तरपरिणामक्रमेणौदारिकशरीरिणामनेन प्रकारेण क्षुदुद्भवो भवति वेदनीयोदये सतीयं च सामग्री सर्वाऽपि भगवति केवलिनि संभवति तत्किमर्थमसौ न भुङ्क्त इति ?। न च घातिचतुष्टयस्य सहकारिकारणभावोऽस्ति येन तदभावात्तदभाव इत्युच्येत, तदेवं संसारस्था जीवा विग्रहगतौ जघन्येनैकं समयम्, उत्कृष्टतः समयत्रयम् । भवस्थकेवली समुद्घातावस्थ समयत्रयमनाहारकः । शैलेश्यवस्थायां त्वन्तर्मुहूर्त्तं सिद्धास्तु सादिकमपर्यन्तमनाहारका इति स्थितम् । इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धतृतीयाहारपरिज्ञाध्ययने २७१ प्रतौ २१६।२१७ पत्रे ॥ १७ ॥

एते एव च स्त्रीणां मुक्तिं न मन्वते । तत्पूर्वोत्तरपक्षौ तु इहैवाग्रे वक्ष्यमाणान्नन्दीविचारतरङ्गादवसेयौ ॥१८॥

ननु मूर्तामूर्त्तयोर्जीवकर्मणोः कथं सम्बन्धः येऽपि च क्षीरनीरसुवर्णमृत्तिकादयो दृष्टान्तास्तेऽपि वैधर्म्याध्यासिताः, तत्रोभयोर्मूर्त्तत्वात्, इयं हि शङ्का भूयसां चेतांसि मलिनयति । ततस्तदाशङ्कानिरासाय युक्तिसन्दर्भित आगमो लिख्यते—

"नत्थि बंधे व मोक्खे वा, नेवं सन्नं निवेसए। अत्थि बंधे व मोक्खे वा, एवं सन्नं निवेसए ॥ १५ ॥" वृत्तिर्यथा-बन्धः प्रकृतिस्थित्यनुभावप्रदेशात्मकतया कर्मपुद्गलानां जीवेन स्वव्यापारतः स्वीकरणम् । स चामूर्त्तस्यात्मनो गगनस्येव न विद्यते, इत्येवं संज्ञां नो निवेशयेत् । तथा तदभावाच्च मोक्षस्याप्यभावः, इत्येवमपि संज्ञां नो निवेशयेत् कथं तर्हि संज्ञां निवेशयेत्,? इत्युत्तरार्द्धेन दर्शयति-अस्ति बन्धः कर्मपुद्गलैर्जीवस्येत्येवं संज्ञां निवेशयेदिति । यत्तूच्यते-मूर्त्तस्यामूर्तिमता सम्बन्धो न युज्यते इति, तदयुक्तम् । आकाशस्य सर्वव्यापितया पुद्गलैरपि सम्बन्धो दुर्निवार्यः, तदभावे तद्व्यापित्वमेव न स्यात् । अन्यच्चास्य विज्ञानस्य हृत्पूरमदिरादिना विकारः समुपलभ्यते, न चासौ सम्बन्धमृते, अतो यत्किञ्चिदेतदिति । अपि च संसारिणामसुमतां सदा तैजसकार्मणशरीरसद्भावादात्यन्तिकममूर्त्तत्वं न भवतीति । तथा तत्प्रतिपक्षभूतो मोक्षोऽप्यस्ति, तदभावे बन्धस्याप्यभावः स्यादित्यतोऽशेषबन्धनापगमस्वभावो मोक्षोऽप्यस्ति, इत्येवं संज्ञां निवेशयेत्। इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धपञ्चमाचारश्रुताख्याध्ययने २७१ प्रतौ २३६ पत्रे ॥ १९ ॥

ननु भगवत्यादौ ऋषभदत्तादय एकादशाङ्गिनः श्रूयन्ते, तत्सम्बन्धाश्चैकादशाङ्गान्तःपातिनः, कथमिदं घटते ? कथं वा द्वादशाङ्ग्या नित्यत्वं घटते ? । एतच्छङ्कातङ्कापनोदाय लिख्यते— ॥ २० ॥

"कामं दुवालसंगं, जिणवयणं सासतं महाभागं। सव्वज्झयणाणि तथा, सव्वक्खरसन्निवाया य ॥ ५ ॥
तहवि य कोई अत्थो, उप्पज्जति तम्मि तम्मि समयंमि। पुव्वं भणिओऽणुमओ य, होइ इसिभासितेसु जहा ॥६॥"

ननु शाश्वतमिद द्वादशाङ्गमपि गणिपिटकमागमे आर्द्रककथानकं तु श्रीवर्द्धमानतीर्थावसरे तत्कथमस्य शाश्वतत्वमित्याशङ्क्याह ॥ "काममित्यादि" काममित्येतदभ्युपगमे इष्टमेवैतदस्माकम् । तद्यथा–द्वादशाङ्गमपि जिनवचन नित्य शाश्वत महाभाग–महानुभावम्, आमर्पौषध्यादिऋद्धिसमन्वितत्वान्न केवलमिदम् सर्वाण्यप्यध्ययनान्येवभूतानि । तथा सर्वाक्षरसन्निपाताश्च–मेलापका द्रव्यार्थादेशान्नित्या एवेति । ननु मतानुज्ञानाम निग्रहस्थानं भवत इत्याशङ्क्याह–'तहवियइत्यादि' । यद्यपि सर्वमपीद द्रव्यार्थतः शाश्वतम्, तथाऽपि कोऽप्यर्थस्तस्मिन् समये तथा क्षेत्रे कुतश्चिदार्द्रकादेः सकाशादाविर्भावमास्कन्दति, स तेन व्यपदिश्यते । तथा पूर्वमप्यसावर्थोऽन्यमुद्दिश्योक्तोऽनुमतश्च भवति, ऋषिभाषितेषु उत्तराध्ययनेषु यथा । इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धषष्ठाध्ययननिर्युक्तौ २७१ प्रतौ २४३ पत्रे ॥ २० ॥

केचिच्चात्रासदभिमानकवलितविशदाशयाः पण्डितमन्याः परेषा भोजनाद्यनुकम्पादानमपि निषेधयन्ति, वदन्ति चासद्वचनानि, मण्डूकपिण्डेन भुजगभोजनतुल्य तद्दानमित्यादीति तच्चाज्ञानम्, यतोऽनुकम्पादानस्य श्रीजिनशासने कुत्राप्यनिषिद्धत्वात् । प्रत्युत श्रीराजप्रश्नीये केशी गणधरः श्रीप्रदेशिन प्रति पूर्वं रमणीयो भूत्वा पश्चादरमणीयो मा भूया इत्यादिवाक्यैरनुकम्पादानस्य विहितत्वेन प्रतीयमानत्वात् । नच वाच्यम् । 'सुहिएसु अ दुहिएसु अ, जा मे अस्सजएसु अणुकंपा । रागेण व दोसेण व, तं निंदे तं च गरिहामि" । इत्यत्र तद्दानस्य प्रतिक्रान्तत्वादिति । तत्र निषेधतात्पर्यस्य रागद्वेषयोरेव विश्रान्तत्वात् । तथा चात्रापि तद्धर्मप्रशसा-

पूर्वं सद्धर्मनिन्दापूर्वं च यदसंयतिभोजनं तदेव निषिद्धम् । विशेषणस्य विशेषार्थोद्दीपकत्वात् । सा गाथा चेयम्-

"दयावरं धम्म दुगुंछमाणो, वहावहं धम्म पसंसमाणो । इक्कंपि जो भोअयती असीलं, णिवो णिसं जाति कुतोऽसुरेहिं? ॥ ४५ ॥" दया-प्राणिषु कृपा तया वरः-प्रधानो यो धर्मः तमेवंभूतं धर्मं जुगुप्समानो-निन्दन् । तथा वधं प्राण्युपमर्दमावहतीति वधावहः तं तथाभूतं धर्मं प्रशंसन्-स्तुवन्नेकमप्यशीलं-निर्व्रतं षड्जीवकायोपमर्दन यो भोजयेत्, किं पुनः प्रभूतान् । नृपो राजन्यो वा यः कश्चिन्मूढमतिधार्मिकमात्मानं मन्यमानः; स वराको निशेव नित्यान्धकारत्वान्निशा—नरकभूमिस्तां याति । कुतस्तस्यासुरेष्वधमदेवेष्वपि प्राप्तिः । इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धषष्ठाध्ययने २७१ प्रतौ २५४ पत्रे ॥ २१ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितश्रीजिनधर्मरसालसालातिशालिशीलश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि श्री सूत्रकृताङ्गक्कियद्विचारसमुच्चयनामा द्वितीयस्तरङ्गः ॥२॥

इति श्रीविचाररत्नाकरे द्वितीयस्तरंगः सम्पूर्णः ।

॥ अथ तृतीयस्तरङ्ग ॥

"रसाश्रित दुर्मदवादिवादग्रीष्मोष्मकापङ्कपमासशब्दम् ।
सता सदा शस्यफलासिद्धेतु, प्रीत्याऽऽश्रये श्रीजिनशासनाब्दम् ॥ १ ॥"

अथ क्रमायाताः श्रीस्थानाङ्गविचारा लिख्यन्ते–तत्र प्रथम कृष्णपाक्षिकशुक्लपाक्षिकयोः स्वरूपजिज्ञासया लेश्यास्वरूपविषये मतान्तरजिज्ञासया च सटीक सूत्रद्वय लिख्यते—

" एगा कण्हपक्खियाण वग्गणा एगा सुक्कपक्खियाण वग्गणा १ । एगा कण्हलेसाण वग्गणा एगा नीललेसाण वग्गणा एव जाव सुक्कलेसाण वग्गणा २ । " वृत्तिर्यथा–'एगा कण्हपक्खियाण वग्गणा इत्यादि' कृष्णपाक्षिकेतरयोर्लक्षणम्–"जेसिमवड्ढो पोग्गलपरियट्टो सेसओ उ संसारो । ते सुक्कपक्खिया खलु, अहिए पुण कण्हपक्खी य ॥ १ ॥ इति" एतद्विशेषितोऽन्यो दण्डकः । 'एगा किण्हलेसाण इत्यादि' । लिश्यते प्राणी कर्मणा यया सा लेश्या । यदाह–'श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्य.' । तथा–'कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः । स्फटिकस्येव तत्राय, लेश्याशब्द प्रयुज्यते ॥ १ ॥ इति" । इय च शरीरनामकर्मपरिणतिरूपा, योगपरिणतिरूपत्वात् । योगस्य च शरीरनामकर्मपरिणतिविशेषत्वात्, यत उक्त प्रज्ञापनावृत्तिकृता । "योगपरिणामो लेश्या, कथं पुनर्योगपरिणामो लेश्या ?, यस्मात्सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्यान्तर्मुहूर्त्ते शेषे योगनिरोधं करोति, ततोऽयोगत्वमलेश्यत्व च प्राप्नोति, अतोऽवगम्यते योगपरि-

णामो लेश्येति । स पुनर्योगः शरीरनामकर्मपरिणतिविशेषः । यस्मादुक्तं कर्म हि कार्मस्य कारणम् अन्येषां च शरीराणामिति । तस्मादौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः १ तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्यात् जीवव्यापारो यः स वाग्योगः २ तथौदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्यात् जीवव्यापारो यः स मनोयोगः ३ ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्यापीति"। अन्ये तु व्याचक्षते–कर्मनिष्यन्दो लेश्येति, सा च द्रव्यभावभेदाद् द्विधा। तत्र द्रव्यलेश्या कृष्णादिद्रव्याण्येव, भावलेश्या तज्जन्यो जीवपरिणाम इति। इयं च षट्प्रकाराजम्बूखादकपुरुषषट्कदृष्टान्ताद् ग्रामघातकपुरुषषट्कदृष्टान्ताद्वा आगमप्रसिद्धादवसेयम्। इति श्रीस्थानाङ्गप्रथमस्थानके ४४० प्रतौ ३१।३२ पत्रे ॥ १ ॥

पारम्पर्यवर्जिताः केचन विशिष्टक्षमाश्रमणप्रत्युपेक्षणादिकं गुरुपरम्परागतं योगविधिस्वरूपमजानाना दुष्करतराचाम्लादिलघुकर्मैकसाध्यनिरन्तरतपःक्रियाभीरवश्च योगोद्वहनं उद्देशसमुद्देशानुज्ञादिवचनैः प्रतिपदमागमोक्तमपि नाङ्गीकुर्वन्ति, तच्च तेषां चलनश्रमभिया मार्गत्यागपूर्वकं गर्त्तापातप्रायम्, योगविधिसत्तासूचकः सिद्धान्तश्चायम्–"दो दिसाओ अभिगिज्झ कप्पति निग्गंथाण वा णिग्गंथीण वा पव्वावित्तए–पाईणं चेव उदिणं ॥ २२ ॥
चेव, एवं मुंडावित्तए सिक्खावित्तए उट्ठावित्तए संभुंजित्तए संवसित्तए सज्झायं उद्दिसित्तए सज्झायं समुद्दिसित्तए सज्झायमणुजाणित्तए आलोइत्तए पडिक्कमित्तए निंदित्तए गरहित्तए विउट्टित्तए विसोहित्तए अक-

रणयाए अब्भुट्ठित्तए अहारिहं पायच्छित्तं तवोकम्मं पडिवज्जित्तए" । वृत्तिर्यथा'दो दिसाओ इत्यादि'द्वे दिशौ-काष्ठे अभिगृह्य-अङ्गीकृत्य तदभिमुखीभूयेत्यर्थः । कल्पते-युज्यते, निर्गता ग्रथाद्धनादेरिति निर्ग्रंथाः-साधवस्तेषां निर्ग्रंथ्य -साध्व्यस्तासां प्रव्राजयितुं रजोहरणादिदानेन प्राची-पूर्वामित्यर्थः उदीचीमुत्तरामित्यर्थः । उक्तंच-"पुव्वामुहो उ उत्तरमुहोव्व देज्जाऽहवा पडिच्छेज्जा । जीए जिणादओ वा हविज्ज जिणचेइयाइं च ॥१॥" इति । एवं इति यथा प्रव्राजनसूत्रं दिग्द्वयाभिलापेनाधीतम् एवं मुण्डनादिसूत्राण्यपि षोडशाध्येतव्यानीति । तत्र मुण्डयितुं-शिरो लुञ्चनतः १ शिक्षयितुं-ग्रहणशिक्षापेक्षया सूत्रार्थौ ग्राहयितुमासेवनाशिक्षापेक्षया तु प्रत्युपेक्षणादि शिक्षयितुमिति । २ उत्थापयितुं-महाव्रतेषु व्यवस्थापयितुं ३ संभोजयितुं-भोजनमण्डल्यां निवेशयितुं ४ संवासयितुं-संस्तारकमण्डल्यां निवेशयितुं ५ सुष्ठु आ-मर्यादयाऽधीयते इति स्वाध्यायोऽङ्गादिस्तमुद्देष्टुं-योगविधिक्रमेण सम्यग्योगेनाधीष्वेदमित्येवमुपदेष्टुमिति । ६ समुद्देष्टुं-योगसामाचार्यैव स्थिरपरिचितं कुर्विदमिति वक्तुमिति ७ अनुज्ञातुं-तथैव सम्यगेतद्धारयान्येषां च प्रवेदयेत्येवमभिधातुमिति ८ आलोचयितुं-गुरवे अपराधान्निवेदयितुमिति ९ प्रतिक्रमितुं-प्रतिक्रमणं कर्तुमिति १० निन्दितुं-अतिचारान् स्वसमक्षं जुगुप्सितुं ११ आह च-'सचरित्तपच्छायावो निंदत्ति' गर्हितुं-गुरुसमक्षं तामेव जुगुप्सितुं १२ आह च-'गरहावि तहा जातीयमेव नवरं परप्पयासणयत्ति' 'विउट्टित्तएत्ति' व्यतिवर्त्तयितुं वित्रोटयितुं विकुट्टयितुं वा, अतिचारानुबन्धं विच्छेदयितुमित्यर्थः १३ विशोधयितुमतिचारपङ्कापेक्षयाऽऽत्मानं विमलीकर्त्तुमिति । १४ अकरणतया पुनर्न करिष्यामीत्ये-

वमभ्युत्थातुमभ्युपगन्तुमिति १५ यथार्हमतिचाराद्यपेक्षया यथोचितं पापच्छेदकत्वात्प्रायाश्चित्तविशोधकत्वाद्वा प्रायश्चित्तम्, उक्तंच-"पावं छिंदइ जम्हा, पायच्छित्तं तु भण्णते तेण । पाएण वावि चित्तं, विसोहए तेण पच्छित्तं ॥ १ ॥' त्ति । तपःकर्म निर्विकृतिकादिकं प्रतिपत्तुम्-अभ्युपगन्तुमिति १६ । इति श्रीस्थानाङ्गद्वितीयस्थानकप्रथमोद्देशके ४४० प्रतौ ५४।५५ पत्रे ॥ २ ॥

केचिच्चानागमज्ञा मुनीनामशुद्धाशनादिदानं नरकायुर्बन्धफलमिति वदन्ति, तच्चानागमिकम्, अल्पायुष्कताया एवागमे तत्फलत्वेनोक्तत्वात्, अत्राशङ्कासमाधाने तु एतत्सूत्रतात्पर्यावबोधावगम्ये, तच्चेदम्—

"तिहिं ठाणेहिं जीवा अप्पाउयत्ताए कम्मं पकरेंति । तंजहा-पाणे अइवाइत्ता भवति १ मुसं वइत्ता भवति २ तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवति ३ इच्चेतेहिं तिहिं ठाणेहिं जीवा अप्पाउयत्ताए कम्मं पकरेंति" इति वृत्तिर्यथा-'तिहिं ठाणेहिं इत्यादि' त्रिभिः स्थानैः-कारणैर्जीवाः-प्राणिनः 'अप्पाउयत्ताएत्ति' अल्पं-स्तोकं आयुर्जीवितं यस्य सोऽल्पायुः तद्भावस्तत्ता तस्यै अल्पायुष्कतायै तदर्थं तन्निबन्धनमित्यर्थः । कर्मायुष्कादि । अथवा अल्पमायुर्जीवितं यत् आयुषस्तदल्पायुः तद्भावस्तत्ता तया कर्मायुर्लक्षणं प्रकुर्वन्ति-बध्नन्तीत्यर्थः । तद्यथा-प्राणान् स प्राणिनोऽतिपातयितेति शीलार्थे तृनि तृन्नन्तमिति कर्माणि द्वितीयेति, प्राणिनां विनाशनशील इत्यर्थः। एवंभूतो यो भवति, एवं मृषावादं वक्ता यश्च भवति, तथा तत्प्रकारं रूपं-स्वभावो नेपथ्यादिर्वा यस्य स तथारूपो दानोचित इत्यर्थः तं श्राम्यति-तपस्यतीति

श्रमणस्तपोयुक्तस्त मा हन इत्याचष्टे य पर प्रति स्वय हननिवृत्त. सन्निति स माहनो मूलगुणधरस्त, वा- शब्दौ विशेषणसमुच्चयार्थौ । प्रगता असवोऽसुमन्त. प्राणिनो यस्मात्तत्प्रासुकम् तन्निषेधादप्रासुकं सचेतन मित्यर्थ. । तेन इष्यते गवेष्यते उद्गमादिदोषविकलतया साधुभिर्यत्तदेषणीय कल्प्य तन्निषेधादनेषणीय तेन । अद्यते भुज्यते इत्यशन-ओदनादि । पीयते इति पान-सौवीरकादि । खादन खादस्तेन निर्वृत्त खादनार्थ तस्य निर्वर्त्यमानत्वादिति खादिम-भक्तौषधादि । स्वादन स्वादः, तेन निर्वृत्त स्वादिम च-दन्तपावनादीति । समाहारद्वन्द्व तेन, गाथाश्चात्र "असण ओदणसत्तुग मुग्ग जगाराइ खज्जगविही य । खीरादि सूरणादि मण्डग- पभिई य विन्नेय ॥ १ ॥ पाण सोवीरजवोदगाइ चित्त सुराइय चेव । आउक्काओ सव्वो कक्कडगजलाइय च तहा ॥ २ ॥ भत्तोस दन्ताई खज्जूर नालिकेरदक्खाइं । कक्कडिअवगफणसाइ, बहुविह खाइम नेय ॥ ३ ॥ दन्तवण तम्बोल, चित्त अज्जगकुडेडगाईय । महुपिप्पलिसुठाई, अणेगहा साइम होइत्ति" ॥ ४ ॥ प्रतिलम्भयिता लाभवन्त करोतीत्येवशीलो यश्च भवति । ते अल्पायुष्कतया कर्म प्रकुर्वन्तीति प्रक्रम' । 'इच्चेतेहिति' इत्येतैः प्राणातिपातादिभिरुक्तप्रकारैस्त्रिभिः स्थानैर्जीवा अल्पायुष्कतया कर्म प्रकुर्वन्तीति निगमनमिति । इह च प्राणा तिपातविरत्यादिगुणस्यनिर्देशोऽपि प्राणातिपातादीनामेवाल्पायुर्बन्धनिबन्धनत्वेन तत्कारणत्वमुक्तं द्रष्टव्यमिति । इय चास्य सूत्रस्य भावना । अध्यवसायविशेषेणैतत्त्रय यथोक्तफल भवतीति । अथवा यो हि जीवो जिनादिगुण- पक्षपातितया तत्पूजार्थं पृथिव्याद्यारम्भेण न्यासापहारादिना च प्राणातिपातादिषु वर्त्तते तस्य सरागसयम-

निरवद्यदाननिमित्तायुष्कापेक्षयेयमल्पायुष्टा समवसेया । अथ नैतदेवं निर्विशेषणत्वात्सूत्रस्याल्पायुष्कस्य क्षुल्लकभवग्रहणरूपस्यापि प्राणातिपातादिहेतुतो युज्यमानत्वादतः कथमभिधीयते स विशेषणप्राणातिपातादिवर्त्ती जीव आपेक्षिकी चाल्पायुष्कता इति ?, उच्यते, अविशेषणेऽपि सूत्रस्य प्राणातिपातादेर्विशेषणमवश्यं वाच्यम् यत इतस्तृतीयसूत्रे प्राणातिपातादित एवाशुभदीर्घायुष्टां वक्ष्यति । न हि समानहेतोः कार्यवैषम्यं युज्यते, सर्वत्रानाश्वासप्रसङ्गात् । तथा—'समणोवासयस्स णं भंते! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ? गोयमा! बहुतरिया से निज्जरा कज्जइ अप्पतराए से पावे कम्मे कज्जइ' इति भगवतीवचनश्रवणादवसीयते नैवेयं क्षुल्लकभवग्रहणरूपा अल्पायुष्टा । नहि स्वल्पपापबहुनिर्जरानिबन्धनस्यानुष्ठानस्य क्षुल्लकभवग्रहणनिमित्तता संभाव्यते, जिनपूजाद्यनुष्ठानस्यापि तथाप्रसङ्गात् । अथाप्रासुकदानस्य भवतूक्ता अल्पायुष्टा प्राणातिपातमृषावादयोस्तु क्षुल्लकभवग्रहणमेव फलमिति, नैतदेवम् , एकयोगप्रवृत्तत्वादविरुद्धत्वाच्चेति । अथ मिथ्यादृष्टिश्रमणब्राह्मणानां यदप्रासुकदानं ततो निरुपचरितैवाल्पायुष्टा युज्यते इतराभ्यां तु को विचार इति ?, नैवम्, अप्रासुकेनेति तत्र विशेषणस्यानर्थकत्वात्, प्रासुकस्यापि अल्पायुष्टाफलत्वाविरोधात्, उक्तंच भगवत्याम्—"समणोवासयस्स णं भंते! तहारूवं असंजयअविरयअपडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ?, गोयमा? एगंतसो पावे कम्मे कज्जइ णो से काइ निज्जरा

कब्रइस्ति "। यच्च पापकर्मण एव कारणं तदल्पायुष्टाया अपि कारणमिति। नन्वेव प्राणातिपातमृषावादावप्रासुकदान च कर्त्तव्यमापन्नमिति, उच्यते, आपद्यता नाम भूमिकापेक्षया को दोष ? । यत –" अधिकारिवशाच्छास्त्रे धर्मसाधनसस्थिति । व्याधिप्रतिक्रिया तुल्या, विज्ञेया गुणदोषयोः ॥ १ ॥ " तथा–गृहिण प्रति जिनभवनकारणफलमुक्त–" एतदिह भावयज्ञ', सद्गृहिणो जन्मफलमिद परमम् । अभ्युदयाव्युच्छित्या, नियमादपवर्गबीजमिति ॥ १ ॥ " तथा–"भन्नइ जिणपूयाए, कायवहो जइवि होइ उ कहिंचि । तहवि तई परिसुद्धा गिहीण कूवाहरणजोगो ॥ २ ॥ असदारंभपवत्ता, ज च गिही तेण तेसि विन्नेया । तन्निव्वित्तिफलच्चिय, एसा परिभावणीयमिद ॥३॥ " दानाधिकारे तु श्रूयते, द्विविधाः श्रमणोपासका'–सविग्नभाविता लुब्धकदृष्टान्तभाविताश्चेति । यथोक्तम्—"सविग्गभावियाण, लुद्धयदिट्ठतभावियाण च । मोत्तूण खेत्तकाले, भाव च कहिंति सुद्धुछ ॥ १ ॥" इति । तत्र लुब्धकदृष्टान्तभाविता यथाकथञ्चिद्ददति । सविग्नभावितास्त्वौचित्येनेति । तच्चेदम्—" सथरणमि असुद्ध, दुण्हवि गिण्हतदितयाणऽहिय । आउरदिट्ठतेण, त चेव हिय असथरणे ॥ १ ॥ " तथा—" नायागयाण कप्पणिज्जाण अन्नपाणाईण दव्वाण देसकालसद्धासक्कारकमजुयमित्यादि " क्वचित् 'पाणे अइवाइत्ता मुस वइत्ता' इत्येव भवति शब्दवर्जो वाचना तत्रापि स एवार्थ'। क्त्वाप्रत्ययान्त (न्ततया) वा व्याख्येया। प्राणानतिपात्य मृषोक्त्वा श्रमण प्रतिलभ्य अल्पायुष्कतया कर्म बध्नन्तीति प्रक्रमः, शेष तथैव । अथवा प्रतिलम्भनस्थानकस्यैवेतरे विशेषणे, तथाहि–प्राणानतिपात्याधाकर्मादिकरणतो मृषोक्त्वा यथा–भो॰ साधो! स्वार्थसिद्धमिदं भक्तादि कल्प-

वि १ ५

नीयं वो न शङ्का कार्येत्यादि, ततः प्रतिलंभ्य तथा कर्म कुर्वन्तीति प्रक्रमः। इह च द्वयस्य विशेषणत्वेनैकस्य विशेष्यत्वेन त्रिस्थानकत्वमवगन्तव्यम्। गम्भीरार्थं चेदं सूत्रम्, अतोऽन्यथाऽपि भावनीयम्। इति श्रीस्थानाङ्गतृतीयस्थानकप्रथमोद्देशके ४४० प्रतौ ९८।९९ पत्रे ॥ ३ ॥

इह हि जगद्गुरुणा श्रीवर्द्धमानस्वामिनाऽप्यनुमतयोः परमोपकारिणोर्मातापित्रोर्भक्त्यतिशयाय धर्मावबोधादिशुभोदर्काय च सर्वथा यतनीयं प्राज्ञैः। नच वाच्यं स्वस्ववेदविक्रियोपशमनाय प्रवृत्ताभ्यां ताभ्यां महीजलसंयोगोत्पन्नतृणन्यायेन कर्मवशादुत्पन्नाय प्राणिने किमुपकृतमिति ?। तदनन्तरमपि धारणपालनपोषणवात्सल्याद्यनेकोपकारकारित्वादशक्यप्रत्युपकारत्वमेव तयोः। नचेदं लौकिकमेव, आगमेऽपि ( तथोक्तेः )। स चायम्—

" तिण्हं दुप्पडियारं समणाउसो !, तंजहा—अम्मापिऊणो भट्टिस्स धम्मायरियस्स, संपाओवि य णं केइ पुरिसे अम्मापियरं सयपागसहस्सपागेहिं तिल्लेहिं अब्भंगित्ता गंधवट्टएण उव्वट्टित्ता तीहिं उदएहिं मज्जवित्ता सव्वालंकारविभूसियं करेत्ता मणुण्णं थालीपागसुद्धं अट्ठारसवंजणाउलं भोयणं भोयावित्ता जावज्जीवाए पिट्ठिवडिंसयाए परिवहेज्जा, तेणावि तस्स अम्मापिउस्स दुप्पडियारं भवइ, अहे णं से तं अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवइत्ता परूवइत्ता ठावित्ता भवइ तेणामेव तस्स अम्मापिउस्स " वृत्तिर्यथा—' तिण्हं ' इत्यादि 'तिण्हं' त्रयाणां दुःखेन—कृच्छ्रेण प्रतिक्रियते—कृतोपकारेण पुंसा प्रत्युपक्रियते इति खल्प्रत्यये सति दुष्प्रतिकारं

प्रत्युपकर्त्तुमशक्यमितियावत् रे श्रमण! हे आयुष्मन्! समस्तानिर्देशो वा हे श्रमणायुष्मन्! इति भगवता शिष्य सयोधित.। अम्मया–मात्रा सह पिता–जनक. अम्बापिता तस्येत्येक स्थानम्, जनकत्वेनैकत्वविवक्षणात्। तथा–'भट्टिस्स'त्ति भर्त्तु पोपकस्य स्वामिन इत्यर्थ', इति द्वितीयम्। धर्मदाता चाचार्यो धर्माचार्यस्तस्येति तृतीयम्। आह च–"दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन्। तत्र गुरुरिहामुत्र च, सुदुष्करतरप्रतीकार ॥१॥" इति तत्र जनकदुष्प्रतिकार्यतामाह—'सपाओ'त्ति प्रात'–प्रभात तेन सम समातः सप्रातरपि च–प्रभातसमकालमपि च यदैव प्रातः प्रवृत्त तदैवेत्यर्थ., अनेन कार्यान्तराव्यग्रता दर्शयति, सशब्दस्यातिशयार्थत्वाद्वा अतिप्रभाते प्रतिशब्दार्थत्वाद्वाऽस्य प्रतिप्रभातमित्यर्थः। कश्चिदिति कुलीन एव न तु सर्वोऽपि पुरुषो–मानव., देवतिरश्चोरेवंविधव्यतिकरासभवात्। शत पाकानाम्–औपधिक्काथाना पाके यस्य, औपधिशतेन वा सह पच्यते यत्, शत कृत्वो वा पाको यस्य, शतेन वा रूपकाणा मूल्यतः पच्यते यत्तच्छतपाकम्। एव सहस्रपाकमपि। ताभ्या तैलाभ्या 'अब्भंगित्ता' अभ्यङ्ग कृत्वा 'गधवट्टएण'ति गन्धाष्टकेन–गन्धद्रव्यक्षोदेन उद्वर्त्योद्वलन कृत्वा त्रिभिरुदकै –गन्धोदकोष्णोदकशीतोदकैर्मज्जयित्वा–स्नपयित्वा मनोज्ञ–कलमौदनादि स्थाली–पिठरी तस्या पाको यस्य तत्तथा, अन्यत्र हि पक्कमपक्क वा न तथाविध स्यादितीद विशेपणमिति शुद्ध–भक्तदोपवर्जितम् स्थालीपाक च तच्छुद्ध च स्थालीपाकेन वा शुद्धमिति विग्रह । अष्टादशभिर्लोकप्रसिद्धैर्व्यञ्जनकैः–शालनकैस्तक्रादिभि' (सूपादिभि')वा सकुल सङ्कीर्ण यत्तत्तथा, अथवाऽष्टादशभेद च तद्व्यञ्जनाकुल चेति, अत्र भेदपद

लोपेन समासः। भोजनं भोजयित्वा। एते चाष्टादश भेदाः-"सूओ १ दणो २ जवन्नं ३, तिन्नि य मंसाइ ६ गोरसो ७ जूसो ८। भक्खा ९ गुललावणिया १०, मूलफला ११ हरियगं १२ सागो १३॥ १ ॥ होइ रसालू य तहा १४, पाणं १५ पाणीय १६ पाणगं चेव। अट्ठारसमो सागो १८, निरुवहओ लोइओ पिंडो ॥ २ ॥" मांसत्रयं जलजादिसत्कम्, जूषो-मुद्गतन्दुलजीरककटुभाण्डादिरसः, भक्ष्याणि-खण्डखाद्यादीनि, गुडलावणिका-गुडपर्पटिका लोकप्रसिद्धा गुडधाना वा, मूलफलान्येकमेव पदम्, हरितकं-जीरकादि, शाको-वस्तूलादिभर्जिका, रसालू-मज्जिका तल्लक्षणमिदम्-"दो घयपला महुपलं, दहियस्सऽद्धाढयं मरिय वीसा। दस खंडगुल पलाइं, एस रसालू निवइजोग्गो ॥१॥"। पानं-सुरादि, पानीयं-जलम्, पानकं-द्राक्षापानादि, शाकस्तक्रासिद्ध इति। यावान् जीवो-यावज्जीवं यावत्प्राणधारणम् पृष्ठौ-स्कन्धे अवतंस इवावतंसः-शेखरस्तस्य करणमवतंसिका पृष्ठ्यवतंसिका तया परिवहेत्, पृष्ठ्यारोपितमित्यर्थः। तेनापि परिवाहकेन परिवहनेन वा तस्यां वा पितुर्दुष्प्रतिकारमशक्यप्रतीकार इत्यर्थः, अनुभूतोपकारतया तस्य प्रत्युपकारित्वात्। आह च-"कयउपयारो जो होइ सज्जणो होइ को गुणो तस्स?। उवयारबाहिरा जे, हवंति ते सुंदर। सुअण ॥१॥" त्ति। 'अहे णं से त्ति' अथ चेत् णमिति वाक्यालङ्कारे स पुरुषस्तमम्बापितरं धर्मे स्थापयिता-स्थापनशीलो भवति अनुष्ठानतः स्थापयतीत्यर्थः। किं कृत्वा? इत्याह-'आघवइत्ता' धर्ममाख्याय प्रज्ञाप्य-बोधयित्वा प्ररूप्य भेदत इति, अथवाऽऽख्याय-सामान्यतो यथा कार्यो धर्मः, प्रज्ञाप्य-विशेषतो यथाऽसावहिंसादिलक्षणः, प्ररूप्य-भेदतो यथा शीलाङ्गसहस्ररूप इति,

शीलार्थतृव्रतानि चैतानीति। 'तेणामेवात्ति' ततस्तेनैव धर्मस्थापनेनैव न परिवहनेन, अथवा तेनैव धर्मस्थापकपुरुषेण न परिवारिना तस्य प्रत्युपकरणीयस्याऽस्थापितु.। इति स्थानाङ्गतृतीयस्थानके प्रथमोद्देशके ४४० प्रतौ १०७ पत्रे ॥४॥

उपस्थापनाया अक्षराणि लिख्यन्ते—

"तओ सेहभूमीओ पण्णत्ता,। तजहा–उक्कोसा मज्झिमा जहन्ना। उक्कोसा छम्मासा, मज्झिमा चउम्मासा, जहन्ना सत्त राइ दिया इति" वृत्तिर्यथा–व्रतारोपणे कालविशेषानाह–'तओ सेहेत्यादि' सुगमम्। किंतु 'सेहत्ति' 'षिध् सराद्धौ' इति वचनात्, सिध्यते–निष्पाद्यते य स सेध शिक्षा वाऽधीत इति शैक्षः तस्य भूमयो–महाव्रतानामारोपणकाललक्षणा. अवस्था पदव्य इति सेधभूमयः शैक्षभूमयो वेति, अयमभिप्राय'–उत्कृष्टतः षड्भिर्मासैरुत्थाप्यते न ताननतिक्रम्यते। मध्यमतश्च चतुर्भिर्मा सैरुत्थाप्यते। जघन्यत. सप्तभिरेव रात्रिदिवैर्गृहीतशिक्षत्वादिति। उक्त च–"सेहस्स तिन्नि भूमी, जहन्न तह मज्झिमा य उक्कोसा। राइदि सत्त चउमासिया य छम्मासिया चेव॥ १॥ " त्ति आसु चाय व्यवहारोक्तो विभागः–पुव्वोवदट्ठपुराणे, करणजयट्ठा जहन्निया भूमी। उक्कोसा दुस्से(म्मे)ह, पडुच दुस्सद्दहाणं च॥ १॥ एमेव य मज्झिमगा, अणाहिज्जते असद्दहते य। भावियमेहाविस्सवि, करणजयट्ठा य मज्झिमगा॥२॥" इति श्रीस्थानाङ्गतृतीयस्थानकद्वितीयोद्देशके ४४० प्रतौ ११पत्रे ॥५॥

सिद्धान्ताध्ययन साधूनामेव सम्मत न गृहस्थानाम्, यदि तेषामपि तत्स्यात्तर्हि तेषामपि मुनीनामिव श्रुतस्थविरत्वमुक्त स्यात्, न च तत्तथोक्त, मुनीना तूक्तमेव। तत्पाठश्चायम्–

"तओ थेरभूमीओ पण्णत्ता, तंजहा-जाइथेरे सुयथेरे परियायथेरे, सट्ठिवासजाए समणे निग्गंथे जाइथेरे ठाणसमवायधरे समणे निग्गंथे सुअथेरे वीसवासपरियाए णं समणे निग्गंथे परियायथेरे । इति" वृत्तिर्यथा-'तओ थेरेत्यादि' व्यक्तम् । नवरं स्थविरो-वृद्धस्तस्य भूमयः-पदव्यः स्थविरभूमय इति । जातिर्जन्म, श्रुतमागमः, पर्यायः प्रव्रज्या, तैः स्थविरा-वृद्धा ये ते तथोक्ता इति। इह च भूमिकाभूमिकावतोरभेदादेवमुपन्यासः, अन्यथा भूमिका उद्दिष्टा इति ता एव वाच्याः स्युरिति । एतेषां च त्रयाणां क्रमेणानुकम्पापूजावन्दनानि विधेयानि । यत उक्तं व्यवहारे-"आहारे उवही सेज्जा, संथारे खेत्तसंकम्मे । किइच्छंदाणुवत्तीहिं, अणुकंपइ थेरगं ॥ १ ॥ उट्ठाणासणदाणाइं, जोगाहारप्पसंसणा । नीयसेज्जाइणिद्देसवत्तिए पूयए सुअं ॥ २ ॥ उट्ठाणं वंदणं चेव, गहणं दंडगस्स य । अगुरुणोवि य णिद्देसे, तईयाए पवत्तए ॥ ३ ॥" इति । इति श्रीस्थानाङ्गतृतीयस्थानकद्वितीयोद्देशके ४४० प्रतौ ११५ पत्रे ॥ ६ ॥

अल्पवृष्टिकारणानि लिख्यन्ते—

"तिहिं ठाणेहिं अप्पवुट्ठिकाए सिया । तंजहा-तंसिं च णं देसंसि वा पदेसंसि वा नो बहवे उदगजोणिया जीवा य पोग्गला य उदगत्ताए वक्कमंति विउक्कमंति चयंति उववज्जंति १। देवा णागा जक्खा भूया नो सम्मं आराहिया भवंति । तत्थ समुट्ठियं उदगपोग्गलं परिणयं वासिउकामं अन्नं देसं साहरंति २ । अब्भवद्दलं

न ण समुट्ठिय परिणय वासिउकाम वाउकाए विधुणाइ ३। इच्चेएहिं तिहिं ठाणेहिं अप्पवुट्ठिकाए सिया। इति" अल्प.-स्तोकोऽविद्यमानो वा वर्षणं-वृष्टिरध'पतन वृष्टिप्रधान कायो-जीवनिकायो व्योमनिपतदप्काय इत्यर्थः, वर्षणधर्मयुक्त वोदक सुगमानि चैतानि किं तु 'अप्पवुट्ठिकाएत्ति' अल्प.-स्तोकोऽविद्यवृत्तिर्यथा-'तिहिं' इत्यादिभिरष्टाभि' सूत्रैराह। वृष्टि , तस्या. कायो-राशिर्वृष्टिकाय., अल्पश्चासौ वृष्टिकायश्च अल्पवृष्टिकाय' स स्याद्भवेत्तास्मिंस्तत्र मगधादौ। चशब्दोऽल्पवृष्टिकारणान्तरसमुच्चयार्थ.।णमित्यलङ्कारे देशे-जनपदे, प्रदेशे तस्यैवैकदेशरूपे, वाशब्दौ विकल्पार्थौ, उदकस्य योनय उदकयोनय'-परिणामकारणभूता उदकयोनयः त एवोदकयोनिका उदकजननस्वभावा व्युत्क्रामन्ति-उत्पद्यन्ते, व्यपक्रामन्ति-च्यवन्ते। एतदेव यथायोग पर्यायत आचष्टे-च्यवन्ते उत्पद्यन्ते क्षेत्रस्वभावादित्येकम्। तथा देवा-वैमानिका ज्योतिष्का , नागा-नागकुमारा भवनपत्युपलक्षणमेतत् , यक्षा भूता इति व्यन्तरोपलक्षणम्। अथवा देवा इति सामान्यम्, नागादयस्तु विशेष', एतद्ग्रहण च प्राय एषामेवविधे कर्मणि प्रवृत्तिरिति ज्ञापनाय विचित्रत्वाद्वा सूत्रगतेरिति। नो सम्यगाराधिता भवन्ति, अविनयकरणाज्जानपदैरिति गम्यते। ततश्च तत्र मगधादौ देशे प्रदेशे वा तस्यैव समुत्थितम्-उत्पन्न उदकप्रधान पौद्गल-पुद्गलसमूहो मेघ इत्यर्थः। उदकपौद्गलं तथा परिणत उदकदायकावस्थाप्राप्तम् अत एव विद्युदादिकरणाद्वर्षितुकाम सत् अन्य देश मगधादिक संहरन्ति-नयन्तीति द्वितीयम्। अभ्राणि-मेघास्तैर्वार्दलकं दुर्दिन अभ्रवार्दलकं 'वाउआएत्ति' वायुकाय.-प्रचण्डवातो विधुनाति-ध्वसयतीति तृतीयम्। 'इच्चे इत्यादि' निगमनम्। इति स्थानाङ्गतृतीयस्थानकतृतीयोद्देशके ४४० प्रतौ १२६ पत्रे ॥७॥

॥ २८ ॥ इह केचिदज्ञानिनो भूयोभूयः सयुक्तिभिः सिद्धान्तोक्तिभिः सुविहितगीतार्थैर्बोधिता अपि योगपलापाग्रहं न त्यजन्ति, ततस्तान् प्रति 'अश्रान्ताः परोपकारे सन्त' इत्यङ्गीकृत्य पुनरपि योगविधिसत्तासूचकं सूत्रं लिख्यते—

" तओ न कप्पंति वाइत्तए (तओ अवायणिज्जा पणत्ता) तंजहा—अविणीए विगइपडिबद्धे अविउसियपाहुडे । इति " वृत्तिर्यथा—' तओ इत्यादि ' सुगमं नवरं न वाचनीयाः—सूत्रं न पाठनीयाः अत एवार्थमप्यश्रावणीयाः सूत्रादर्थस्य गुरुत्वात्, तत्राविनीतः—सूत्रार्थदातुर्वन्दनादिविनयरहितः, तद्वाचने हि दोषाः । यत उक्तम्—"इहरहविनाणथज्झवत्तणुइ, अविणीओ लंभिओ किमु सुएणं ? । माणट्ठो नासिहिई खएव खारोवसेगो उ ॥१॥ गोजूहस्स पडागा, सयं पलायस्स वड्ढई वेगं । दोसोदए य समणं, न होइ न नियाणतुल्लं व ? ॥२॥" निदानतुल्यमेव भवतीत्यर्थः । " विणयाहीया विज्जा, देइ फलं इह परे य लोगंमि । न फलइ अविणयगहिआ, सस्साणिव तोअहीणाइं ॥१॥" तथा विकृतिप्रतिबद्धो—घृतादिरसविशेषगृद्धोऽनुपधानकारीति भावः । इहापि दोष एव । यदाह—"अतवो न होइ जोगो, न य फलए इच्छियफलं विज्जा । अवि फलति विउलमगुणं, साहणहीणा जहा विज्जा ॥१॥" त्ति अव्यवसितम्—अनुपशान्तं प्राभृतमिव प्राभृतं नरकपालकौशलिकः परमक्रोधो यस्य सोऽव्यवसितप्राभृतः । उक्तं ॥ २८ ॥
च—" अप्पेवि पारमाणिं, अवराहे वयइ खामियं तं च । बहुसो उदीरयंतो, अविउसियपाहुडो स खलु ॥१॥ "त्ति पारमाणिं—परमक्रोधसमुद्घातं व्रजतीति भावः । एतस्य वाचने इहलोकतस्त्यागोऽस्य प्रेरणायां कलहनात्, प्रान्त-

देवताछलनाच, परलोकतोऽपि त्यागः, तत्र श्रुतस्य दत्तस्य निष्फलत्वात्, ऊषरक्षिप्तबीजवदिति । आह च–
" दुविहो उ परिच्चाओ इह चोअणकलह देवयाछलण । परलोगमि अ अफल, खित्तपिव ऊसरे बीय ॥ १ ॥" ति
इति स्थानाङ्गतृतीयस्थानकचतुर्थोद्देशके ॥ ८ ॥

केचिदेकान्ततो रागिणोऽपरे च छिद्रान्वेषिण इत्यादि श्रावकेष्वपि वैचित्र्यदर्शनान्न व्यामोहो विधेयो, नापि छिद्रान्वेषिष्वश्रावकधीः कर्त्तव्या, चातुर्विध्यस्यागमे उक्तत्वात् । स चायम्—

" चत्तारि समणोवासगा पण्णत्ता, तजहा–अम्मापिइसमाणे भाइसमाणे मित्तसमाणे सवत्तिसमाणे । चत्तारि समणोवासगा पण्णत्ता । तजहा–अद्दागसमाणे पडागसमाणे खाणुसमाणे खरटयसमाणे इति " वृत्ति-र्यथा–' अम्मापिइसमाणे इति ' मातापितृसमानः–उपचार विनापि साधुषु एकान्तेनैव वत्सलत्वात् । भ्रातृसमान'–अल्पतरप्रेमत्वात्तत्यविचारादौ निष्ठुरवचनादप्रीते तथाविधप्रयोजनेष्वत्यन्तवत्सलत्वाच्चेति । मित्रसमानः–सोपचारवचनादिना विना प्रीतिक्षते', तत्क्षतौ चापद्यप्युपेक्षकत्वादिति । समान.–साधारणः पतिरस्या. सा सपत्नी यथा सा सपत्न्या ईर्ष्यावशादपराधान् वीक्षते एव यः साधुषु दूषणदर्शनतत्परोऽनुपकारी च स सपत्नीसमानोऽभिधीयते इति । ' अद्दागत्ति ' आदर्शसमानो, यो हि साधुभिः प्रज्ञाप्यमानानुत्सर्गापवादादीनागमिकान् भावान् यथावत्प्रतिपद्यते सन्निहितार्थानादर्शकवत् स आदर्शसमानः । यस्यानवस्थितो बोधो विचित्रदेशनावायुना सर्वतोऽपह्रियमाणत्वात्पताकेव स पताकासमानः । यस्तु कुतोऽपि कदाग्रहान्न गीतार्थदेशनया चाल्यते सोऽनमन-

स्वभावबोधत्वेनाप्रज्ञापनीयः स्थाणुसमान इति। यस्तु प्रज्ञाप्यमानो न केवलं स्वाग्रहान्न चलति अपितु प्रज्ञापकं दुर्वचनकण्टकैर्विध्यति स खरकण्टकसमानः। खरा-निरन्तरा निष्ठुरा वा कण्टका यस्मिंस्तत्खरकण्टकं वब्बूलादिडालम् खरणमिति लोके यदुच्यते तच्च विलग्नं चीवरं न केवलमविनाशितं न मुञ्चति अपितु तद्विमोचकपुरुषादिकं हस्तादिषु कण्टकैर्विध्यति। अथवा खरण्टयति लेपवन्तं करोति यत्तत्खरण्टमशुच्यादि तत्समानः, यो हि कुबोधापनयनप्रवृत्तं संसर्गमात्रादेव दूषणवन्तं करोति। कुबोधकुशीलतादुष्प्रसिद्धिजनकत्वेनोत्सूत्रप्ररूपकोऽयमित्यसद्दूषणोद्भावकत्वेन वेति। इति श्रीस्थानाङ्गचतुर्थे स्थानके तृतीयोद्देशके ६४० प्रतौ २०५ पत्रे ॥ ९ ॥

ननु निरर्थकं धर्माचरणं, फलवन्ध्यत्वात्, यद्येतस्याशेषस्य यथोक्तफलाव्यभिचारः स्यात्तदा भूयांसोऽप्यनशनादिसदनुष्ठानेन विपन्नाः कथं स्वेन्द्रत्वादिविभवं न दर्शयन्ति?, मैवं, तदनागमने हेतुचतुष्टयस्य शास्त्रे प्रतिपादितत्वात्। पूर्वकाले तत्कारणसद्भावे कथमागतास्ते श्रूयन्ते इति चेत्तत्र पुण्यप्राबल्यं कारणमिति, सर्वं सुस्थं, देवानागमनहेतुप्रतिपादकं शास्त्रं चेदम्—

"चउहिं ठाणेहिं अहुणोववन्ने देवे देवलोएसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तए नो चेव णं संचाएइ हव्वमागच्छित्तए। तंजहा-अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए गिद्धे गढिए अज्झोववन्ने से णं माणुस्से कामभोए नो आढाइ नो परियाणाइ नो अट्ठं बंधइ नो नियाणं पकरेइ नो ठिइप्पकप्पं करेइ १। अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए तस्स णं माणुस्से पेम्मे वोच्छिणे दिव्वे संकंते

भवइ। अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए ४ तस्स ण एव भवइ-एयण्ण (इया पिह) गच्छ मुहुत्तेण गच्छ तेण कालेण अप्पाउआ मणुस्सा कालधम्मुणा सपन्ना भवति ३। अहुणोववण्णे देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए ४ तस्स ण माणुस्से गधे पडिकूले पडिलोमे यावि भवइ। उड्ढपिय ण माणुस्सए गधे चत्तारि पच जोयणसयाइ हव्वमागच्छइ इच्चेतेहि चउहि ठाणेहि अहुणोववन्ने देवे देवलोएसु इच्छेज्जा माणुस्सलोग हव्वमागच्छित्तए नो चेव ण सचाएइ हव्वमागच्छित्तए ४। इति" वृत्तिर्यथा-'चउहि ठाणेहि नो सचाएइ त्ति' सम्बधस्तथा देवलोकेषु-देवमध्ये इत्यर्थः। 'हव्व' शीघ्र 'सचाएइ त्ति' शक्नोति कामभोगेषु-मनोज्ञशब्दादिषु मूर्च्छित इव मूर्च्छितो-मूढस्तत्स्वरूपस्यानित्यत्वादेर्विबोधाक्षमत्वात्, गृद्धस्तदाकाङ्क्षावान् अतृप्त इत्यर्थः, ग्रथित इव ग्रथितस्तद्विषयस्नेहरज्जुभिः सन्दर्भित इत्यर्थः, अध्युपपन्नोऽत्यन्त तन्मना इत्यर्थः नाद्रियते-न तेष्वादरवान् भवति, न परिजानाति-एतेऽपि वस्तुभूता इत्येव न मन्यते, तथा तेष्विति गम्यते नो अर्थ बध्नाति-एतैरिद प्रयोजनमिति निश्चय करोति, तथा नो तेषु निदान प्रकरोति-एते मे भूयासुरित्येवमिति, तथा नो तेषु स्थितिविकल्पम्-अवस्थानविकल्पनम् एतेष्वह तिष्ठामि एते वा मम तिष्ठतु-स्थिरा भवन्तु इत्येवरूपम्, स्थित्या वा-मर्यादया प्रकृष्टः कल्प-आचारः स्थितिप्रकल्पस्त प्रकरोति-कर्तुमारभते, प्रशब्दस्यादिकर्मार्थत्वादिति। एव दिव्यविषयप्रसक्तिरेक कारणम्। तथा यतोऽसावधुनोत्पन्नो देवः कामेषु मूर्च्छितादिविशेषणोऽतस्तस्य मानुष्यकमित्यादीति दिव्यप्रेमसक्रान्तिर्द्वितीयम्। तथाऽसौ देवो यतो भो-

गेषु मूर्च्छितादिविशेषणो भवति ततस्तत्प्रतिबन्धात् 'तस्स णं इत्यादि' देवकार्याऽऽयत्ततया मनुष्यकार्याऽनायत्तत्वं तृतीयम्। तथा दिव्यभोगमूर्च्छितत्वादिविशेषणत्वात्तस्य मनुष्याणामयं मानुष्यः स एव मानुष्यको गन्धः प्रतिकूलो दिव्यगन्धविपरीतवृत्तिः प्रतिलोमश्चापि इन्द्रियमनसोरनाल्हादकत्वादेकार्थौ चैतावत्यन्तामनोज्ञताप्रतिपादनायोक्ताविति यावत्। इति परिमाणार्थः। 'चत्तारिपंचेति' विकल्पदर्शनार्थं कदाचिद्भरतादिष्वेकान्तसुषमादौ चत्वार्येव अन्यदा तु पञ्चापि मनुष्यपञ्चेन्द्रियतिरश्चां बहुत्वेनौदारिकशरीराणां तदवयवतन्मलानां च बहुत्वेन दुरभिगन्धप्राचुर्यादिति। आगच्छति मनुष्यक्षेत्रादाजिगमिषुं देवं प्रतीति। इदं च मनुष्यक्षेत्रस्याशुभस्वरूपत्वमेवोक्तम्। न च देवोऽन्यो वा नवभ्यो योजनेभ्यः परत आगतं गन्धं जानातीति अथवा अत एव वचनात्। यदिन्द्रियविषयप्रमाणमुक्तं तदौदारिकशरीरेन्द्रियापेक्षयैव संभाव्यते कथमन्यथा विमानेषु योजनलक्षादिप्रमाणेषु दूरस्थिता देवा घण्टाशब्दं शृणुयुः, यदि परं प्रतिशब्दद्वारेणान्यथा वेति। नरभवाशुभत्वं चतुर्थमनागमनकारणमिति, शेषं सुगमम्। इति स्थानाङ्गचतुर्थस्थानकतृतीयोद्देशके ४४० प्रतौ २० पत्रे॥ १०॥

न केवलमुरगा एवाशीविषाः, किंतु मनुष्यादयोऽपि तथोक्ताः सन्ति, इति जिज्ञासया उरगादिविषविषयजिज्ञासया च लिख्यते—

"चत्तारि जाइ आसीविसा पण्णत्ता। तंजहा–विच्छुजाइ आसीविसे, मंडुक्कजाइ आसीविसे, उरगजाइ आसीविसे, मणुस्सजाइ आसीविसे। विच्छुजाइ आसीविसस्सणं भंते! केवइए विसए पण्णत्ते?

गोयमा ! पभू ण विच्छुजाइआसीविसे अद्धभरहप्पमाणमेत्त बोंदि विसेण विसपरिणय विसट्टमाणी करित्तए विसए से विसट्टयाए नो चेव ण सपत्तीए करेसु वा करेति वा करिस्सति वा । मडुक्कजाइआसीविसस्स पुच्छा, पभू ण मडुक्कजाइआसीविसे भरहप्पमाणमेत्तं बोंदि विसेण विसपरिणय विसट्टमाणी करित्तए जाव करिस्सति वा । उरगजाइआसीविसस्स पुच्छा ? पभू ण उरगजाइआसीविसे जबूद्दीवप्पमाणमेत्त बोंदि विसेण सेस त चेव जाव करिस्सति वा । मणुस्सजाइआसीविसस्स पुच्छा ?, पभू ण मणुस्सजाइआसीविसे समयखेत्तप्पमाणमेत्त बोंदि विसेण विसपरिणय विसट्टमाणि करित्तए विसए से विसट्टयाए नो चेव ण जाव करिस्सतीति । वृत्तिर्यथा—सुगम चेद नवरम् 'आसीविसत्ति' आश्यो—दंष्ट्राः तासु विप येपा ते आशीविपाः, ते च कर्मतो जातितश्च । तत्र कर्मतस्तिर्यङ्मनुष्या' कुतोऽपि गुणादाशीविपा. स्युः, देवाश्चाऽऽसहस्राराच्छापादिना परव्यापादनादिति । उक्त च—"आसी दाढा तग्गयमहाविसाऽऽसीविसा दुविहभेया । ते कम्मजाइभेएण णेगहा चउ विहविगप्पा ॥१॥" त्ति जातित आशीविपा जात्याशीविपा वृश्चिकादय' । 'केवइयात्ति' कियान् विपयो—गोचरो विप स्येति गम्यते । प्रभुः समर्थ' । अर्द्धभरतस्य यत्प्रमाण सातिरेकत्रिपष्ट्यधिकयोजनशतद्वयलक्षण तदेव मात्रा—प्रमाण यस्याः साऽर्द्धभरतप्रमाणमात्रा ताम् । 'बोंदि' शरीर विपेण—स्वकीयाशीविपेण करणभूतेन विपपरिणता विपरूपापन्ना, विपपरिगतामिति क्वचित्पाठ', तत्र तद्व्याप्तामित्यर्थः । 'विसट्टमाणि' विकसन्तीं—विदलन्ती कर्त्तु विधातु विपय' स गोचरोऽसौ । अथवा 'से' तस्य वृश्चिकस्य विपमेवार्थो विपार्थ' तद्भावस्तत्ता तस्या—विपार्थ-

ताया विषत्वस्य तस्यां वा 'नो चेवत्ति' नैवेत्यर्थः। संपत्त्या एवंविधयोंदिसंप्रासिद्धारेण अकार्षुर्वृश्चिका इति गम्यते। इह चैकवचनप्रक्रमेऽपि बहुवचननिर्देशो वृश्चिकाशीविषाणां बहुत्वज्ञापनार्थम्, एवं कुर्वन्ति करिष्यन्ति। त्रिकालनिर्देशश्चामीषां त्रैकालिकत्वज्ञापनार्थः। समयक्षेत्रं-मनुष्यक्षेत्रम्। इति स्थानाङ्गचतुर्थस्थानकचतुर्थोद्देशके ४४० प्रतौ २२५ पत्रे ॥ ११ ॥

साधूनामाचार्योपाध्यायैः सह कलहस्थानानि लिख्यन्ते—

"आयरियोवज्झायस्स णं गणंसि पंच वुग्गहठाणा पण्णत्ता, तंजहा-आयरियोवज्झाए णं गणंसि आणं वा धारणं वा नो सम्मं पउंजित्ता भवइ १। आयरियोवज्झाएणं गणंसि अहारायणियाए किइकम्मं वेणइयं नो सम्मं पउंजित्ता भवइ २। आयरियोवज्झाए णं गणंसि जे सुअपज्जवजाते धारेइ, ते काले २ नो सम्मं अणुप्पवाइत्ता भवइ ३। आयरियोवज्झाए णं गणंसि गिलाणसेहवेयावच्चं नो सम्मं अब्भुट्ठित्ता भवइ ४। आयरियोवज्झाए णं गणंसि अणापुच्छियचारिया भवइ इति ५।" वृत्तिर्यथा-आचार्योपाध्यायस्येति समाहारद्वन्द्वः, कर्मधारयो वा, ततश्चाचार्यस्योपाध्यायस्य चाचार्योपाध्यायस्य वा 'गणंसित्ति' गणे विग्रहस्थानानि-कलहाश्रयाः। आचार्योपाध्यायो द्वयं वा गणे-गणविषये आज्ञां हे साधो! भवतेदं विधेयमित्येवंरूपामादिष्टाम्। धारणां-न विधेयमित्येवंरूपां नो नैव सम्यगौचित्येन प्रयोक्ता भवतीति साधवः परस्परं कलहायन्ते, असम्यग्नियोगाद् दुर्नियंतृत्वाच्च। अथवा अनौचित्येन नियोक्तारमाचार्यादिकमेव कलहायन्ते, इत्येवं सर्वत्रेति। अथवा गूढार्थपदैरगीतार्थस्य पुरतो देशान्तर-

स्थगीतार्थनिवेदनाय गीतार्थो यदतिचारनिवेदनं करोति साऽऽज्ञा, असकृदालोचनादानेन यत्प्रायश्चित्तविशेषावधारणं सा धारणा, तयोर्न सम्यक्प्रयोक्तेति कलहभागिति प्रथमम्। तथा स एव 'अहारायणियाए इति' रत्नानि द्विधा, द्रव्यतो भावतश्च, तत्र द्रव्यत कर्कैतनादीनि भावतो ज्ञानादीनि। तत्र रत्नैर्ज्ञानादिभिर्व्यवहरतीति रात्निकः-बृहत्पर्यायो यो रात्निको यथारात्निक तद्भावस्तत्ता तया यथारात्निकतया-यथाज्येष्ठं कृतिकर्म-वन्दनकं विनय एव वैनयिकं तस्य न सम्यक् प्रयोक्ता अन्तर्भूतकारितार्थत्वाद्वा प्रयोजयिता भवतीति द्वितीयम्। तथा स एव यानि श्रुतस्य पर्यवजातानि-सूत्रार्थप्रकारान् धारयति-धारणाविषयीकरोति तानि काले काले-यथावसरं न सम्यगनुप्रवाचयिता भवति न पाठयतीत्यर्थ' इति तृतीयम्। कालेऽनुप्रवाचयितेत्युक्तम्, तत्र गाथा -"कालक्कमेण पत्तं, संवच्छरमाइणा उ जं जंमि। तं तंमि चेव धीरो, वाएज्जा सो य कालोऽयं॥ १ ॥ तिवरिसपरियागस्स उ, आयारपकप्पनाममज्झयणं। चउवरिसस्स य सम्मं, सूअगडं नाम अंगंति॥ २ ॥ दसकप्पव्ववहारा, संवच्छरपणगदिक्खियस्सेव। ठाणं समवाओवि य, अंगे ते अट्ठवासस्स ॥ ३ ॥ दसवासस्स विवाहो, एक्कारसवासयस्स य इमे उ। खुड्डियविमाणमाई, अज्झयणा पंच नायव्वा ॥४॥ बारसवासस्स तहा, अरुणुववायाइ पंच अज्झयणा तेरसवासस्स तहा, उट्ठाणसुयाइया चउरो ॥ ५ ॥ चउदसवासस्स तहा, आसीविसभावणं जिणा बिंति। पन्नरसवासस्स य, दिट्ठीविसभावणं तह य ॥ ६॥ सोलसवासाईसु, एक्कोत्तरवुड्ढिएसु जहसंखं। चारणभावणमहसुविणभावणा तेअगनिसग्गा ॥ ७ ॥ एगूणवीसगस्स उ, दिट्ठीवाओ दुवालसममंगं। संपुण्णवीसवरिसो,

अणुवाई सव्वसुत्तस्स ॥८॥" तथा स एव ग्लानशैक्षवैयावृत्त्यं प्रति न सम्यक् स्वयमभ्युत्थाता-अभ्युपगन्ता भवतीति चतुर्थम् । तथा स एव गणं अनापृच्छ्य चरति क्षेत्रान्तरसंक्रमादि करोतीत्येवंशीलोऽनापृच्छ्यचारीति पञ्चमं विग्रहस्थानम् । इति स्थानाङ्गपञ्चमस्थानकप्रथमोद्देशके ४४० प्रतौ २५३ पत्रे ॥ १२ ॥

एतेनैव च सूत्रेण 'कालें अणुप्पवाइत्ता' इत्यादिवाक्यात्साधूनामपि यथोक्तवर्षातिक्रमे यथोक्तं शास्त्राध्यापनमुक्तम् । ततश्च ये गृहस्थान् सूत्रमध्यापयन्ति, ते निरस्ता द्रष्टव्याः ।

केचिदवश्यंभावितयाऽपि केवलिशरीराज्जीवविराधनां न स्वीकुर्वते, चलोपकरणतां च जानाना अपि साग्रहाशयत्वाद्, वदन्ति च जानन्नपि केवली कथं जीवघ्नं व्यापारं कुर्यात् ?, तच्चासत् । अवश्यंभाविभावस्य केवलिभिरशक्यप्रतीकारत्वाद्, अन्यथा जानन्नपि केवली कथं छद्मस्थवदपक्रोशकवस्त्रापहारकपुरुषसकाशं गच्छति ? कथं वा तस्माद् दूरमुपसर्पतस्तस्य वस्त्रापहाराद्यापद्येत ? तस्मादवश्यंभाविभावोऽशक्यप्रतीकार एव । छद्मस्थकेवलिवस्त्रापहारादिसूत्रे चेमे—

"पंचहिं ठाणेहिं छउमत्थे उदिन्ने परीसहोवसग्गे सम्मं सहेज्जा खमेज्जा तितिक्खेज्जा अहियासेज्जा । तंजहा-उदिण्णकम्मे खलु अयं पुरिसे उम्मत्तगभूए तेण मे एस पुरिसे अक्कोसइ वा अवहसइ वा निच्छोडेइ वा निब्भत्थेइ वा बंधेइ वा रुंधइ वा छविच्छेयं वा करेइ पमारं वा नेइ उद्दवेइ वा वत्थं वा पडिग्गहं वा कंबलं वा पाय-

पुच्छणं वा आच्छिंदइ वा विच्छिंदइ वा भिंदइ वा अवहरइ वा १। जक्खाइट्ठे खलु अयं पुरिसे तेण मे एस पुरिसे अक्कोसइ वा तहेव जाव अवहरइ वा २। ममं च णं तब्भववेयणिज्जे कम्मे उदिन्ने भवइ तेण मे एस पुरिसे अक्कोसइ वा जाव अवहरइ वा ३। ममं च णं सम्ममसहमाणस्स जाव अणहियासेमाणस्स किं मन्ने कज्जइ? एगंतसो मे पावे कम्मे कज्जइ ४। ममं च णं सम्मं सहमाणस्स जाव अहियासेमाणस्स किं मन्ने कज्जइ? एगंतसो मे निज्जरा कज्जइ ५। इच्चेतेहिं पंचहिं ठाणेहिं छउमत्थे उदिन्ने परीसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा॥ पंचहिं ठाणेहिं केवली उदिन्ने परीसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा। तंजहा-खित्तचित्ते खलु अयं पुरिसे तेण मे एस पुरिसे अक्कोसइ वा तहेव जाव अवहरइ वा १ दित्तचित्ते खलु अयं पुरिसे तेण मे एस पुरिसे जाव अवहरइ वा २ जक्खाइट्ठे खलु अयं पुरिसे तेण मे एस पुरिसे जाव अवहरइ वा ३ ममं च णं तब्भववेयणिज्जे कम्मे उदिन्ने भवइ तेण मे एस पुरिसे जाव अवहरइ वा ४ ममं च णं सम्मं सहमाणं खममाणं तितिक्खमाणं अहियासेमाणं पासित्ता बहवे अन्ने छउमत्था समणा निग्गंथा उदिन्ने २ परीसहोवसग्गे एवं सम्मं सहिस्संति जाव अहियासिस्संति ५ इच्चेतेहिं पंचहिं ठाणेहिं केवली उदिन्ने परिसहे सम्मं सहेज्जा जाव अहियासेज्जा इति"। वृत्तिर्यथा-'पंचही-त्यादि' स्फुटं किंतु छाद्यते येन तच्छद्म-ज्ञानावरणादिघातिकर्मचतुष्टयं तत्र तिष्ठतीति छद्मस्थः-सकषाय इत्यर्थः। उदीर्णान्-उदितान् परीषहोपसर्गानभिहितस्वरूपान् सम्यक्कषायोदयनिरोधादिना सहेत भयाभावेनाविचलनात्सहेत, क्षमेत क्षान्त्या, तितिक्षेत अदीनतया, अध्यासीत परीषहादावेवाधिक्येनासीत न चलेदिति।

उदीर्णमुदितं प्रबलं वा कर्म-मिथ्यात्वमोहनीयादि यस्य स उदीर्णकर्मा खलु वाक्यालङ्कारे अयं प्रत्यक्षः पुरुष उन्मत्तको मदिरादिना विप्लुतचित्तः स इव उन्मत्तकभूतः, भूतशब्दस्योपमानार्थत्वात्, उन्मत्तक एव वा
॥ ३३ ॥ उन्मत्तकभूतो भूतशब्दस्य प्रकृत्यर्थत्वादुदीर्णकर्मा, यतोऽयं उन्मत्तकभूतःपुरुषः तेन कारणेन 'मे इति' मां एषःअयमाक्रोशति शपति, 'उपहसइत्ति' उपहासं करोति, अपघर्षति अगघर्षणं करोति, निच्छोटयति सम्बन्धान्तरसम्बन्धं हस्तादौ गृहीत्वा बलात्क्षिपति, निर्भर्त्सयति दुर्वचनैः, बध्नाति रज्ज्वादिना, रुणद्धि कारागारप्रवेशादिना, छवेः-शरीरावयवस्य हस्तादेःछेदं करोति, प्रमारं-मरणप्रारंभः प्रमारोमूर्च्छाविशेषो मारणस्थानं वा तं नयति-प्रापयतीति, अपद्रावयति मारयति, अथवा प्रमारं मरणमेव 'उद्दवेइत्ति' उपद्रवयति उपद्रवं करोतीति, पतद्ग्रहं-पात्रं कम्बलं प्रतीतं पादप्रोञ्छनं-रजोहरणं आच्छिनत्ति-बलादुद्दालयति, विच्छिनत्ति-विच्छिन्नं करोति दूरे व्यवस्थापयतीत्यर्थः, अथवा वस्त्रमीपच्छिनत्ति-आच्छिनत्ति, विशेषेण छिनत्ति-विच्छिनत्ति, भिनत्ति-पात्रं स्फोटयति अपहरति-चोरयति । वाशब्दाः सर्वे विकल्पार्थाः, इत्येकं परीषहादिसहनालम्बनस्थानं । इदं चाक्रोशादिकमिह प्राय आक्रोशवधाभिधानपरीषहद्वयरूपं मन्तव्यम्, उपसर्गविवक्षायां तु मानुष्यकं प्राद्वेषिकाद्युपसर्गरूपमिति । तथा यक्षाधिष्ठितो-देवताधिष्ठितोऽयं, तेनाक्रोशयतीत्यादि द्वितीयम् । तथा अयं हि परी- ॥ ३३ ॥
षहोपसर्गकारी मिथ्यात्वादिकर्मवशवर्त्ती 'ममं च णंति' मम पुनस्तेनैव मानुष्यकेण भवेन जन्मना वेद्यते-अनुभूयते यत्तत्तद्भववेदनीयं कर्मोदीर्णं भवति अस्ति तेनैष मामाक्रोशयतीत्यादि तृतीयम् । तथा एष बालिशः पापाभीरुत्वा-

त्करोतु नामाक्रोशनादि मम पुनरसहमानस्य 'किं मन्नेत्ति' मन्ये इति निपातो वितर्कार्थः 'कज्जइत्ति' सपत्यते उत विनिश्चयमाह–'एगतसोत्ति' एकान्तेन सर्वथा पाप कर्म–असातादि क्रियते–सपत्यते इति चतुर्थः। तथा अय तावत्पाप बध्नाति मम चेद सहतो निर्जरा क्रियते इति पञ्चमम्। 'इच्चेतेहीत्यादि' निगमनमिति, शेष सुगममिति। छद्मस्थविपर्यय केवलीति तत्सूत्रम्। तत्र च क्षिप्तचित्त' पुत्रशोकादिना नष्टचित्त.। दृप्तचित्त पुत्रजन्मादिना दर्पवच्चित्तानुन्मत्त एवेति। मा च सहमान दृष्ट्वा अन्येऽपि सहिष्यन्त्युत्तमानुसारित्वात्प्राय इतरेषाम्। यदाह–"जो उत्तमेहिँ मग्गो, पहओ सो दुक्करो न सेसाण। आयरियमि जयते, तयणुचरा केण सीएज्ज॥ १॥" त्ति'इच्चेतेहि इत्यादि' अत्रापि निगमन, शेष सुगमम्॥ इति स्थानाङ्गपञ्चमस्थानकप्रथमोद्देशके ४४० प्रतौ २७५।२७६ पत्रे॥ १३॥

श्रीजिनशासने कुत्रापि नैकान्ततो हठो विधेयो, यतो निषिद्धमाद्रियते कारणात्,क्वचिदादृतमपि निषिध्यते। एव प्रतिमापूजादिष्वपि ज्ञेयम्। तथैव नैकान्तत किञ्चिन्निषिद्धमादृत वा,सूत्राज्ञैव सर्वत्र प्रमाण,न स्वमतिकल्पना। तत्र साधूना परमनिषिद्धोऽपि स्त्रीस्पर्शो निर्ग्रन्थ्यवलम्बनादौ विहितत्वेनोक्त. समीचीनतामञ्चति। तत्सूत्र चेदम्–

पचहि ठाणेहि समणे निग्गथे निग्गथि गिण्हमाणे वा अवलबमाणे वा णाइक्कमइ, तजहा–निग्गथि च ण अन्नयरे पसुजाइए वा पक्खिजाइए वा ओहाएज्जा, तत्थ निग्गथे निग्गथि गिण्हमाणे वा अवलबमाणे वा नाइक्कमइ १। निग्गथे निग्गथि दुग्गसि वा विसमसि वा पक्खलमाणि वा पवडमाणि वा गिण्हमाणे वा अवल-

बमाणे वा नाइक्कमइ २। निग्गंथे निग्गंथिं सेयंसि वा पंकंसि वा पणगंसि वा उदगंसि वा उवक्कसमाणिं वा उवुज्झमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ३। निग्गंथे निग्गंथिं नावं आरुहमाणे ओरुहमाणे वा णाइक्कमइ ४। खित्तइत्तं दित्तइत्तं जक्खाइट्ठं उम्मायपत्तं वा उवसग्गपत्तं वा साहिगरणं सपायच्छित्तं भत्तपाणपडियाइक्खित्तं अट्ठजायं निग्गंथे निग्गंथिं गिण्हमाणे वा अवलंबमाणे वा णाइक्कमइ ५।" वृत्तिर्यथा—'पंचहिं इत्यादि' सुगमम् नवरं 'गिण्हमाणेत्ति' बाह्वादावङ्गे गृह्णन् अवलंबमानः—पतन्तीं बाह्वादौ गृहीत्वा धारयन्, अथवा 'सव्वंगियं तु गहणं, करेण अवलंबणं तु देसंमित्ति।' नातिक्रामति स्वाचारमाज्ञां वा गीतार्थः स्थविरो वा निर्ग्रन्थिकाभावेन यथाकथञ्चित्पशुजातीयो हसो गवादिः, पक्षिजातीयो गृध्रादिः, 'ओहाएज्जत्ति' उपहन्यात्तत्र उपहनने गृह्णन्नातिक्रामति,कारणिकत्वान्निष्कारणत्वे तु दोषाः, यदाह—"मिच्छत्तं उड्डाहो विराहणा फासभावसंबंधो, पडिगमणाई दोसा भुत्ताभुत्ते य नायव्वा॥१॥ इत्येकम्। तथा दुःखेन गम्यतेऽसौ दुर्गः। स च त्रिधा-वृक्षदुर्गः श्वापददुर्गो म्लेच्छादिमनुष्यदुर्गः। तत्र वामार्गे, उक्तं च—"तिविहं च होइ दुग्गं, रुक्खे सावयमणुस्सदुग्गं च"त्ति। तथा विषमे वा—गर्त्तापाषाणाद्याकुले पर्वते वा प्रस्खलन्तीं वा गत्या प्रपतन्तीं वा भुवि। अथवा "भूमीए असंपत्तं पत्तं वा हत्थजाणुणादीहिं। पक्खलणं नायव्वं पवडणभूमीय गत्तेहिं।१।" गृह्णन्नातिक्रामतीति द्वितीयम्। तथा पङ्कः पनको वा सजलो यत्र निमज्जते स सेकस्तत्र वा, पङ्कः कर्दमस्तत्र वा, पनके वा आगन्तुकप्रतनुद्रवरूवे कर्दम एव वा अपकसन्तीं पङ्कपनकयोः परिग्हसन्तीं अपोह्यमानां सेके पनके वा नीयमानां गृण्हन्नातिक्रामतीति।

गाथा चेह–"पको खलु चिक्खिल्लो, आगतुपतणुओ दवो पणओ। सोच्चिय सजलो सेओ, सिज्जइ जत्थ दुविहेवि ॥१॥त्ति। पकपणएसु नियमा, उवकसण वुज्झण सिया सेए। निग्गमि निमज्जणा य, सजले सेए सिया दोवि॥२॥"त्ति इति तृतीयम्। तथा–'नावमारुहमाणेत्ति' आरोहयन् 'ओरुहमाणेत्ति' अवरोहयन्नुत्तारयन्नित्यर्थो नातिक्रामतीति चतुर्थम्। तथा–क्षिप्त–नष्ट रागभयापमानैश्चित्तं यस्या सा क्षिप्तचित्ता तां वा। उक्त च–"रागेण वा भयेण वा, अहवा अवमाणिया महंतेहिं। एतेहिं खित्तचित्तत्ति" तथा दृप्त–सन्मानादिर्पवाच्चित्तं यस्याः सा दृप्तचित्ता तां वा। उक्त च –"इति एस असमाणा, खित्तो समाणओ भवे दित्तो। अग्गीव इंधणेण, दिप्पइ चित्तं इमेहिं तु॥१॥ लाभमएण व मत्तो, अहवा जेऊण दुज्जय सत्तुति"। यक्षेण–देवेन आविष्टा–अधिष्ठिता यक्षाविष्टा तां वा। अत्रोक्तम्–" पुव्वभववेरिएण, अहवा रागेण रागिया संती। एतेहिं जक्खाइट्ठत्ति" उन्माद उन्मत्तता प्राप्ता उन्मादप्राप्ता तां वा। अत्राप्युक्तम्—"उम्माओ खलु दुविहो, जक्खाएसो य मोहणिज्जो य। जक्खाएसो वुत्तो, मोहेण इमं च वोच्छामि॥१॥ रूवंग दट्ठूण, उम्माओ अहव पित्तमुच्छाएत्ति" उपसर्ग–उपद्रव प्राप्ता उपसर्गप्राप्ता तां वा। इहाप्युक्तम्–" तिविहे खलु उवस्सग्गे, दिव्वे माणुस्सए तिरिक्खे य। दिव्वे य पुव्वभणिए, माणुस्से आभिओगे य ॥१॥ विज्जाए मंतेण य, चुण्णेण व जोइया अणप्पवसत्ति" तथा सहाधिकरणेन साधिकरणा युद्धार्थमुपस्थिता तां वा। सह प्रायश्चित्तेन सप्रायश्चित्ता ताम्। भावना चेह–"अहिगरणंमि कयंमि उ, खामेत्तुमुवट्ठियाए पच्छित्तं। तप्पढमयाभएणं, होइ किल ताव वहमाणी॥१॥" तथा भक्तपाने आभव प्रत्याख्याते यया सा भक्तपानप्रत्याख्याता, तां वा। इह गाथा–"अट्ठ

वा हेउं वा, समणीणं विरहए कहितस्स। मुच्छाए विवडियाए, कप्पइ गहणं परिण्णाए॥२॥" तथा अर्थः–कार्यं-
सुत्प्रव्राजनतः स्वकीयपरिणेत्रादेर्जातं यया सा अर्थजाता, पतिचौरादिना संयमाच्चाल्यमानेत्यर्थः तां वा।
॥ ३५ ॥ इह गाथा अन्नोवि जीए कज्जं संजायं एस अत्थजायो उ। तं पुण संजमभावा, चालिज्जंति समवलंबं॥१॥"ति इति
स्थानाङ्गपञ्चमस्थानकद्वितीयोद्देशके २४२ प्रतौ १५१ पत्रे ॥ १४ ॥

केचिदशास्त्रज्ञाः प्रतिपादयन्ति, यथा यादृशस्तादृशो भवतु परं तीर्थङ्करासनोपविष्टत्वात्तीर्थङ्करतुल्यत्वा-
च्चाचार्यो न त्याज्यः। असत्प्ररूपणे तु तस्य संसारवृद्धिः, किमन्येषामित्यादि। तच्च कुमतिविजृंभितं, कैश्चित्
कारणैराचार्योपाध्यायस्यापि गणापक्रमणं भवतीत्युक्तत्वात्। तच्चेदम्—

"पंचहिं ठाणेहिं आयरियउवज्झायस्स गणावक्कमणे पण्णत्ते। तंजहा-आयरियउवज्झाए गणंसि आणं वा
धारणं वा नो सम्मं पउंजित्ता भवइ १। आयरियउवज्झाए गणंसि अहारायणियाए किइकम्मं वेणइयं णो सम्मं
पउंजित्ता भवइ २। आयरियउवज्झाए गणंसि जे सुअपज्जवजाए धारिंति ते काले काले नो सम्ममणुप्पवाएत्ता
भवइ ३। आयरियउवज्झाए गणंसि सगणियाए वा परगणियाए वा निग्गंथीए नाहिल्लेसे भवइ ४। मित्तणा- ॥ ३५ ॥
इगणे वा से गणाओ अवक्कमेज्जा तेसिं संगहोवग्गहट्ठयाए गणावक्कमणे पन्नत्ते इति" वृत्तिर्यथा–'पंचहिं इत्यादि'
सुगमम्। नवरं आचार्योपाध्यायस्य आचार्योपाध्याययोर्वा गणात्–गच्छादपक्रमणं–निर्गमो गणापक्रमणम्।

आचार्योपाध्याययोर्गणे गच्छविषये आज्ञा वा योगेषु प्रवर्त्तनलक्षणा धारणा वा येषेषु प्रवर्त्तनलक्षणा नो-नैव सम्यग् यथौचित्य प्रयोक्ता तयो. प्रवर्त्तनशीलो भवति, इदमुक्त भवति-दुर्विनीतत्वाद्गणस्य ते प्रयोक्तुमशक्नुवन् गणादपक्रामति, कालिकाचार्यवदित्येकम् । तथा गणविषये रत्नाधिकतया यथाज्येष्ठ कृतिकर्म तथा वैनयिक-विनय नो-नैव सम्यक् प्रयोक्ता भवति, आचार्यसपदा साभिमानत्वात् । यत आचार्येणापि प्रतिक्रमणक्षा-मणादिपूचितानामुचितविनयः कर्त्तव्य एवेति द्वितीयम् । तथाऽसौ यानि श्रुतपर्यवजातानि-यान् श्रुतपर्याय-प्रकारानुद्देशकाध्ययनादीन् धारयति हृद्यविस्मरणतस्तानि काले काले यथावसर नो सम्यगनुप्रवाचयिता-तेषा पाठयिता भवति । 'गणेत्ति' इह सबध्यते, तेन गणे-गणविषये गणमित्यर्थ । तस्याविनीतत्वात्स्वस्य वा सुख-लपटत्वान्मन्दप्रज्ञत्वाद्वेति गणादपक्रामतीति तृतीयम् । तथाऽसौ गणे वर्तमान 'सगणियाएत्ति' स्वगणसम्ब-न्धिन्या 'परगणियाएत्ति' परगणसत्काया वा निर्ग्रन्थ्या तथाविधाशुभकर्मवशवर्त्तितया सकलकल्याणाश्रय-सत्रमसौधमध्याद्बहिर्लेश्या-अन्त करण यस्यासौ बहिर्लेश्य आसक्तो भवतीत्यर्थः एव गणादपक्रामतीति । न चेदम-धिकगुणत्वेनास्यासभाव्यम् यत पठ्यते-"कम्माइ नूण घणचिक्कणाइ गुरुयाइ वज्जसाराइ । नाणड्ढियपि पुरिस, पथाओ उप्पहं नेंति ॥१॥" इति चतुर्थम् तथा मित्र-ज्ञातिगणो वा सुहृत्स्वजनवर्गो वा से-तस्याचार्यादेः कुतोऽपि कारणाद्गणादप क्रमेत्,अतस्तेषा सुहृत्स्वजनाना संग्रहायर्थं गणादपक्रामण प्रज्ञसम् । तत्र सग्रहस्तेषा स्वीकार उपग्रहो वस्त्रादिभिरुपष्टम्भ इति पञ्चमम् । इति स्थानाङ्गपचमस्थानकद्वितीयोद्देशके २४२ प्रश्नौ १५२ पत्रे ॥ १५ ॥

केचिच्च वयं सिद्धान्तोक्तमेव स्वीकुर्म इत्यादि वृथा प्रलपन्तः परंपराचरणाद्यपलपन्ति, तच्चाज्ञानविलसितम्। यतः शास्त्रे मुनीनां प्रायश्चित्तदानाधिकारे आगमश्रुताज्ञाधारणाजीतानां पञ्चानामपि व्यवहारत्वेनोक्तत्वात्। तच्चेदम्-

पंचविहे ववहारे पण्णत्ते, तंजहा-आगमे सुए आणा धारणा जीए। जहा से तत्थ आगमे सिया, तत्थ आगमेणं ववहारं पट्ठवेज्जा१। नो से तत्थ आगमे सिया, जहा से तत्थ सुते सिया, सुतेणं ववहारं पट्ठवेज्जा २। नो से तत्थ सुते सिया, एवं जाव जहा से तत्थ जीए सिया, जीएणं ववहारं पट्ठवेज्जा। इच्चेतेहिं पंचहिं ववहारं पट्ठवेज्जा। तंजहा-आगमेणं जाव जीएणं, जहा जहा से तत्थ आगमे जाव जीए तहा तहा ववहारं पट्ठवेज्जा इति" वृत्तिर्यथा-'पंचविहे इत्यादि'। व्यवहरणं व्यवहारः, व्यवहारो-मुमुक्षुप्रवृत्तिनिवृत्तिरूपः, इह तु तन्निबन्धनत्वाद् ज्ञानविशेषोऽपि व्यवहारः। तत्रागम्यन्ते-परिच्छिद्यन्ते अर्था अनेनेत्यागमः केवलमनःपर्यायावधिपूर्वचतुर्दशकदशकनवकरूपः १ शेषं श्रुतमाचारप्रकल्पादि श्रुतम् २ नवादिपूर्वाणां श्रुतत्वेऽप्यतीन्द्रियार्थज्ञानहेतुत्वेन सातिशयत्वादागमव्यपदेशः केवलवदिति। यदगीतार्थस्य पुरतो गूढार्थपदैर्देशान्तरस्थगीतार्थनिवेदनायातिचारालोचनमितरस्यापि तथैव शुद्धिदानं साऽऽज्ञा ३ गीतार्थसंविग्नेन द्रव्याद्यपेक्षया यत्रापराधे यथा या विशुद्धिः कृता तामवधार्य यदन्यस्तत्रैव तथैव तामेव प्रयुंक्ते सा धारणा। वैयावृत्त्यकरादेर्वा गच्छोपग्रहकारिणोऽशेषस्यानुचितस्योचितप्रायश्चित्तपदानां प्रदर्शितानां धारणं धारणेति। ४। तथा द्रव्यक्षेत्रकालभावपुरुषप्रतिषेवानुवृत्त्या संहननधृत्यादिपरिहाणिमवेक्ष्य यत्प्रायश्चित्तदानम् यो वा यत्र गच्छे सूत्रातिरिक्तः कारणतः प्रायश्चित्तव्यवहारः प्रवर्तितो

वहुभिरन्यैश्चानुवर्त्तितस्तज्जीतमिति, अत्र गाथाः–" आगमसुयववहारो, सुणह जहा धीर पुरिसपन्नत्तो। पच्चक्खो य, परोक्खो सो वि अ दुविहो मुणेयव्वो ॥ १ ॥ पच्चक्खो वि य दुविहो, इंदियजो चेव नो य इंदियओ। इंदियपच्चक्खो वि यं, पचसु विसएसु नेयव्वो ॥ २ ॥ नोइंदियपच्चक्खो, ववहारो सो समासओ तिविहो। ओहिमणपज्जवे या, केवलनाणे य पच्चक्खो ॥ ३ ॥ पच्चक्खागमसरिसो, होइ परोक्खो वि आगमो जस्स। चदमुहीव उ सो वि हु, आगमववहारव होइ ॥४॥ परोक्ख ववहार, आगमओ सुयहरा ववहरति। चोद्दसदसपुव्वधरा, नवपुव्विग गधहत्थी य॥ ५ ॥ [ एते गन्धहस्तिसमाः] " ज जह मोल्ल रयण, त जाणइ रयणवाणिओ निउण। इय जाणइ पच्चक्खी, जो सुज्झइ जेण दिन्नेण ॥ ६ ॥ कप्पस्स य निज्जुत्तिं, ववहारस्सेव परमनिउणस्स। जो अत्थओ वियाणइ सो ववहारी अणुन्नाओ ॥ ७ ॥ त चेव अणुसज्जते, [अनुसरन् ] ववहारविहिं पउजइ जहुत्त। एसो सुअववहारो, पन्नत्तो वीयरागेहिं॥ ८ ॥ अपरक्कमो तवस्सी, गतु जो सोहिकारगसमीवे। न चएई आगतु, सो सोहिकरो विदेसाओ ॥ ९ ॥ अह पट्ठवेइ सीस, देसतरगमणनट्ठचेट्ठाओ। इच्छामऽज्जो काउ,सोहि तुब्भ सगासमि ॥ १० ॥ सो ववहारविहिन्नू, अणुसज्जित्ता सुओवएसेण। सीसस्स देइ आण तस्स इम देह पच्छित्त ॥ ११ ॥ ' गूढपदैरुपादिशतीति '। ३। जेणऽन्नयाइ दिट्ठ, सोहीकरण परस्स कीरत। तारिसय चेव पुणो, उप्पन्न कारण तस्स ॥ १२ ॥ सो तमि चेव दव्वे, खित्ते काले य कारणे पुरिसे। तारिसय चेव पुणो, करितु आराहओ होइ ॥ १३ ॥ वेयावच्चकरो वा, सीसो वा देसहिंडओ वावि 'देस अवधारतो, चउत्थओ होइ ववहारो ॥ १४ ॥ त्ति' वहुसो वहुस्सुएहिं, जो वत्तो नो निवारिओ होइ। वत्तणुवत्तपमाण, जीएण कय हवइ एय ॥ १५ ॥ तथा–ज जस्स उ पच्छित्त, आयरियपरपराए

'अविरुद्धं । जोगा य बहुविहीया, एसो खलु जीयकप्पो उ ॥ १६ ॥" इति । जीतं-आचरितमिदं चास्य लक्षणम्, "असढेण समाइन्नं, जं कत्थइ केणई असावज्जं । न निवारियमन्नेहिं, बहुमणुमयमेयमायरियं ॥ १७ ॥" इति, आगमादीनां व्यापारणे उत्सर्गापवादावाह-' यथेति '-यत्प्रकारः केवलादीनामन्यतमः 'से' तस्य व्यवहर्त्तुः स च उक्तलक्षणः । तत्र तेषु पञ्चसु व्यवहारेषु मध्ये तस्मिन् वा प्रायश्चित्तदानादिव्यवहारकाले व्यवहर्त्तव्ये वा वस्तुनि विषये आगमः-केवलादिः स्यात्-भवेत्ताद्दशेनेति शेषः । आगमेन व्यवहारं-प्रायश्चितदानादिकं प्रस्थापयेत्-प्रवर्त्तयेन्न शेषैः, आगमेऽपि पञ्चविधे केवलेनावन्ध्यबोधकत्वात्तस्य तदभावे च मनःपर्यायेणैवं प्रधानतराभावे इतरेणेति, अथवा 'नो' नैव 'से' तस्य स वा तत्र व्यवहर्त्तव्यादावागमः स्यात् यथा-यत् प्रकारं तत्र श्रुतं स्यात्ताद्दशेन श्रुतेन व्यवहारं प्रस्थापयेदिति । 'इच्चेतेहिं' इत्यादि निगमनं सामान्येनेति । यथा यथासौ तत्रागमादिः स्यात्तथा तथा व्यवहारं प्रस्थापयेदिति तु विशेषनिगमनम् । इति स्थानाङ्गपञ्चमस्थानकाद्वितीयोद्देशके ४४०प्रतौ २६६पत्रे ॥ १६ ॥

ननु धर्मपुण्ययोः कः प्रतिविशेष ? उच्यते, धर्मः श्रुतचारित्रादिः । पुण्यं तत्फलभूतं शुभं कर्म । एवमेव भगवतीवृत्तावभिप्रायस्तथाऽत्रापि—

णवविहे पुन्ने पन्नेत्ते । तं जहा-अन्नपुन्ने १ पाणपुन्ने २ वत्थपुन्ने ३ लेणपुन्ने ४ सयणपुन्ने ५ मणपुन्ने ६ वतिपुन्ने ७ कायपुन्ने ८ नमोकारपुन्ने ९ । इति । वृत्तिर्यथा-'पुन्ने' त्यादि, पात्रायान्नदानाद्यस्तीर्थङ्करनामादिपुण्यप्रकृतिबन्धस्तदन्नपुण्यमेवं सर्वत्र । नवरं 'लेण'त्ति लयनं-गृहम्, शयनं-संस्तारकः, मनसा गुणिषु तोषात्, वाचा प्रशंसनात्, कायेन पर्युपासनात्,

नमस्काराच्च, यत्पुण्य तन्मनःपुण्यादीनि । उक्त च "अन्न१ पान २ च वस्त्र ३ च,आलय' ४ शयना ५ सनम् ६। शुश्रूषा ७ वन्दन ८ तुष्टि ६, पुण्य नवविध स्मृतम् ॥ १ ॥" इति स्थानाङ्गनवमस्थानके ४४० प्रतौ ३३७ पत्रे ॥ १७ ॥

दुर्लभबोधिन प्रतिमापलापिन केचन स्थापना नाङ्गीकुर्वते, तच्च तेषा भृताविष्टहसितप्राय, सिद्धान्ते स्थापनाया' सत्यत्वेनोक्तत्वात् । सचायम्—

" दसविधे सच्चे पन्नत्ते । त जहा—जणवय १ समय २ ठवणा ३, नामे ४ रूवे ५ पडुच्चसच्चे य ६ । ववहार ७ भाव ८ जोगे ६, दसमे ओवम्मसच्चे य १०। ॥ १ ॥ " वृत्तिर्यथा—' जणवय 'त्ति सत्यशब्द प्रत्येकमभिसबन्धनीय' ततश्च जनपदेषु—देशेषु यद्यदर्थवाचकतया रूढ देशान्तरेऽपि तत्तदर्थवाचकतया प्रयुज्यमान सत्य जनितथमिति जनपदसत्यम्, यथा कोङ्कणादिषु पय' पिच्च नीरमुदकमित्यादि, सत्यत्व चास्यादुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वव्यवहारप्रवृत्तेरेव शेषेष्वपि भावना कार्येति । ' समय 'त्ति समत च तत्सत्य चेति समतसत्यम्, तथाहि—कुमुदकुवलयोत्पलतामरसाना समाने पङ्कसभवे गोपालादीनामपि समतमरविन्दमेव पङ्कजमिति, अतस्तत्र समततया पङ्कजशब्द सत्य., कुवलयादावसत्योऽसमतत्वादिति । ' ठवण ' त्ति स्थाप्यते इति स्थापना—यल्लेप्यकर्मार्हदादिविकल्पेन स्थाप्यते तद्विषये सत्य स्थापनासत्यम् , यथाऽजिनोऽपि जिनोऽयमनाचार्योऽप्याचार्योऽयमिति । 'नामे'त्ति नाम-अभिधान तत्सत्य नामसत्यम् , यथा कुलमवर्द्धयन्नपि कुलवर्द्धन उच्यते एव धनवर्द्धन इति । 'रूवे'त्ति—रूपापेक्षया सत्यम् रूपसत्य, यथा प्रपञ्चयति यत्प्रव्रजितरूप धारयन् प्रव्रजित उच्यते, नचासत्यताऽस्येति । ' पडुच्चसच्चे ' त्ति प्रतीत्य-आश्रित्य वस्त्वन्तर सत्यम् प्रतीत्यसत्य यथा अनामि-

तत्तद्रूपमभिव्यज्यत इति काया दीर्घत्वं ह्रस्वत्वं चेति। तथाहि-तस्यानन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसंनिधानेन तत्तद्रूपमभिव्यज्यत इति सत्यता। 'व्यवहार'त्ति व्यवहारेण सत्यं व्यवहारसत्यम्, यथा दह्यते गिरिर्गलति भाजनम्, अयं च गिरिगततृणादिदाहे व्यवहारः प्रवर्त्तते, उदके च गलतिसतीति। 'भाव'त्ति भावं-भूयिष्ठशुक्लादिपर्यायमाश्रित्य सत्यं भावसत्यम्-यथा शुक्ला बला-केति, सत्यपि हि पञ्चवर्णसंभवे शुक्लवर्णोत्कटत्वात् शुक्लेति। 'जोगे'त्ति योगतः-संबन्धतः सत्यं योगसत्यं, यथा दण्डयोगा-द्दण्डश्छत्रयोगाच्छत्र एवोच्यते। दशममौपम्यसत्यमिति उपमैवौपम्यं तेन सत्यमौपम्यसत्यम्, यथा समुद्रवत्तडागं, देवोऽयं, सिंहस्त्वमिति सर्वत्रैकारः प्रथमैकवचनार्थो द्रष्टव्यः। इति स्थानाङ्गदशमस्थानके ४४०प्रतौ ४०४पत्रे ॥ १८ ॥

दानस्वरूपजिज्ञासया किञ्चिल्लिख्यते-

"दसविहे दाणे पन्नत्ते, तं जहा-अणुकंपा १ संगहे २ चेव, भये ३ कालुणिएइ य ४। लज्जाए ५ गारवेणं च ६, अधम्मे ७ उण सत्तमे ॥१॥ धम्मे ८ य अट्ठमे वुत्ते, काहीइ ९ य कयंति १० य। वृत्तिर्यथा-दानस्य भेदानामनुयोगमाह-'दस' इत्यादिः, अणुकंपेत्यादिश्लोकः सार्द्धः, 'अणुकंप' इति दानशब्दसंबन्धादनुकम्पया-कृपया दानं दीनानाथवि-षयमनुकंपादानमथवा अनुकंपातो यद्दानं तदनुकंपैवोपचारात्, उक्तं च वाचकमुख्यैरुमास्वातिपूज्यपादैः-"कृपणेऽनाथदरिद्रे, व्यसनप्राप्ते च रोगशोकहते। यद्दीयते कृपार्थादनुकंपा तद्भवेद्दानम् ॥ १ ॥" सङ्ग्रहणं सङ्ग्रहो-व्यसनादौ सहायकरणं, तदर्थं दानं सङ्ग्रहदानम्, अथवा अभेदाद्दानमपि सङ्ग्रह उच्यते, आह च-" अभ्युदये व्यसने वा, यत्किञ्चिद्दीयते सहायार्थम्। तत्सङ्ग्रहतोऽभिमतं, मुनिभिर्दानं न मोक्षाय ॥ १ ॥" तथा भयाद्यद्दानं तद्भयदानम्, भयनिमित्तत्वाद्वा दानमपि भयमुपचारा-

दिति । उक्त च–राजारक्षपुरोहितमधुमुखमावल्लदण्डयाशिषु च । यद्दीयते भयार्थं तद्भयदान बुधैर्ज्ञेयम् ॥ १ ॥३, 'कालुणिएइ य' त्ति कारुण्य–शोकस्तेन पुत्रवियोगादिजनितेन तदीयस्यैव तल्पादे' स जन्मान्तरे सुखितो भवात्विति वासनातोऽन्यस्य वा यद्दान तत्कारुण्यदान, कारुण्यजन्यत्वाद्वा दानमपि कारुण्यमुक्तमुपचारादिति ४, लज्जया–ह्रिया दान यत्तल्लज्जादानमुच्यते । उक्त च–"अभ्यर्थितः परेण तु, यद्दान जनसमूहमध्यगत' । परचित्तरक्षणार्थं, लज्जायास्तद्भवेद्दानम् ॥१॥"५, इति, 'गारवेण च' त्ति गौरवेण–गर्वेण यद्दीयते तद्गौरवदानमिति । उक्त च–" नटनर्त्तमुष्टिकेभ्यो, दान सम्बन्धिबन्धुमित्रेभ्य । यद्दीयते–यशोऽर्थं, गर्वेण तु तद्भवेद्दानम् ॥१॥" ६, अधर्मपोषक दानमधर्मदानम्, अधर्मकारणत्वाद्वाऽधर्म एवेति । उक्त च–" हिंसानृतचौर्योद्यतपरदारपरिग्रहप्रसक्तेभ्य' । यद्दीयते हि दान, तज्जानीयादधर्माय ॥ १ ॥ "७ इति, धर्मकारण यत्तद्धर्मदान धर्म एव वा । उक्त च–"सममणितृणमुक्तेभ्यो, यद्दान दीयते सुपात्रेभ्य. । अक्षयमतुलमनन्त, तद्दान भवति धर्माय ॥१॥ ८, इति 'काहीइ य'त्ति करिष्यति कञ्चनोपकार ममायमिति बुद्ध्या यद्दान तत्करिष्यति दानमुच्यते ६, तथा कृत ममानेनैतत्प्रयोजनमिति प्रत्युपकारार्थं यद्दान तत्कृतमिति दानमुच्यते । उक्त च–"शतश' कृतोपकारो,दत्त च सहस्रशो ममानेन । अहमपि ददामि किञ्चित्प्रत्युपकाराय तद्दानम् ॥ १ ॥ " इति १० । इति श्रीस्थानाङ्गदशमस्थानके ४४०प्रतौ ४११पत्रे ॥ १९ ॥

॥इति श्रीमदकब्बरभूपालविशालचित्तालवालविनाद्वितवृपरसालशालातिशालिशीलश्रीश्रीश्रीहीरविजयसूरीश्वरशिष्योपाध्याय–श्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि स्थानाङ्गकियद्विचारनामा तृतीयस्तरङ्ग ॥ ३ ॥

विनमत जिनमतमभिमतफलवितरणसततसज्ञमभितनयम् ।
मुखरपरवादिमण्डलनिष्ठुरमुखमूकतामन्त्रम् ॥ १ ॥

अथ क्रमायाताः श्रीसमवायाङ्गविचारा लिख्यन्ते—

केचिच्चासद्वादिनः श्रीजिनप्रतिमापूजकान् विगायन्ति—अहो एते पूजाधर्मोपदेशेन जलपुष्पादिजन्तुहिंसका इत्यादि । तच्च सकर्णैरपकर्णनीयम् । यत एतादृशं किमपि कायिकं वाचिकं धर्मानुष्ठानं नास्ति, यत्र जीवविराधनाऽभावः । 'जावं च णं एयइ वेयइ' इत्यादिवचनात्, तथा च किमपि धर्मानुष्ठानं नानुष्ठेयं स्यात् । विराधना चेयं कूपखननन्यायेन प्रतिमापूजनोद्भुतसुकृतप्राग्भारप्लावितेति न दुष्टा, यतो ज्ञानत्रयबन्धुरैरतिचतुरैर्निर्जरैरपि मृदुशीतलजलदेन रजःशमने पृथिव्यादीनां, महेन्द्रध्वजेन वायोः, जलजस्थलजकुसुमवृष्ट्या वनस्पतेरित्यादिविराधनायाः स्वीकृतत्वात् । यतः श्रीत्रिजगद्गुरोः सहजातिशयाश्चत्वारः, एकादश च कैवल्योद्भुताः, एकोनविंशतिश्च सुरकृताः, सर्वे चतुस्त्रिंशत् सिद्धान्ते उक्ताः तथा हि—

"चोत्तीसं बुद्धाइसेसा पन्नत्ता । तं जहा—अवट्ठिए केसमंसुरोमणहे १, निरामया निरुवलेवा य गायलट्ठी २, गोखीरपंडुरे मंससोणिए ३, पउमुप्पलगंधिए उस्सासणिस्सासे ४, पच्छन्ने आहारनीहारे अदिस्से मंसचक्खुणा ५, आगासगयं चक्कं ६, आगासगयं छत्तं ७, आगासगयाओ सेतवरचामराओ ८, आगासफालियामयं सपायपीठं सीहासणं ९, आगासगओ कुडभीसहस्सपरिमंडियाभिरामो इंदज्झओ पुरओ गच्छइ १०, जत्थ जत्थ वि य णं अरहंता भगवंता चिट्ठंति वा णिसी-

यति या तत्थ तत्थ वि य ण तक्खणा चेव सछन्नपत्तपुप्फपल्लवसमाउलो सच्छत्तो सज्झओ सघंटो सपडाओ असोगवरपायवो अभिसजायइ ११, ईसिं पिट्ठओ मउडट्ठाणंमि तेयमंडल संजायइ अंधकारे वि य णं दसदिसाओ पभासेइ १२, बहुसमरमणिज्जे भूमिभागे १३, अहोसिरा कंटया भवंति १४, उऊ विवरीया सुहफासा भवंति १५, सीयलेणं सुहफासेणं सुरभिणा मारुएणं जोअणपरिमंडलं सव्वओ समंता संपमज्जिज्जइ १६, जुत्तफुसिएणं मेहेणं निहयरयरेणुयं किज्जइ १७, जलथलयभासुरप्पभूएणं विटट्ठाइणा दसद्धवन्नेणं कुसुमेणं जाणुस्सेहप्पमाणमित्ते पुप्फोवयारे किज्जइ १८, अमणुन्नाणं सद्दफरिसरसरूवगंधाणं अवकरिसो भवइ १९, मणुन्नाणं सद्दफरिसरसरूवगंधाणं पाउब्भावो भवइ २०, पच्चाहरओ वि य णं हिययगमणीओ जोअणनीहारी सरो २१, भगवं च णं अद्धमागधीए भासाए धम्ममाइक्खइ २२, सा वि य णं अद्धमागधी भासा भासिज्जमाणी तेसिं सव्वेसिं आरियमणारियाणं दुप्पयचउप्पयमियपसुपक्खिसरीसिवाणं अप्पप्पणो हियसिवसुहदा भासत्ताए परिणमइ २३, पुव्वबद्धवेरा वि य णं देवासुरनागसुवन्नजक्खरक्खसकिंनरकिंपुरिसगरुलगंधव्वमहोरगा अरहओ पायमूले पसंतचित्तमाणसा धम्मं निसामेंति २४, अन्नउत्थियपावयणीया वि य णं आगया वदंति २५, आगया समाणा अरहओ पायमूले निप्पडिवयणा भवंति २६, जओ जओ वि य णं अरहंतो भगवंतो विहरंति, तओ तओवि य णं जोयणपणवीसाएणं ईती न भवइ २७, मारी न भवइ २८, सचक्कं न भवइ २९, परचक्कं न भवइ ३०, अइवुट्ठी न भवइ ३१, अणावुट्ठी न भवइ ३२, दुब्भिक्खं न भवइ ३३, पुव्वुप्पन्ना वि य णं उप्पाइया वाही खिप्पामेव उवसमंति ३४, इति। वृत्तिर्यथा—

अथ चतुस्त्रिंशत्स्थानके किमपि लिख्यते—'बुद्धाइसेसा' इति बुद्धानां-तीर्थकृतामतिशेषा-अतिशया बुद्धातिशयाः । अवस्थितं-अवृद्धिस्वभावम् केशाश्च-शिरोजाः श्मश्रूणि च-कूर्चरोमाणि रोमाणि च-शेषशरीरलोमानि नखाश्च प्रतीता इति द्वन्द्वैकत्वमित्येकः १ । निरामया-नीरोगा, निरुपलेपा-निर्मला गात्रयष्टिः-तनुलतेति द्वितीयः २ । गोक्षीरपाण्डुरं मांसशोणितमिति तृतीयः ३ । तथा पद्मं च-कमलं गन्धद्रव्यविशेषो वा यत्पद्मकमिति रूढम् उत्पलं च-नीलोत्पलमुत्पलकुष्ठं वा गन्धद्रव्यविशेषस्तयोर्गन्धः स यत्रास्ति तत्तथोच्छ्वासनिश्वासमिति चतुर्थः ४ । प्रच्छन्नमाहारनीहारं-अभ्यवहरणं मूत्रपुरीषोत्सर्गौ प्रच्छन्नत्वमेव स्फुटतरमाह-अदृश्यं मांसचक्षुषा न पुनरवध्यादिलोचनेन पुंसेति पञ्चमः ५ । एतच्च द्वितीयादिकमतिशयचतुष्कं जन्मप्रत्ययम् । तथा-'आगासगयं' ति आकाशगतं-व्योमवर्त्ति आकाशकं वा प्रकाशकमित्यर्थः, चक्रं-धर्मचक्रमिति षष्ठः ६। एवं आकाशगं छत्रं छत्रत्रयमित्यर्थः इति सप्तमः ७ । आकाशके-प्रकाशके श्वेतवरचामरे प्रकीर्णके इत्यर्थः इत्यष्टमः ८ । 'आगासफालियामय' त्ति आकाशमिव यदत्यन्तमच्छं स्फटिकं तन्मयं सिंहासनं सह पादपीठेन सपादपीठमिति नवमः ९ । 'आगासगओ' त्ति आकाशगतोऽत्यर्थं तुङ्ग इत्यर्थः 'कुडभि' त्ति लघुपताकाः संभाव्यन्ते तत्सहस्रैः परिमण्डितश्चासावभिरामश्च-अतिरमणीयः इति विग्रहः 'इंदज्झओ' त्ति शेषध्वजापेक्षयाऽतिमहत्वादिन्द्रश्चासौ ध्वजश्च इन्द्रध्वजः इति विग्रहः इन्द्रत्वसूचको ध्वज इति वा ' पुरओ' त्ति जिनस्याग्रतो गच्छतीति दशमः १० । 'चिट्ठंति वा निसीयंति व' त्ति तिष्ठन्ति-गतिनिवृत्त्या निषीदन्तिउपविशन्ति 'तक्खणा चेव' त्ति तत्क्षणमेवाकालहीनमित्यर्थः, पत्रैः संछन्नः पत्रसंछन्न इति वक्तव्ये प्राकृतत्वात् संछन्नपत्र इत्युक्तं स चासौ पुष्पपल्लवसमाकुलश्च इतिविग्रहः पल्लवा-अंकुराः सच्छत्रः सध्वजः सघण्टः सपताकोऽशोकवरपादप इत्ये-

कादश. ११ । ' ईसि 'त्ति ईषत् अल्प ' पिट्ठओ ' त्ति पृष्ठत पश्चाद्भागे 'मउडट्ठाणमि'त्ति मस्तकप्रदेशे तेजोमण्डल-प्रभापटलमिति द्वादश १२ । बहुसमरमणीयो भूमिभाग इति त्रयोदश' १३ । ' अहोसिर 'त्ति अधोमुखा कण्टका भवन्तीति चतुर्दश १४ । ऋतवोऽविपरीता कथमित्याह-सुखस्पर्शा भवन्तीति पञ्चदश १५ । योजन यावत्क्षेत्रशुद्धि सवर्त्तकवातेनेति षोडश १६ । ' जुत्तफुसिएण 'त्ति उचितबिन्दुनिपातेन ' निहयरयरेणुय'त्ति वातात्खातमाकाशवर्त्तिरजो भूवर्त्ती तु रेणुरिति गन्धोदकवर्षाभिधान. सप्तदश' १७ । जलस्थलज यद्भास्वर प्रभूत च कुसुम तेन वृन्तस्थायिना-ऊर्द्ध्वमुखेन दशार्द्धवर्णेन-पञ्चवर्णेन जानुनोरुत्सेधस्य-उच्चत्वस्य यत्प्रमाण तदेव प्रमाण यस्य स जानूत्सेधप्रमाणमात्रपुष्पोपचार -पुष्पप्रकर इत्यष्टादश १८ । तथा ' कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघतगंधुद्धयाभिरामे भवइ' त्ति कालागुरुश्च-गन्धद्रव्यविशेषः प्रवरकुंदुरुक्क च-चीडाभिधान गन्धद्रव्यमिति तुरुष्क च-शिल्हकाभिधान गन्धद्रव्यमिति द्वन्द्व तत एतल्लक्षणो यो धूपस्तस्य मघमघायमानो-बहुलसौरभ्यो यो गन्ध उद्धुत-उद्भूतस्तेनाभिराम-अतिरमणीय यत्तत्तथा स्थान-निषदनस्थानमिति प्रक्रम इत्येकोनविंशतितम १९ । ' उभओ पासिं च ण अरहताण भगवताण दुवे जक्खा कडगतुडियथंभियभुया चामरुक्खेव करेंति 'त्ति कटकानि-प्रकोष्ठाभरणविशेषास्त्रुटितानि-बाह्वाभरणविशेषास्तैरतिबहुत्वेन स्तम्भितानिव स्तम्भितौ भुजौ ययोस्तौ तथा यक्षौ-देवाविति विंशतितम' २० । बृहद्वाचनायामनन्तरोक्तमतिशयद्वय नाभिधीयते अतस्तस्या पूर्वेष्टादशैव, अमनोज्ञाना शब्दादीनामपकर्षो-अभाव इत्येकोनविंशतितम. २१ । मनोज्ञाना प्रादुर्भाव इति विंशतितम २० । ' पच्चाहरओ ' त्ति प्रत्याहरतो-व्याकुर्वतो भगवत. ' हिययगमणीओ 'त्ति हृदयङ्गमः ' जोयणनीहारी सरो 'त्ति योजनातिक्रमी

स्वर इत्यकविंशः २१ । 'अद्धमागहीए 'त्ति प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा 'रसोर्लशौ मागध्या' मित्यादिलक्षणवती सा असमाश्रितस्वकीयसमग्रलक्षणाऽर्द्धमागधीत्युच्यते,तया धर्ममाख्याति, तस्या एवातिकोमलत्वादिति द्वाविंशः २२ । 'भासिज्जमाणी 'त्ति भगवताऽभिधीयमाना 'आरियमणारियाणं' आर्यानार्यदेशोत्पन्नानां द्विपदा—मनुष्याश्चतुष्पदा-गवादयः, मृगा-आटव्याः, पशवो-ग्राम्याः, पक्षिणः—प्रतीताः, सरीसृपा—उरःपरिसर्पा भुजपरिसर्पाश्चेति, तेषां किमात्मन आत्मन-आत्मीयया आत्मीययेत्यर्थः भाषातया—भाषाभावेन परिणमतीति संबन्धः, किंभूतासौ भाषा ? इत्याह—हितं-अभ्युदयं शिवं-मोक्षं सुखं—श्रवणकालोद्भवमानन्दं ददातीति हितशिवसुखदा इति त्रयोविंशः २३ । 'पुव्वबद्धवेरा' त्ति । पूर्वं-भवान्तरे अनादिकाले वा जातिप्रत्ययं बद्धं-निकाचितं वैरं-अमित्रभावो यैस्ते तथा, तेऽपि च आसतामन्ये देवा—वैमानिकाः असुराः नागाश्च-भवनपतिविशेषाः सुवर्णाः—शोभनवर्णोपेतत्वात् जोतिष्का यक्षराक्षसकिंनराः किंपुरुषा व्यन्तरविशेषाः गरुडा-गरुडलांच्छनत्वात् सुपर्णकुमारा भवनपतिविशेषाः गन्धर्वा महोरगाश्च-व्यन्तरविशेषाः एव एतेषां द्वन्द्वः, 'पसंतचित्तमाणसा' प्रशान्तानि-शमं गतानि चित्राणि रागद्वेषाद्यनेकविधविकारयुक्ततया विविधानि मानसानि-अन्तःकरणानि येषां ते प्रशान्तचित्तमानसा धर्मं निशामयन्तीति चतुर्विंशः २४ । बृहद्वाचनायामिदमन्यदतिशयद्वयमभिधीयते—यदुत अन्यतीर्थिकप्रावचनिका अपि च णं वन्दन्ते भगवन्तमिति गम्यते इति पंचविंशः २५ । आगताः सन्तोऽर्हतः पादमूले निष्प्रतिवचना भवन्तीति षड्विंशः २६ । 'जओ जओ वि य णं' इति यत्र यत्रापि च देशे 'तओ तओ' त्ति तत्र तत्रापि च पंचविंशतौ योजनेषु ईतिः—धान्याद्युपद्रवकारी प्रचुरमूषिकादिप्राणिगण इति सप्तविंशः २७। मारिः-जनमरक इत्यष्टाविंशः २८।

स्वचक्र-स्वकीयराजसैन्य तदुपद्रवकारि न भवतीत्येकोनत्रिंशः २६ । एवं परचक्र परराजसैन्यामिति त्रिंश ३० । अतिवृष्टिः-अधिकवर्ष इत्येकत्रिंशः ३१ । अनावृष्टिः- वर्षणाभाव इति द्वात्रिंशः ३२ । दुर्भिक्ष- दुष्काल इति त्रयस्त्रिंश. ३३ । ' उप्पाइया वाहि' ति उत्पाता-अनिष्टसूचका रुधिर वृष्ट्यादयस्तद्धेतुका येऽनर्थास्ते औत्पातिकाः तथा व्याधयो-ज्वराद्या. तदुपशमो-ऽभावो भवतीति चतुस्त्रिंशत्तम ३४ । अन्यच ' पचाहरओ ' इत आरभ्य येऽभिहितास्ते प्रभामण्डल च कर्मक्षयकृता', शेषाः भवप्रत्ययेभ्योऽन्ये देवकृता इति । एते च यदन्यथाऽपि दृश्यन्ते तन्मतान्तरमवगन्तव्यम् । इति समवायाङ्गे चतुस्त्रिंशे स्थानके ८४ प्रतौ ३३ पत्रे ॥ १ ॥

केचिच्च श्रावकाणामुपधानोद्वहन न मन्यते, तच्च सिद्धान्तापरिज्ञानम् । यत' उवासगदसासु ण उवासगाण तवोवहाणाइ इत्यादिनात्र श्रावकोपधानोद्वहनस्योक्तत्वात् । नच वाच्य अत्र च वक्ष्यते इत्युक्त तत्र तु न दृश्यते इत्यादि, कालेन ग्रन्थस्य व्यवच्छिन्नत्वात्, अन्यथा स्थानद्विगुणतयाऽस्य भगवत्यादिभ्योऽपि महत्तरताया पूज्यमानत्वात्, अन्येषामप्यत्र वाच्यतयोक्तानां तत्र नोक्तानां जल्पानाम(न)ङ्गीकार्यतापत्तेश्चेति दिक् । उपधानाक्षरावबोधाय च साद्यन्तमिद सूत्र लिख्यते-

" से किं त उवासगदसाओ ? उवासगदसासु ण उवासगाण नगराइ उज्जाणाइ, चेइयाइ, वणखडा,रायाणो अम्मापियरो, समोसरणाइ, धम्मायरिया, धम्मकहाओ, इहलोइयपरलोइयइड्ढिविसेसा, उवासगाण च सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जणयाओ सुयपरिग्गहा, तवोवहाणाइ, पडिमाओ, उवसग्गा, सलेहणाओ, भत्तपच्चक्खाणाइ, पाओवगमणाइ, देवलोगगमणाइ, सुकुलपच्चायाया पुणो बोहिलाभो अतकिरियाओ आघविज्जति । उवासगदसासु ण उवा-

सगाणं रिद्धिविसेसा परिसा वित्थरधम्मसवणाणि बोहिलाभअभिगम सम्मत्तविसुद्धया थिरत्तं मूलगुणुत्तरगुणअइआरा ठिइ-विसेसा बहुविसेसा पडिमाभिग्गहग्गहणपालणाओ उवसग्गाहियासणा णिरुवसग्गया य तवो य विचित्ता सीलव्वयगुणवेर-मणपच्चक्खाणपोसहोववासा अपच्छिममारणंतिया य संलेहणाझोसणाहिं अप्पाणं जह य भावइत्ता बहूणि भत्ताणि अणस-णाए छेयइत्ता उववन्ना कप्पवरविमाणुत्तमेसु जह अणुभवंति सुरवरविमाणवरपुंडरिएसु सुक्खाइं अणोवमाइं कमेण उत्त-माइं, तओ य आउक्खएणं चुया समाणा जह जिणमयंमि बोहिं लद्धूण य संजमुत्तमं तमरयोघविप्पमुक्का उवेंति जह अक्खय सव्वदुक्खमोक्खं, एते अन्ने य एवमादि त्ति' । वृत्तिर्यथा—'सेकिंतमित्यादि' अथ कास्ता उपासकदशाः ? उपासकाः— श्रावकास्तद्गतक्रियाकलापप्रतिबद्धा दशाः— दशाध्ययनोपलक्षिता उपाशकदशाः ता एवाह—'उपासग-दसासु णं' उपासकानां नगराणि उद्यानानि चैत्यानि वनखण्डा राजानः अम्बापितरौ समवसरणानि धर्माचार्यौ धर्मकथा ऐहलौकिकपारलौकिकाद्धिऋद्धिविशेषाः, उपासकानां च शीलव्रतविरमणगुणप्रत्याख्यानपोषधोपवासप्रतिपादनताः, तत्र शील-व्रतानि—अणुव्रतानि विरमणानि— रागादिविरतयः गुणा-गुणव्रतानि प्रत्याख्यानानि-नमस्कारसहितादीनि पौषधो-अष्टम्या-दिपर्वदिनं तत्रोपवसनं—आहारशरीरसत्कारादित्यागः पौषधोपवासः ततो द्वन्द्वः सत्येतेषां प्रतिपादनताः-प्रतिपत्तय इति विग्रहः, श्रुतपरिग्रहास्तपउपधानानि च प्रतीतानि 'पडिमाओ' त्ति-एकादश उपासकप्रतिमाः कायोत्सर्गा वा उपसर्गा-देवादिकृतो-पद्रवाः संलेखना-भक्तपानप्रत्याख्यानानि पादपोपगमनानि देवलोकगमनानि सुकुलप्रत्यायातिः पुनर्बोधिलाभोऽन्तक्रिया चा-रव्यायन्ते पूर्वोक्तमेवेतो विशेषत आह—'उवासगे' त्यादि, तत्र ऋद्धिविशेषा—अनेक कोटीसंख्याद्रव्यादिसंपद्विशेषाः तथा

परिषद'-परिवारविशेषा' यथा-मातापितृपुत्रादिकाऽभ्यन्तरपरिषत् दासीदासमित्रादिका बाह्यपरिषदिति, विस्तरथमश्रर्न-णानि महावीरसंनिधौ, ततो बोधिलाभो,ऽभिगम', सम्यक्त्वस्य विशुद्धता, स्थिरत्न सम्यक्त्वशुद्धेरेव, मूलगुणोत्तरगुणा-अणुव्रतादयः, अतिचारारेतेषामेव वधबन्धादिना खण्डितानि, स्थितिविशेषाश्च उपासकपर्यायस्य कालमानभेदा', बहुविशेषा , प्रतिमा -प्रभूतभेदा. सम्यग्दर्शनादिप्रतिमा, अभिग्रहग्रहणानि, तेषामेव पालनानि, उपसर्गाधिसहनानि, निरुपसर्ग-चोपस-र्गाभावश्चेत्यर्थ , तपांसि च विचित्राणि, शीलव्रतादयोऽनन्तरोक्तरूपाः, अपाश्चिमाः-पश्चात्कालभाविन्यः अकारस्त्वमङ्गलप-रिहारार्थं मरणरूपे अन्ते भवा मारणान्तिका आत्मनः शरीरस्य जीवस्य च संलेखना - तपसा रागादिजयेन च कृशीकर णानि आत्मसंलेखना. तत पदत्रयस्य कर्मधारय तासा, 'झोसण' ति जोषणा'-सेवना करणानीत्यर्थः ताभिरपाश्चिम-मारणान्तिकात्मसंलेखनाजोषणाभिरात्मान यथा भावयित्वा बहूनि भक्तानि अनशनतया-निर्भोजनतया छेदयित्वा-व्यवच्छेद्य उपपन्ना मृत्वेति गम्यते केषु ? कल्पवरेषु यानि विमाना युत्तमानि, तेषु । यथाऽनुभवन्ति सुरवरविमानानि वरपुण्डरीका-णीव वरपुण्डरीकाणि यानि तेषु । कानि ? सौख्यान्यनुपमानि क्रमेण भुक्त्वोत्तमानि, तत आयुष्कक्षयेण च्युता. सन्तो यथा जिनमते बोधि लब्ध्वा इति शेष', लब्ध्वा च संयमोत्तम-प्रधानसंयम तमोरजओघविप्रमुक्ता-अज्ञानकर्मप्रवाहविप्रमुक्ता उपयान्ति यथा अक्षय-अपुनरावृत्तिक सर्वदु खमोक्ष-कर्मक्षयमित्यर्थ । तथोपासकदशासु आख्यायते इति प्रक्रम । इति समवायाङ्गे सटयाक्रममभाष्यनन्तर ६५ प्रतौ ७० पत्रे ॥ २ ॥

आधुनिका. १,ईदृग्म.याः ये चन 'इहेइय दुवालसग' इत्यादिसूत्र दर्शयन्तो जमालेरनन्तभरत्व निश्चिनवते, अनेन च तेषामे-

तत्सूत्रतात्पर्यानवबोधो निश्चियते, तथा हि यद्यप्यत्र टिकायां चातुरन्तसंसारकान्तारभ्रमणे जमालिर्दृष्टान्तीकृतोऽस्ति तथाऽपि एकदेशेनैवाऽयं दृष्टान्तो, न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वात्मना तुल्यत्वम्, मुखमाह्लादकारिचन्द्रवादित्यादिवत्तेन च संसारभ्रमणे एव जमालिदृष्टान्तो न तु चातुरन्तसंसारकान्तारे, संसारभ्रमणं च जमालेः पञ्चदशभिर्भवैः संपन्नमेव, यदि च दृष्टान्तस्यैकदेशत्वानङ्गीकारेण सर्वात्मना जमालिर्दृष्टान्तस्तर्हि भगवत्या सह विरोधः संपनीपद्यते। यथा अत्र चातुरन्तसंसारकान्तारभ्रमणमुक्तं तत्र तु जमालेः 'चत्तारि पंच देवमणुयतिरिक्खजोणियभवग्गहणाइं' इत्यादिना गतित्रय एव पञ्चदशानामेव भवानामुक्तत्वादित्यलं व्यासेन, अनेन सूत्रेण नैवानन्तभवत्वं निर्णेतुं शक्यमिति। सूत्रं च यथा—" इच्चेइयं दुवालसंगं गणिपिडगं अतिते काले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिंसु। इच्चेइयं दुवालसंगं गणिपिडगं पडुप्पन्ने काले परित्ता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टंति। इच्चेइयं दुवालसंगं गणिपिडगं अणागए काले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिस्संति। इच्चेइयं दुवालसंगं गणिपिडगं अतीते काले अणंता जीवा आणाए आराहित्ता चाउरंतसंसारं वितिवइंसु। एवं पडुप्पन्नेवि अणागएवि। त्ति, वृत्तिर्यथा—सांप्रतं द्वादशाङ्गविराधनानिष्पन्नं त्रैकालिकं फलमुपदर्शयन्नाह—' इच्चेइयमित्यादि ' इत्येतद्द्वादशाङ्गं गणिपिटकमतीते काले अनन्ता जीवा आज्ञया विराध्य चतुरंतसंसारकान्तारं ' अणुपरियट्टिंसु'त्ति अनुपरिवृत्तवन्तः। इदं हि द्वादशाङ्गं सूत्रार्थोभयभेदेन त्रिविधम्, ततश्चाज्ञया सूत्राज्ञया अभिनिवेशतोऽन्यथा पाठादिलक्षणया अतीते काले अनन्ता जीवाश्चतुरन्तं संसारकान्तारं-नरकतिर्यग्नरामरविविधवृक्षजालदुस्तरं भवाटवीगहनमित्यर्थः, अनुपरावृत्तवन्तो जमालिवत्। अर्थाज्ञया पुनरभिनिवेश-

॥ ४३ ॥

तोऽन्यथा प्ररूपणादिलक्षणया गोष्ठामाहिलादिवत् । उभयाज्ञया पुनः पञ्चविधाचारपरिज्ञानकरणोद्यतगुर्वादेशाऽन्यथाकरणलक्षणया गुरुप्रत्यनीकद्रव्यलिङ्गधार्यनेकश्रमणवत् सूत्रार्थोभयानि विराध्येत्यर्थः । अथवा द्रव्यक्षेत्रकालभावापेक्षमागमोक्तानुष्ठानमेवाज्ञा तया तदकरणेनेत्यर्थः । 'इच्चेइय'मित्यादि गतार्थमेव, नवरं 'परित्ता जीवा' इति । सङ्ख्येया जीवा वर्त्तमानविशिष्टविराधकमनुष्यजीवानां सङ्ख्येयत्वात् 'अणुपरियट्टंति'त्ति अनुपरावर्त्तन्ते भ्रमन्तीत्यर्थः 'इच्चेइय' मित्यादि इदमपि भावितार्थमेव नवरं 'अणुपरियट्टिस्सति'त्ति अनुपरावर्तिष्यन्ति-पर्यटिष्यन्तीत्यर्थः । 'इच्चेइयमित्यादि' कण्ठ्यं नवरं 'विईवइंसु'त्ति व्यतिव्राजितवन्त:-चतुर्गतिकसंसारोल्लङ्घनेन मुक्तिमवाप्ता इत्यर्थः । एवं प्रत्युत्पन्नेऽपि, नवरं अयं विशेषः । 'विईवइंति'त्ति, व्यतिव्रजंति व्यतिक्रामन्तीत्यर्थः । अनागतेऽप्येवं, नवरं 'वीइवइस्संति'त्ति व्यतिव्रजिष्यन्ति व्यतिक्रमिष्यन्तीत्यर्थः । इति समवायाङ्गे ८५ प्रतौ ७० पत्रे ॥ ६ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयाऽपरनाम्नि समवायाङ्गविचारनामा चतुर्थस्तरङ्गः ॥४॥

त्रिजगत्प्रसरद्रुचिर्मृदुर्नयनागोचरवस्तुशासिनी ।
मम चित्तमलङ्करोतु सा जिनवाणी मणिदीपिकाधिका ॥ १ ॥

---

## अथ क्रमप्राप्ताः श्री पञ्चमाङ्गविचाराः प्रस्तूयन्ते—

केचिच्च लिखितं पुस्तकादिकं पादस्पर्शादिनाऽशातनाऽस्वीकारेणावगणयन्ति, तच्च तेषां संसारकारणम्, यतः श्री भगवतीमारभद्भिः श्रीगणधरपादैरपि नमस्कृतत्वेनास्य पूज्यतमत्वात्। तथा च सूत्रम्—

" नमो बंभीए लिवीए" त्ति। लिपिः—पुस्तकादावक्षरविन्यासः, सा चाष्टादशप्रकारापि श्रीमन्नाभेयजिनेन स्वसुताया ब्राह्मीनामिकाया दर्शिता ततो ब्राह्मीत्यभिधीयते। आह च—" लेहं लिवीविहाणं जिणेण बंभीइ दाहिणकरेण " इत्यतो ब्राह्मीति स्वरूपविशेषणं लिपेरिति। नन्वाधिकृतशास्त्रस्यैव मङ्गलत्वात् किं मङ्गलेन अनवस्थादिदोषप्राप्तेः?, सत्यं, किं तु शिष्यमतिमङ्गलपरिग्रहार्थं मङ्गलोपादानम्। इति श्रीभगवतीप्रथमशतकप्रथमोद्देशके ॥ १ ॥

इह च केचनाविवेकिनः कदाग्रहग्रहीता वदन्ति—यदेते ये केचन सम्यग्दृष्टिव्यतिरिक्तास्तपस्यन्ति—मुक्त्यर्थमपि कायकष्टमनुतिष्ठन्ति तेन तेषामकामनिर्जरैव, न तु सकामा, तच्च विचार्यमाणमसारमाभासते, यतोऽकामानां—निर्जराद्यनभिलाषिणां सतां तृट् अकामतृट् इत्याद्यकामनिर्जरास्वरूपमुक्तम्, किंच अत्राकामनिर्जरावतां व्यन्तरेषूत्पत्तिरुक्ता, द्वितीयोद्देशके तु उत्पादाधिकारे तापसादीनां मिथ्यादृशामपि ज्योतिष्कब्रह्म ( लोक ) ग्रैवेयकादौ श्रूयते ततोऽवसीयते तेषां सकामैव, तथैव चाकामनिर्जरावतां मनोलब्धिरहितानामसंज्ञिनां व्यन्तरेष्वेवोत्पत्तिः ततश्च सधर्माभिलाषिणां शुभानुष्ठायिनां सकामैव, अन्येषामकामेति तत्त्वम्। तत्र च अकामनिर्जरास्वरूपसूत्रं अकामनिर्जरावतां गतिप्रतिपादकं लिख्यते—

" जे इमे जीवा गामागरणगरणिगमरायहाणिखेडकब्बडमडंबदोणमुहपट्टणासमसंनिवेसेसु अकामतण्हाए अकामछुहाए अकामबंभचेरवासेणं अकामसीयायवदंसमसगअण्हाणगसेअजल्लमलपंकपरिदाहेणं अप्पतरो वा भुज्जतरो वा कालं अप्पाणं परिकिलेसंति । परिकिलेसित्ता कालमासे कालं किच्चा अन्नयरेसु वाणमंतरेसु देवलोएसु देवत्ताए उववत्तारो भवंति त्ति ।" वृत्तिर्यथा—गामेत्यादि, ग्रामादिष्वधिकरणभूतेषु, तत्र ग्रामो—जनपदप्रायजनाश्रितस्थानविशेषः, आकरो—लोहाद्युत्पत्तिस्थानं, नकरं—कररहितं, निगमो—वणिग्जनप्रधानं स्थानं, राजधानी—यत्र राजा स्वयं वसति, खेटं—धूलिप्राकारं, कर्बटं—कुनगरं, मडंबं—सर्वतो दूरवर्त्तिसन्निवेशान्तरं, द्रोणमुखं—जलपथस्थलपथोपेतं, पत्तनं—विविधदेशागतपण्यस्थानं, तच्च द्विधा जलपत्तनं स्थलपत्तनं चेति रत्नभूमिरित्यन्ये, आश्रमः—तापसादिस्थानं, सन्निवेशो—घोषादिः एषां द्वन्द्वस्ततस्तेषु, अथवा ग्रामादयो ये संनिवेशास्ते तथा तेषु 'अकामतण्हाए' त्ति अकामानां—निर्जराद्यनभिलाषिणां सतां तृष्णा—तड् अकामतृष्णा तया एवमकामक्षुधा 'अकामबंभचेरवासेणं' ति अकामानां—निर्जराद्यनभिलाषिणां सतां, अकामो वा—निरभिप्रायो ब्रह्मचर्येण—स्त्र्यादिपरीभोगाभावमात्रलक्षणेन वासो—रात्रौ शयनं अकामब्रह्मचर्यवासोऽतस्तेन 'अकामअण्हाणगसेयजल्लमलपंकपरिदाहेणं' ति अकामा ये अस्नानकादयस्तेभ्यो यः परिदाहः स तथा तेन तत्र स्वेदः—प्रस्वेदः याति—लगति चेति जल्लो—रजोमात्रं, मलः—कठिनीभूतं रज एव, पङ्को—मल एव स्वेदेनार्द्रीभूत इति, 'अप्पतरो वा भुज्जतरो वा कालं' ति प्राकृतत्वेन विभक्तिपरिणामादल्पतरं वा भूयस्तरं वा बहुतरं कालं यावत् वाशब्दौ देवत्वं प्रत्यल्पेतरकालयोः समताभिधानार्थौ, केवलं देवत्वे सामान्यतः सत्यपि अल्पतरकालमकामनिर्जरावतामविशिष्टं तत्स्यात् इतरेषां तु विशिष्टमिति । 'अप्पाणं परिकिलेसंति' त्ति विबा

धयन्ति । 'कालमासे 'त्ति कालो-मरणं तस्य मासः प्रक्रमादवसरः कालमासस्तत्र 'कालं किच्च ' त्ति कालं कृत्वा 'वाणमंतरेसु 'त्ति वनान्तरेषु वनविशेषेषु भवा अवर्णागमकरणाद्वानमन्तराः अन्येत्वाहुः वनेषु भवा वानास्ते च ते व्यन्तराश्चेति वानव्यन्तरास्तेपामेते वानमन्तरा वानव्यन्तरा वा अतस्तेषु देवलोकेषु देवाश्रयेषु ' देवताए उववत्तारो भवंति ' त्ति ये इमे इत्यत्र यच्छब्दोपादानात्ते देवतयोपपत्तारो भवन्तीति द्रष्टव्यम् । ' तेसिं 'ति ये देवलोकेष्वकामनिर्जरावन्तो देवतयोत्पद्यन्ते तेषामिति । इति श्री भगवतीप्रथमशतकप्रथमोद्देशके ८६ प्रतौ ३५ पत्रे ॥ २ ॥

तापसादीनामुत्पादसूत्रं चेदम्—

" अह णं भंते ! असंजयभवियदव्वदेवाणं१ अविराहियसंजमाणं२ विराहियसंजमाणं ३ अविराहियसंजमासंजमाणं४ विराहियसंजमासंजमाणं५ असन्नीणं६ तावसाणं७ कंदप्पियाणं८ चरगपरिव्वायगाणं ९ किव्विसियाणं १० तेरिच्छियाणं ११ आजीवियाणं १२ आभियोगियाणं १३ सलिंगीणं दंसणवावन्नगाणं १४ एएसिणं देवलोएसु उववज्जमाणाणं कस्स कहिं उववाए पन्नत्ते ? गोयमा ! असंजयभवियदव्वदेवाणं जहन्नेणं भवणवासीसु उक्कोसेणं उवरिमगेवेज्जगेसु १, अविराहियसंजमाणं जहन्नेणं सोहम्मे कप्पे उक्कोसेणं सव्वट्ठसिद्धे विमाणे २, विराहियसंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं सोहम्मे कप्पे ३, अविराहियसंजमासंजमाणं जहन्नेणं सोहम्मे कप्पे उक्कोसेणं अच्चुए कप्पे ४, विराहियसंजमासजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं जोइसिएसु ५, असन्नीणं जहन्नेणं भवणवासीसु उक्कोसेणं वाणमंतरेसु ६, अवसेसा सव्वे जहन्नेणं भवणवासीसु उक्कोसगं वोच्छामि-तावसाणं जोइसिएसु ७, कंदप्पियाणं सोहम्मे कप्पे ८, चरगपरिव्वायगाणं बंभलोए कप्पे ९,

किव्विसियाण लतगे कप्पे १०, तिरिच्छियाण सहस्सारे 'कप्पे ११, आजीवियाण अच्चुए कप्पे १२, आभिओगाण अच्चुए कप्पे १३, सलिंगीणं दंसणवावन्नगाण उवरिमगेवेज्जएसु १४।' वृत्तिर्यथा—कर्मलेशादन्तक्रियाया अभावे केचिज्जीवा देवेषूत्पद्यन्ते, अतस्तद्विशेषाभिधानायाह—'अह ण भंते !' इत्यादि व्यक्तं, नवरं अथेति परिप्रश्नार्थः। 'असंजयभवियदव्वदेवाण'ति इह प्रज्ञापनाटीका लिख्यते असंख्याताः—चरणपरिणामशून्या भव्या—देवत्वयोग्या अत एव द्रव्यदेवा, समासश्चैवम्—असंयताश्च ते भव्यद्रव्यदेवाश्चेति असंयतभव्यद्रव्यदेवा। तत्रैते असंयतसम्यग्दृष्टय किलेत्येके, यतः किलोक्तम्—"अणुवयमहव्वएहि य, बालतवोऽकामनिज्जराए य। देवाउयं निबंधइ, सम्मद्दिट्ठी य जो जीवो ॥ १ ॥" एतच्चायुक्तम्। यतोऽमीषामुत्कृष्टत उपरिमग्रैवेयकेषूपपात उक्तः। सम्यग्दृष्टीनां तु देशविरतानामपि न तत्रासौ विद्यते देशविरतश्रावकाणामच्युतादूर्ध्वमगमनात्। नाप्येते निह्नवा, तेषामिहैव भेदेनाभिधानात्, तस्मान्मिथ्यादृष्टय एवाभव्या भव्या वा असंयतभव्यद्रव्यदेवा श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते। ते ह्यखिलकेवलक्रियाप्रभावत एवोपरिमग्रैवेयकेषूत्पद्यन्ते, इति। असंयताश्च ते सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वात्। ननु ते कथमभव्या भव्या वा श्रमणगुणधारिणो भवन्ति? इत्युच्यते, तेषां हि महामिथ्यादर्शनमोहप्रादुर्भावे सत्यपि चक्रवर्तिप्रभृत्यनेकभूपतिप्रवरपूजासत्कारसन्मानदानान्साधून् समवलोक्य तदर्थं प्रव्रज्याक्रियाकलापानुष्ठानं प्रति श्रद्धा जायते, ततश्च यथोक्तक्रियाकारिण इति। 'अविराहियसंजमाण'ति प्रव्रज्याकालादारभ्याभग्नचारित्रपरिणामानां संज्वलनकषायसामर्थ्यात्प्रमत्तगुणस्थानकसामर्थ्याद्वा स्वल्पमायादिदोषसंभवेऽप्यनाचरितचरणोपघातानामित्यर्थः। 'विराहियसंजमाण'ति उक्तविपरीतानां, अविराहियसंजमासंज-

माणं'ति प्रतिपत्तिकालादारभ्याखण्डितदेशविरतिपरिणामानां श्रावकाणां 'विराहियसंजममासंजमाणं' ति उक्तव्यतिरेकिणां 'असणीणं' ति मनोलब्धिरहितानामकामनिर्जरावतां, तथा 'तावसाणं'ति पतितपत्राद्युपभोगवतां बालतपस्विनां, तथा 'कंदप्पियाणं'ति कन्दर्पः-परिहासः स येषामस्ति तेन वा ये चरन्ति ते कन्दर्पिकाः कान्दर्पिका वा व्यवहारतश्चरणवन्त एव कंदर्पकौकुच्यादिकारकाः । तथा हि-"कहकहकहस्स हसणं, कंदप्पो अनिहुआ य उल्लावा । कंदप्पकहाकहणं, कंदप्पुवएससंसा य ॥ १ ॥ भूनयणवयणदसणच्छदेहिं करपायकन्नमाईहिं । तं तं करेइ जह जह, हसइ परो अत्तणा अहसं ॥ २ ॥ वायाकुकुइओ पुण, तं जंपइ जेण हस्सए अन्नो । नाणाविहजीवरुए, कुव्वइ मुहतूरए चेव ॥ ३ ॥" इत्यादि "जो संजओवि एयासु, अप्पसत्थासु भावणं कुणइ । सो तव्विहेसु गच्छइ, सुरेसु भइओ चरणहीणो ॥ ४ ॥" त्ति, अतस्तेषां कन्दर्पिकाणां 'चरगपरिव्वायगाणं'ति चरकपरिव्राजका-धाटीभिक्षोपजीविनस्त्रिदण्डिनः अथवा चरकाः-कच्छोटकादयः, परिव्राजकास्तु-कपिलमुनिसूनवः अतस्तेषां 'किब्बिसियाणं'ति किल्बिषं-पापं तदस्ति येषां ते किल्बिषिकाः, ते च व्यवहारतश्चरणवन्तोऽपि ज्ञानाद्यवर्णवादिनः, यथोक्तम्-" णाणस्स केवलीणं, धम्मायरियस्स सव्वसाहूणं । माई अवण्णवाई, किब्बिसियं भावणं कुणइ ॥१॥" अतस्तेषां 'तेरिच्छिआणं' ति तिरश्चामश्वगवादीनां देशविरतिभाजां, 'आजीवियाणं'ति पाखण्डिविशेषाणां नाग्न्यधारिणां, गोशालकशिष्याणामित्यन्ये, आजीवन्ति वा ये अस्तित्वेन अविवेकिलोकतो लब्धिपूजाख्यात्यादिभिस्तपश्चरणादीनि ते आजीविकाः अतस्तेषां 'आभिओगाणं' ति अभियोजनं-विद्यामन्त्रादिभिः परेषां वशीकरणादि अभियोगः, सच द्विधा, यदाह-"दुविहो खलु अभिओगो, दव्वे भावे य होइ नायव्वो । दव्वंमि होइ जोगा,

निआ मता य भावमि ॥२॥ "त्ति । सोऽस्ति येषा, तेन वा चरन्ति ये ते अभियोगिका आभियोगिका वा ते च व्यवहारतश्चरणवन्त एव मन्त्रादिप्रयोक्तारः । यदाह—" कोउयभूईकम्मे, पसिणापसिखे निमित्तमाजीवी । इड्ढिरससायगुरुओ, अभिओग भावण कुणइ ॥१॥ " त्ति । कौतुक-सौभाग्याद्यर्थं स्नपनक, भूतिकर्म-ज्वरितादिभूतिदानम्, प्रश्नाप्रश्न-स्वप्नविद्यादि, ' सलिंगीण ' ति रजोहरणादिसाधुलिङ्गवता, किंविधानाम् ? इत्याह—' दसणवावन्नगाण ' ति दर्शन-सम्यक्त्व व्यापन्न-भ्रष्ट येषा ते तथा तेषा निह्नवानामित्यर्थ । ' एएसि ण देवलोएसु उववज्जमाणाण ' ति अनेन देवत्वादन्यत्रापि केचिदुत्पद्यन्ते इति प्रतिपादितम् । ' विराहियसजमाण जहन्नेण भवणवासीसु उक्कोसेण सोहम्मे कप्पे ' त्ति इह कश्चिदाह विराधितसयमानामुत्कर्षेण सौधर्मे कल्पे इति यदुक्त तत्कथ घटते द्रौपद्याः सुकुमालिकाभवे विराधितसयमाया अपि ईशाने उत्पादश्रवणात् ? इत्यत्रोच्यते तस्याः सयमविराधनोत्तरगुणविषया बकुशत्वमात्रकारिणी न मूलगुणविराधनेति । सौधर्मोत्पादश्च विशिष्टतरसयमविराधनाया स्यात् । यदि पुनर्विराधनामात्रमपि सौधर्मोत्पत्तिकारक स्यात्तदा बकुशादीनामुत्तरगुणप्रतिसेवावता कथमच्युतादिषूत्पत्ति स्यात्, कथञ्चिद्विराधकत्वात्तेषामिति । ' असण्णीण जहण्णेण भवणवासीसु उक्कोसेण वाणमतरेसु'त्ति इह यद्यपि ' चमरबलिसारमहिय 'मित्यादिवचनादसुरादयो महर्द्धिका ' पलिओवममुक्कोस वतरियाण ' ति वचनात् व्यन्तरा अल्पर्द्धिकाः तथाप्यत एव वचनादवसीयते सन्ति व्यन्तरेभ्य' सकाशादल्पर्द्धयो भवनपतय केचन । इति भगवतीप्रथमशतकद्वितीयोद्देशके ८०६ प्रतौ ४६ । ४७ पत्रे । ३ ।

केचिच्च परेषा भिक्षुकादीना दान निषेधयन्ति, अपरे च चतुर्दशी विहाय पूर्णिमामास्ययोरेव पोषध प्ररूपयन्ति, ते

उभयेऽपि अनेन श्रावकवर्णनसूत्रेण निरस्ता द्रष्टव्याः । तथा हि—

" तेणं कालेणं तेणं समएणं तुंगियाणामं णगरी होत्था, वण्णओ तीसे णं तुंगियाए नयरीए बहिया उत्तरपुरच्छिमे दिसीभाए पुप्फवइए नामं चेइए होत्था, वण्णओ, तत्थ णं तुंगियाए णगरीए बहवे समणोवासया परिवसंति । अड्ढा दित्ता विच्छिण्णविपुलभवणसयणासणजाणवाहणाइन्ना बहुधणबहुजायरूवरयया आओगपओगसंपउत्ता विच्छड्डियविपुलभत्तपाणा बहुदासीदासगोमहिसगवेलगप्पभूया बहुजणस्स अपरिभूया अभिगयजीवाजीवा उवलद्धपुण्णपावा आसवसंवरणिज्जरकिरियाहिगरणबन्धमोक्खकुसला असहेज्जा देवासुरणागसुवण्णजक्खरक्खसकिंनरकिंपुरिसगरुलगंधव्वमहोरगादिएहिं देवगणेहिं निग्गंथाओ पावयणाओ अणतिक्कमणिज्जा णिग्गंथे पावयणे णिस्संकिया णिक्कंखिया निव्वितिगिच्छा लद्धट्ठा गहिअट्ठा पुच्छियट्ठा अभिगहियट्ठा विणिच्छियट्ठा अट्ठिमिंजपेमाणुरागरत्ता अयमाउसो निग्गंथे पावयणे अट्ठे अयं परमट्ठे सेसे अणट्ठे ऊसियफलिहा अवंगुयदुवारा चियत्तंतेउरघरप्पवेसा बहूहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा समणे निग्गंथे फासुएसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुच्छणेणं पीढफलगसेज्जासंथारएणं ओसहभेसज्जेण य पडिलाभेमाणा अहापरिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंति"त्ति । वृत्तिर्यथा—' अड्ढ ' त्ति आढ्या—धनधान्यादिभिः परिपूर्णाः ' दित्त'त्ति दीप्ताः—प्रसिद्धाः दृप्ता वा—दर्पिताः ' विच्छिण्णविपुलभवणसयणासणजाणवाहणाइण्णा ' विस्तीर्णानि—विस्तारवन्ति विपुलानि—प्रचुराणि भवनानि—गृहाणि शयनासनवाहनैराकीर्णानि येषां ते तथा, अथवा विस्तीर्णानि—विपुलानि भवनानि

येषा ते शयनासनवाहनानि चाकीर्णानि-गुणवन्ति येषां ते तथा, तत्र यान-गन्त्र्यादि वाहन-त्वश्वादि, 'बहुधणबहुजायरूवरयया' बहु-प्रभूत धन गणिमादिक तथा बह्वेव जातरूप-सुवर्णं रजत च-रूप्य येषा ते तथा, 'आओगपओगसपउत्ता' आयोगो-द्विगुणादिवृद्ध्यर्थप्रदान, प्रयोगश्च-कलान्तर तौ सम्प्रयुक्तौ व्यापारितौ यैस्ते तथा। 'विच्छड्डियविपुलभत्तपाणा' विच्छर्दित-विविधमुज्झित बहुलोकभोजनत उच्छिष्टावशेषसभवात् विच्छर्दित वा विविधविच्छित्तिमद्विपुल भक्त च पानक च येषा ते तथा, 'बहुदासीदासगोमहिसगवेलगप्पभूया' बहवो दासीदासा येषां ते गोमहिषगवेलकाश्च प्रभूता येषां ते तथा, गवेलका-उरभ्राः, 'बहुजणस्स अपरिभूया' बहोर्लोकस्यापरिभवनीया., 'आसवे' इत्यादि, क्रियाः कायिक्यादिकाः अधिकरण-गन्त्रीयन्त्रकादि। 'कुसल'त्ति आश्रवादीना हेयोपादेयतास्वरूपवेदिन। 'असहेज्जे'त्यादि अविद्यमान साहाय्यं-परसाहायक, अत्यन्तसमर्थत्वाद्येषा ते असहाय्यास्ते च ते देवादयश्चेति कर्मधारय', अथवा व्यस्तमेवेद तेन असहाय्या-आपद्यपि देवादिसाहायकानपेक्षाः स्वय कृत कर्म स्वयमेव भोक्तव्यमित्यदीनमनोवृत्तय इत्यर्थः। अथवा पाखण्डिभिः आरब्धा' सम्यक्त्वाविचलन प्रति न परसहायकमपेक्षन्ते स्वयमेव तत्प्रतिघातसमर्थत्वात्, जिनशासनात्यन्तभावितत्वाच्चेति, तत्र देवा वैमानिका'। 'असुर'त्ति असुरकुमारा. 'नाग'त्ति नागकुमारा उभयेऽप्यमी भवनपतिविशेषा, 'सुवण्ण'त्ति सद्वर्णा ज्योतिष्का यक्षराक्षस किंनरकिंपुरुषाः-व्यन्तरविशेषा 'गरुल'त्ति गरुडध्वजा'-सुवर्णकुमारा'-भवनपतिविशेषा,, गन्धर्वा महोरगाश्च व्यन्तरविशेषा' 'अणतिक्कमणिज्ज'त्ति अनतिक्रमणीया अचालनीया', 'लद्धट्ठ'त्ति अर्थश्रवणात् 'गहियट्ठ'त्ति अर्थावधारणात् 'पुच्छियट्ठ' त्ति सांशयिकार्थप्रश्नकरणात् 'अभिगहियट्ठ'त्ति प्रश्नितार्थस्याभिगमनात् 'विणिच्छियट्ठ'त्ति ऐदपर्यार्थस्यो-

पलम्भात्, अत एव 'अट्ठिमिंजपेम्माणुरागरत्ता' अस्थीनि च कीकसानि, मिञ्जा च तन्मध्यवर्त्तिधातुरस्थिमिञ्जास्ताः प्रेमानुरागेण-सर्वज्ञप्रवचनप्रीतिरूपकुसुम्भादिरागेण रक्ता इव रक्ता येषां ते तथा, अथवा अस्थिमिञ्जासु जिनशासनगत-प्रेमानुरागेण रक्ता ये ते तथा, केनोल्लेखेन ? इत्याह- 'अयमाउसे' इत्यादि, अयमिति प्राकृतत्वादिदं 'आउसो'त्ति आयुष्मन् इति पुत्रादेरामंत्रणं 'सेसे'त्ति शेषं निर्ग्रन्थप्रवचनव्यतिरिक्तं धनधान्यपुत्रकलत्रमित्रकुप्रवचनादिकमिति । 'उसियफलिह'त्ति उच्छ्रितं-उन्नतं स्फाटिकमिव स्फाटिकं चित्तं येषां ते उच्छ्रितस्फाटिकाः मौनीन्द्रप्रवचनावाप्त्या परितुष्ट-मानसा इत्यर्थः, इति वृद्धव्याख्या, अन्ये त्वाहुः-उच्छ्रितो-ऽर्गलास्थानादपनीयोर्द्धीकृतो न तिरश्चीनः । कपाटपश्चाद्भागादप-नीत इत्यर्थः परिघो-ऽर्गला येषां ते उच्छ्रितपरिघाः । अथवा उच्छ्रितो-गृहद्वारादपगतः परिघो येषां ते उच्छ्रितपरिघाः । औदार्यातिशयादतिशयदानदायित्वेन भिक्षुकाणां गृहप्रवेशनार्थमनर्गलितगृहद्वारा इत्यर्थः, 'अवंगुअदुवारे'त्ति अप्रावृतद्वाराः कपाटादिभिरस्थगितगृहद्वारा इत्यर्थः, सद्दर्शनलाभेन न कुतोऽपि पाखण्डिकादिभ्यो बिभ्यति शोभनमार्गपरिग्रहेणोद्घाटशिरसस्तिष्ठन्तीति भावः इति वृद्धव्याख्या, अन्ये त्वाहुः-भिक्षुकप्रवेशार्थमौदार्यादस्थगित-गृहद्वारा इत्यर्थः । 'चियत्तंतेउरघरप्पवेसा' 'चियत्तो' त्ति लोकानां प्रीतिकर एव अन्तःपुरे वा गृहे वा प्रवेशो येषां ते तथा, अतिधार्मिकतया सर्वत्रानाशङ्कनीयास्ते इत्यर्थः अन्ये त्वाहुः-'चियत्तो'त्ति नाप्रीतिकरोऽन्तःपुरगृहयोः प्रवेशः शिष्टजन-प्रवेशनं येषां ते तथा अनीर्ष्यालुताप्रतिपादनपरं चेत्थं विशेषणमिति । अथवा 'चियत्तो'त्ति त्यक्तोऽन्तःपुरगृहयोः परकी-ययोर्यथाकथञ्चित्प्रवेशो यैस्ते तथा, 'बहूहिं' इत्यादि, शीलव्रतानि-अणुव्रतानि गुणा-गुणव्रतानि विरमणानि-औचित्येन

रागादिनिवृत्तय', प्रत्याख्यानानि पौरुष्यादीनि, पौषध-पर्वदिनानुष्ठान, तत्रोपवासो-ऽवस्थान पौषधोपवास', एषा द्वन्द्वः अतस्तैर्युक्ता इति गम्यम् । पौषधोपवास इत्युक्त ( तत् ) पौषध च यदा यथाविध च ते कुर्वन्तो विहरन्ति, तद्दर्शयन्नाह— 'चाउद्दसे'त्यादि, इहोद्दिष्टा-अमावास्या, 'पडिपुण्ण पोसह' ति अहोरात्रादिभेदाच्चतुर्विधमपि सर्वतः, 'वत्थपडिग्गहकम्बल-पायपुञ्छणेण' ति इह पतद्ग्रह-पात्र, पादप्रोञ्छन-रजोहरण, 'पीढे' त्यादि पीठ-आसन, फलक-अवष्टम्भनफलक, शय्या-वसतिर्बृहत्संस्तारको वा, संस्तारको-लघुतर, एषा समाहारद्वन्द्वोऽतस्तेन, 'अहापरिग्गहिएहिं' ति यथाप्रतिपन्नैर्न पुनर्ह्रास नीतै । इति भगवतीद्वितीयशतकपञ्चमोद्देशके ८०६ प्रतौ ११३ पत्रे ॥ ४ ॥

श्री जिनप्रतिमारिपून् प्रति जिनप्रतिमाक्षराणि लिख्यन्ते—

" अत्थि ण भंते ! असुरकुमाराण देवाण उड्ढ गइविसए ? हता अत्थि । केवइय च ण भते ! असुरकुमाराण देवाण उड्ढ गतिविसए पण्णत्ते ? गोयमा ! जाव अच्चुए कप्पे, सोहम्म पुण कप्प गया य गमिस्सति य । किं पत्तिएण्णं भंते ! असुरकुमारा देवा सोहम्म कप्प गया य गमिस्सति य ? गोयमा ! तेसि देवाण भवपच्चइए वेराणुबधे, तेण देवा विकुव्वेमाणा परियारेमाणा वा आयरक्खे देवे वित्तासेंति, वित्तासेंतित्ता अहालहुस्सयाइ रयणाइ गहाय आयाए एगतमवक्कमति । अत्थि ण भंते ! तेसि देवाण अहालहुस्सगाइ रयणाइ ? हता अत्थि । से कहमिदाणिं पकरेंति ? तओ से पच्छा काय पव्वहति । पभू ण भंते ! ते असुरकुमारा देवा तत्थ गया चेव समाणा ताहिं अच्छराहिं सद्धिं दिव्वाइ भोगभोगाइ भुजमाणा विहरित्तए ? णो तिणट्ठे समट्ठे, ते ण तओ पडिनियत्तति२त्ता इहमागच्छंति२त्ता जइ ण ताओ अच्छराओ आढायति परियाणति पभू ण भते !

ते असुरकुमारा देवा ताहिं अच्छराहिं सद्धिं दिव्वाइं भोगभोगाइं भुंजमाणा विहरित्तए, अह णं ताओ अच्छराओ णो आढायंति णो परियाणंति णो णं पभू ते असुरकुमारा देवा ताहिं अच्छराहिं सद्धिं दिव्वाइं भोगभोगाइं भुंजमाणा विहरित्तए। एवं खलु गोयमा! असुरकुमारा देवा सोहम्मं कप्पं गया य गमिस्संति य। केवइकालस्स णं भंते! असुरकुमारा देवा उड्ढं उप्पयंति? जाव सोहम्मं कप्पं गया य गमिस्संति य? गोयमा! अणंताहिं उस्सप्पिणीहिं अणंताहिं अवसप्पिणीहिं समतिक्कंताहिं। अत्थि णं एस भावे लोगच्छेरयभूए समुप्पज्जइ जन्नं असुरकुमारा देवा उड्ढं उप्पयंति जाव सोहम्मे कप्पे? गोयमा! से जहा णामए इह सवरा इ वा बब्बरा इ वा ढंकणा इ वा वुचुया इ वा पल्हाया इ वा पुलिंदा इ वा एगं महं वणं वा गड्डं वा दुग्गं वा दरिं वा विसमं वा पव्वयं वा निस्साए सुमहल्लमवि आसबलं वा हत्थिबलं वा जोहबलं वा धणुबलं वा आगलेंति। एवामेव असुरकुमारा देवा, णण्णत्थ अरिहते वा अरिहंतचेइयाणि वा अणगारे वा भावियप्पणो णिस्साए उड्ढं उप्पयंति" इति। वृत्तिर्यथा—'विउव्वेमाणा व'त्ति संरंभेण महद्वैक्रियशरीरं कुर्वन्तः, 'परियारेमाण'त्ति परिचारयन्तः—परकीयदेवीनां भोगं कर्तुकामा इत्यर्थः। 'अहालहुस्सगाइं'ति यथेति—यथोचितानि लघुस्वकानि—अमहास्वरूपाणि, महतां हि तेषां नेतुं गोपयितुं वाऽशक्यत्वादिति यथालघुस्वकानि। अथालघुनि—महान्ति वरिष्ठानीति वृद्धाः। 'आयाए'त्ति आत्मना स्वयमित्यर्थः। 'एगतं'ति विजनं, 'अंतं'ति देशं, 'से कहमियाणिं पकरेंति' अथ किमिदानीं रत्नग्रहणानन्तरमेकान्तापक्रमणाकाले प्रकुर्वन्ति वैमानिका रत्नादातॄणामिति, 'तओ से पच्छा कायं पव्वहंति'त्ति ततो रत्नादानात् 'पच्छ'त्ति अनन्तरं

'से'त्ति एषां रत्नादातॄणामसुराणां काय-देहं अव्यथन्ते-प्रहारैर्मथ्नन्ति वैमानिका देवाः, तेषां च व्यथितानां वेदना भवति, जघन्येनान्तर्मुहूर्त्तमुत्कृष्टतः षण्मासान् यावत्। 'सवरा इ वेत्यादी' शबरादयोऽनार्यविशेषाः, 'गड्ड व'त्ति गर्त्ता, 'दुग्गं व'त्ति जलदुर्गादि, 'दरिं व'त्ति दरी-पर्वतकन्दरा, 'विसमं व'त्ति विषमं गर्त्ता तरुपाद्याकुलभूमिकारूपं, 'निस्सा ए'त्ति निश्रया-आश्रित्य, 'धणुबलं व'त्ति धनुर्धरबलं, 'आगलति'त्ति आकलयन्ति, जेष्याम इत्यध्यवस्यन्तीति। 'णण्णत्थ'त्ति ननु-निश्चितमत्र-इहलोके। अथवा 'अरिहंते वा णिस्साए उड्ढं उप्पयंति' नान्यत्र-तन्निश्रया अन्यत्र न ता नित्यर्थः। इति भगवती तृतीयशतकद्वितीयोद्देशके ८०६ प्रतौ १३० पत्रं ॥ ५ ॥

अथ ये केचन सर्वथा केवलिशरीराज्जीवविराधना न भवतीति साक्षात्सिद्धान्तापलापप्रलापिनः संसारं पल्लवयन्ति, तदुपकाराय पुनरपि शास्त्रं लिख्यते—

"से जहा नामए हरए सिया, पुण्णे पुण्णप्पमाणे वोलट्टमाणे वोसट्टमाणे समभरघडत्ताए चिट्ठइ? हंता चिट्ठइ। अहे णं केइ पुरिसे तंसि हरयंसि एगं महं णावं सतासवं सयच्छिद्दं ओगाहेज्जा, से णूणं मंडियपुत्ता! सा नावा तेहिं आसवदारेहिं आपूरेमाणी आपूरेमाणी पुण्णा पुण्णप्पमाणा वोलट्टमाणा वोसट्टमाणा समभरघडत्ताए चिट्ठइ? हंता चिट्ठइ। अहे णं केइ पुरिसे तीसे नावाए सव्वओ समंता आसवदाराइं पिहेइ, पिहेइत्ता नावाओ उस्सिंचणएणं उदयं उस्सिंचेज्जा, से णूणं मंडियपुत्ता! सा नावा तंसि उदयंसि उस्सिंचिज्जंसि समाणंसि खिप्पामेव उड्ढं उद्दाइ? हंता उद्दाइ। एवामेव मंडियपुत्ता! अत्तत्तासंवुडस्स अणगारस्स इरियासमियस्स जाव गुत्तबंभयारिस्स आउत्तं गच्छमाणस्स चिट्ठमाणस्स णिसीयमाणस्स तुयट्टमाणस्स आउत्तं

वत्थपडिग्गहकंबलपायपुंच्छणं गिरहमाणस्स णिक्खिवमाणस्स जाव चक्खुपम्हणिवायमवि वेमाया सुहुमा इरियावहिया किरिया कज्जइ । सा पढमसमयबद्धपुट्ठा, बितियसमयवेइया, तइयसमयणिज्जरिया, सा बद्धा पुट्ठा उदीरिया वेदिया य णिज्जिण्णा सेयकाले अकम्मं वावि भवइ, से तेणट्ठेणं मंडियपुत्ता ! एवं वुच्चइ, जावं च णं से जीवे सया समियं णो एयइ जाव अंते अंतकिरिया भवइ " इति । वृत्तिर्यथा—अथ निःक्रियस्यैवान्तक्रिया भवतीति नौदृष्टान्तेनाह—'से जहा नामए' इत्यादि इह शब्दार्थः प्राग्वत्, नवरं 'उदाइ'त्ति उद्याति जलस्योपरि वर्त्तते, 'अत्तत्तासंवुडस्स'त्ति आत्मन्यात्मना संवृतस्य प्रतिसंलीनस्येत्यर्थः । एतदेव 'इरियासमियस्स' इत्यादिना प्रपञ्चयति—'आउत्तं'ति आयुक्तमुपयोगपूर्वकमित्यर्थः । 'जाव चक्खुपम्हनिवायमवि'त्ति किं बहुना आयुक्तगमनादिना स्थूलक्रिया जालेनोक्तेन यावच्चक्षुःपक्ष्मनिपातोऽपि, प्राकृतत्वाल्लिङ्गव्यत्ययः, उन्मेषनिमेषमात्रक्रियाऽप्यस्ति, आस्तां गमनादिका तावदिति शेषः । 'वेमाय'त्ति विविधमात्रा अन्तर्मुहूर्त्तादेर्देशोनपूर्वकोटिपर्यन्तस्य क्रियाकालस्य विचित्रत्वात् । वृद्धाः पुनरेवमाहुः—यावच्चक्षुषोर्निमेषोन्मेषमात्राऽपि क्रिया क्रियते, तावताऽपि कालेन विमात्रया स्तोकमात्रयाऽपि इति । क्वचिद्विमात्रेत्यस्य स्थाने 'सपेहाए'त्ति दृश्यते, तत्र च स्वप्रेक्षया स्वेच्छया चक्षुःपक्ष्मनिपातो न तु परकृतः, 'सुहुम'त्ति सूक्ष्मबन्धादिकालः, 'इरियावहिय'त्ति ईर्यापथो—गमनमार्गस्तत्र भवा ऐर्यापथिकी केवलकाययोगप्रत्ययेति भावः । 'किरिय'त्ति कर्म सातवेदनीयमित्यर्थः । 'कज्जइ'त्ति क्रियते भवतीत्यर्थः । उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणगुणस्थानकत्रयवर्त्तिवीतरागोऽपि हि सक्रियत्वात्सातवेद्यं कर्म बध्नातीति भावः। 'से'त्ति ईर्यापथक्रिया 'पढमसमयबद्धपुट्ठ'त्ति (प्रथम समये) बद्धा कर्मतापादनात्स्पृष्टा जीवप्रदेशैः स्पर्शनात् ततः कर्मधारये

तत्पुरुषे न गति प्रथमसमये बद्धस्पृष्टा, तथा द्वितीयसमये वेदिता-अनुभूतस्वरूपा, एवं तृतीयसमये निर्जीर्णा-अनुभूतस्वरूपतया जीवप्रदेशेभ्य परिशटितेति, एतदेव वाच्यान्तरेणाह-सा बद्धा स्पृष्टा प्रथमे समये, द्वितीये तु उदीरिता-उदयमुपनीता, किमुक्तं भवति ? वेदिता, न ह्येकस्मिन् समये बन्ध उदयश्च सम्भवतीत्येवं व्याख्यातं, तृतीये तु निर्जीर्णा, ततश्च 'सेयकाले' त्ति एष्यत्काले 'अकम्म वावि' त्ति अकर्माऽपि च भवति, इह च यद्यपि तृतीयेऽपि समये कर्माकर्म भवति तथापि तत्तत्र एवातीतभावकर्मत्वेन द्रव्यकर्मत्वात् तृतीये निर्जीर्णं कर्मेति व्यपदिश्यते, चतुर्थादिसमयेषु त्वकर्मेति 'अत्तत्तासंवुडस्स' त्यादिना चेदमुक्त-यदि संयतोपि साश्रवः कर्म बध्नाति तदा सुतरामसंयत, अनेन च जीवनावः कर्मजलपूर्यमाणतयार्थतोऽधो निमज्जनमुक्त, सक्रियस्य कर्मबन्धभणनाच्चाक्रियस्य तद्विपरीतत्वात्कर्मबन्धाभाव उक्त, तथा च जीवनावोऽनाश्रवतायामूर्द्ध्वगमनसामर्थ्यादुपनीतमवसेयम्। इति। भगवतीतृतीयशतकतृतीयोद्देशके ८०६ पत्री १२७ पत्रे ॥ ६ ॥

ननु अष्टमीचतुर्दश्यादौ वेलावृद्धिहानी किं निबन्धने ? इत्याशङ्कानिराचिकीर्षया लिख्यते—

" कम्हा णं भंते ! लवणसमुद्दे चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु अइरेगं वड्ढइ वा हायइ वा जहा जीवाभिगमे लवणसमुद्दवत्तव्वया णेयव्वा, जाव लोयट्ठिइ, जणं लवणसमुद्दे जंबुद्दीवं दीवं णो उप्पीलति। णो चेव णं एगोदगं करेइ (लोयट्ठिई) लोगाणुभावे सेवं भंते ! भंते ! जाव विहरइ'त्ति।" वृत्तिर्यथा-'भंते'त्ति इत्यादि। 'अतिरेग'ति तिथ्यन्तरापेक्षया अधिकतरमित्यर्थः। 'लवणसमुद्दवत्तव्वया नेयव्वा'त्ति जीवाभिगमोक्ता, कियद्दूरं यावदित्याह—'जाव लोयट्ठिई'

इत्यादि । सा चैवमर्थतः कस्माद्भदन्त ! लवणसमुद्रश्चतुर्दश्यादिष्वपि अतिरेकेण वर्द्धते हीयते वा ? । इह प्रश्ने उत्तरम्—लवणसमुद्रस्य मध्यभागे दिक्षु चत्वारो महापातालकलशा योजनलक्षप्रमाणाः सन्ति, तेषां चाधस्तने त्रिभागे वायुर्मध्यमे त्रिभागे वायूदके उपरितने तूदकमिति । तथाऽन्ये क्षुद्रपातालकलशा योजनसहस्रप्रमाणाश्चतुरशीत्युत्तराष्टशताधिकसप्तसहस्रसंख्या वाय्वादियुक्तत्रिभागवन्तः सन्ति । तदीयवातविक्षोभवशाज्जलवृद्धिहानी अष्टम्यादिषु स्याताम् । तथा लवणशिखाया दशयोजनानां सहस्राणि विष्कम्भः षोडशोच्छ्रयः योजनार्द्धमुपरि वृद्धिहानी, इत्यादि । अथ कस्माल्लवणो जंबूद्वीपं नोत्प्लावयति, अर्हदादिप्रभावाल्लोकस्थितिर्वेषेति एतदेवाह—'लोगट्ठिई'त्ति लोकव्यवस्था । 'लोयाणुभावे'त्ति लोकप्रभावः । इति भगवतीतृतीयशतकतृतीयोद्देशके ८०६ प्रतौ १२८ पत्रे ॥ ७ ॥

युद्धे हताः स्वर्गं गच्छन्तीति मिथ्याजनप्रसिद्धिनिराकरणाय लिख्यते—

"बहुजणे णं भंते ! अण्णमण्णस्स एवं आइक्खंति जाव परूवेंति, एवं खलु बहवे मणुस्सा अण्णयरेसु उच्चावएसु संगामेसु अभिमुहा चेव पहया समाणा कालमासे कालं किच्चा अण्णयरेसु देवलोएसु देवत्ताए उववत्तारो भवंति, से कहमेयं ? भंते ! एवं गोयमा ! जण्णं से बहुजणो अण्णमण्णस्स एवं आइक्खइ जाव उववत्तारो भवंति, जे ते एवमाहंसु मिच्छं ते एवमाहंसु, अहं पुण गोयमा ! एवमाइक्खामि जाव परूवेमि–एवं खलु गोयमा ! तेणं कालेणं तेणं समएणं वेसालीनामं नगरी होत्था । वण्णओ, तत्थ णं वेसालीए नगरीए वरुणे नामं णागणत्तुए परिवसइ । अड्ढे जाव अपरिभूए समणोवासए अभिगयजीवाजीवे जाव पडिलाभेमाणे छट्ठं छट्ठेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं

तक्र देयम्, अथ हि विशेषविधिः, तेन च शेषाणां ब्राह्मणानां तक्रनिषेधः स्पष्टमेव प्रतीयते। तथा ब्राह्मणा भोजनीयाः कौण्डिन्याय च तक्र न देयम्, इत्यत्र विशेषनिषेधे शेषाणां ब्राह्मणानां तक्र देयम्, इत्यभ्यनुज्ञा प्रतीयत एव। तथा चात्रापि अन्यतीर्थिकपरिगृहीतार्हच्चैत्यवन्दननिषेधलक्षणेन विशेषनिषेधेन शेषार्हच्चैत्यवन्दनानुज्ञा सुप्रतीतैव। किञ्च मूलतो निषिद्धे देशतो निषेधोऽप्ययौक्तिक एव प्राणातिपातादिवत्। अर्हच्चैत्यशब्देन यत्साधुसूचनगाद्यर्थान्तरकल्पन तत्तु शाब्दिकैस्तार्किकैः सहृदयैः श्रोतुमप्यशक्यमित्यपकर्णनीयम्। तत्सूत्रञ्चेदम्—

समण भगव महावीर वदइ नमसइ वदित्ता नमसित्ता एव वयासी—नो खलु मे भते! कप्पइ अज्जप्पभिइ अन्नउत्थिए वा अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाइ अरिहतचेइयाइ वा वदित्तए वा नमसित्तए वा पुव्वि अणालत्तेण आलवित्तए वा सलवित्तए वा [कल्लाण मगल देवय चेइय पज्जुवासित्तए वा] तेसिं असण वा पाण वा खाइम वा साइम वा दाउ वा अणुप्पयाउ वा नन्नत्थ रायाभिओगेण गणाभिओगेण बलाभिओगेण देवयाभिओगेण गुरुनिग्गहेण वित्तिकतारेण, कप्पइ मे समणे निग्गथे फासुएण एसणिज्जेण असणपाणखाइमसाइमेण वत्थपडिग्गहकवलपायपुछणेण पीढफलगसिज्जासथारएण ओसहभेसज्जेण य पडिलाभेमाणस्स विहरित्तए त्तिकट्टु इम एयारूव अभिग्गह अभिगिन्हइ अभिगिन्हित्ता पसिणाइ पुच्छइ पुच्छित्ता अट्ठाइ आदियति २त्ता समण भगव महावीर तिक्खुत्तो वदइ। इति। वृत्तिर्यथा—'नो खलु' इत्यादि, नो खलु मम भदन्त! भगवन्! कल्पते—युज्यते अद्य प्रभृति—इतः सम्यक्त्वप्रतिपत्तिदिनादारभ्य निरतिचारसम्यक्त्वपरिपालनार्थं तद्यतनामाश्रित्य 'अन्नउत्थिए व' त्ति जैन यूथाद्यदन्यत् यूथ सङ्घान्तर तीर्थान्तरमित्यर्थः तदस्ति येषां

तेऽन्ययूथिकाश्चरकादिकुतीर्थिकाः तान्, अन्ययूथिकदैवतानि वा हरिहरादीनि, अन्ययूथिकपरिगृहीतानि वार्हच्चैत्यानि—अर्हत्प्रतिमालक्षणानि, यथा भौतपरिगृहीतानि वीरभद्रमहाकालादीनि वन्दितुं वा—अभिवादनं कर्त्तुं, नमस्कर्तुं—प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनं कर्त्तुं, तद्भक्तानां मिथ्यात्वस्थिरीकरणादिदोषप्रसङ्गादित्यभिप्रायः, तथा पूर्वं—प्रथममनालप्तेन सता अन्यतीर्थिकैस्तानेवालपितुं वा—सकृत्सम्भाषितुं संलपितुं वा—पुनः पुनः संलापं कर्त्तुं यतस्ते तप्ततरायोगोलककल्पाः खल्वासनादिक्रियायां नियुक्ता भवन्ति, तत्प्रत्ययश्च कर्मबन्धः स्यात्। तथाऽऽलापादेः सकाशात्परिचयेन तस्यैव तस्य परिजनस्य वा मिथ्यात्वप्राप्तिरिति, प्रथमालप्तेन त्वसम्भ्रमलोकापवादभयात्कीदृशस्त्वमित्यादि वाच्यमिति। तथा तेभ्योऽन्ययूथिकेभ्योऽशनादि दातुं वा सकृत्, अनुप्रदातुं वा पुनः पुनरित्यर्थः। अयञ्च निषेधो धर्मबुद्ध्यैव करुणया तु दद्यादपि, किं सर्वथा न कल्पते ? इत्याह—'नन्नत्थ रायाभिओगेणं' ति न इति—न कल्पते योऽयं निषेधः सोऽन्यत्र राजाभियोगात् तृतीयायाः पञ्चम्यर्थत्वात्, राजाभियोगं वर्जयित्वेत्यर्थः। राजाभियोगस्तु—राजपरतन्त्रता, गणः—समुदायस्तदभियोगः—पारवश्यता गणाभियोगस्तस्माद्, बलाभियोगो नाम—राजगणव्यतिरिक्तस्य बलवतः पारतन्त्र्यं, देवताभियोगो—देवपरतन्त्रता, गुरुनिग्रहो—मातापितृपारवश्यं, गुरूणां वा—चैत्यसाधूनां निग्रहः—प्रत्यनीककृतोपद्रवो गुरुनिग्रहस्तत्रोपस्थिते तद्रक्षार्थं अन्ययूथिकादिभ्यो ददद‌पि नातिक्रामति सम्यक्त्वमिति, 'वित्तिकंतारेणं' ति वृत्तिः—जीविका तस्याः कान्तारं—अरण्यं तदिव कान्तारं क्षेत्रं कालो वा वृत्तिकान्तारं निर्वाहाभाव इत्यर्थः तस्मादन्यत्र निषेधो दानप्रदानादेरिति प्रकृतमिति 'पडिग्गहं' ति पात्रम्। 'पीढं' ति पीठं—पट्टादिकम्। 'फलगं' ति अवष्टंभादिकं फलकम्। 'भेसज्जं' ति पथ्यम्। 'अट्ठाइं' ति उत्तरभूतानर्थानाददाति।

इति उपासकप्रथमाध्ययनसावचूरिक २७ प्रतौ ७ पत्रे ॥ १ ॥

श्रावकाणां प्रतिमा अनुष्ठेया इति जिज्ञापयिषया प्रतिमास्वरूपजिज्ञापयिषया च लिख्यते—

समणस्स भगवओ महावीरस्स अंतिय धम्मपन्नत्तिं उवसपज्जित्ता ण विहरित्तए। त सेय खलु मम कल्ल जाव जलते विउल असणं पाण खाइम साइम जहा पूरणो जाव जेट्ठपुत्त कुडुबे ठवेत्ता त मित्तजाव जेट्ठपुत्त च आपुच्छित्ता कोल्लागे सन्निवेसे णायकुलसि पोसहसाल पडिलेहित्ता समणस्स भगवओ महावीरस्स अतिय धम्मपण्णत्तिं उवसपज्जित्ता ण विहरित्तए एव सपेहेइ सपेहित्ता कल्ल विउल तहेव जिमियभुत्तुत्तरागए त मित्त जाव विउलेण पुप्फजाव सक्कारेइ सम्माणेइ २त्ता तस्सेव मित्तजावपुरओ जेट्ठपुत्त सद्दावेइ सद्दावेत्ता एव वयासी–एव खलु पुत्ता! अह वाणियग्गामे बहूण राईसर जहा चिंतित जाव विहरित्तए। त सेय खलु मम इदाणिं तुम सयस्स कुडुबस्स आलवणं ठवेत्ता जाव विहरित्तए। तए ण जेट्ठपुत्ते आणदस्स समणोवासगस्स तहत्ति एयमट्ठ विणएण पडिसुणेइ। तए ण से आणदे समणोवासए तस्सेव मित्तजाव पुरतो जेट्ठपुत्त कुडुबे ठवेइ ठवेत्ता एव वयासी–मा ण देवाणुप्पिया! तुम्हे अज्जप्पभिइ केइ मम बहूसु कज्जेसु जाव आपुच्छउ वा पडिपुच्छउ वा मम अट्ठाए असण पाण खाइम साइम वा उवक्खडेउ वा उवकरेउ वा। तए ण से आणदे समणोवासए जेट्ठपुत्त मित्तणाइ आपुच्छइ आपुच्छित्ता सयाओ गेहाओ पडिनिक्खमइ, पडिनिक्खमित्ता वाणियग्गाम नगर मज्झमज्झेण निग्गच्छइ निग्गच्छित्ता जेणेव कोल्लाए सन्निवेसे जेणेव नायकुले जेणेव पोसहसाला तेणेव उवागच्छइ उवागच्छित्ता पोसहसाल पमज्जइ २त्ता उच्चारपासवणभूमीं पडिलेहइ पडिलेहित्ता दब्भसथारय सथरइ, दब्भसथारय दुरूहइ २त्ता

पोसहसालाए पोसहिए दब्भसंथारोवगए समणस्स भगवतो महावीरस्स अंतियं धम्मपन्नत्तिं उवसंपज्जित्ता णं विहरइ। तए णं से आणंदे समणोवासए पढमं उवासगपडिमं उवसंपज्जित्ता णं विहरइ। पढमं उवासगपडिमं अहासुत्तं ४ सम्मं काएणं फासेइ जाव आराहेइ। तए णं से आणंदे समणोवासए दोचं उवासगपडिमं, एवं तच्चं, चउत्थं, पंचमं, छट्ठं, सत्तमं, अट्ठमं, नवमं, दसमं, एकारसमं जाव आराहेइ। तए णं से आणंदे समणोवासए इमेणं एयारूवेणं ओरालेणं विउलेणं पयत्तेणं पग्गहिएणं तवोकम्मेणं सुक्के जाव किसे धमणिसंतए जाए। इति। वृत्तिर्यथा–' महावीरस्स अंतियं ' ति अन्ते भवा आन्तिकी महावीरसमीपाभ्युपगतेत्यर्थः तां ' धम्मपन्नत्तिं ' ति धर्मप्रज्ञप्तिमुपसंपद्य–अङ्गीकृत्यानुष्ठानद्वारतः ' जहा पूरणो ' ति भगवत्यभिहितो बालतपस्वी स यथा स्वस्थाने पुत्रादिस्थापनमकरोत्तथाऽयं कृतवानित्यर्थः। एवं चासौ कृतवान् ' विउलं असणपाणखाइमसाइमं उवक्खडावित्ता, मित्तनाइनियगसंबंधिपरिजणं आमंतेत्ता, तं मित्तनाइनियगसंबंधिपरिजणं विउलेणं असणपाणखाइमसाइमेणं वत्थगंधमल्लालंकारेण य सक्कारेत्ता संमाणेत्ता, तस्सेव मित्तनाइनियगसंबंधिपरियणस्स पुरतो जेट्ठपुत्तं कुडुंबे ठावित्ता ' ' नायकुलंसि ' त्ति स्वजनगृहे ' उवक्खडेउ ' त्ति उपस्करोतु–राध्यतु ' उवकरेउ ' ति उपकरोतु–सिद्धं सत् द्रव्यान्तरैः कृतोपकारमाहितगुणान्तरं विदधातु ' पढमं ' ति एकादशानामाद्यामुपासकप्रतिमां–श्रावकोचिताभिग्रहविशेषरूपामुपसंपद्य विहरति। तस्याश्चेदं स्वरूपम्—" संकादिसल्लविरहिय–सम्मदंसणजुओ उ जो जंतू सेसगुणविप्पमुक्को, एसा खलु होइ पढमाओ ॥ १ ॥ " सम्यग्दर्शनप्रतिपत्तिश्च तस्य पूर्वमप्यासीत्, केवलमिह शङ्कादिदोषराजाभियोगाद्यपवादवर्जितत्वेन तथाविधसम्यग्दर्शनाचारविशेषपाल-

नाभ्युपगमेन च प्रतिमात्वं सम्भाव्यते कथमन्यथाऽसावेकमासं प्रथमायाः प्रतिमायाः पालनेन, द्वौ मासौ द्वितीयायाः पालनेन, एवं यावदेकादश मासानेकादश्या पालनेन, पञ्चसार्द्धानि वर्षाणि पूरितवानित्यर्थतो वक्ष्यतीति, न चायमर्थो दशाश्रुतस्कन्धादावुपलभ्यते, श्रद्धामात्ररूपायास्तत्र तस्याः प्रतिपादनात्। 'अहासुत्तं' ति सूत्रानतिक्रमेण, यथा कल्प-प्रतिमाचारानतिक्रमेण, यथामार्ग-क्षायोपशमिकभावानतिक्रमेण, 'अहातच्च' ति यथातत्त्वं दर्शनप्रतिमेति शब्दस्यान्वर्थानतिक्रमेण, 'फासेइ' त्ति स्पृशति प्रतिपत्तिकाले विधिना प्रतिपत्ते. 'पालेइ' त्ति सततोपयोगप्रतिजागरणेन रक्षति। 'सोहइ' त्ति शोभयति गुरुपूजापुरस्सरपारणककरणेन शोधयति वा निरतिचारतया 'तीरेइ' त्ति पूर्णेऽपि कालावधावनुबन्धात्यागात्, कीर्त्तयति तत्समाप्ताविदञ्चेहादिमध्यावसानेषु कर्त्तव्यं तच्च मया कृतमिति कीर्त्तनात्, आराधयति एभिरेव प्रकारैः सपूर्णां निष्ठां नयतीति। 'दोच्चं' ति द्वितीयां व्रतप्रतिमाम्, इदञ्चास्याः स्वरूपम्—"दसणपडिमाजुत्तो, पालतोऽणुव्वए निरइयारे। अणुकपाइगुणजुओ, जीवो इह होइ वयपडिमा ॥ २ ॥" 'तच्चं' ति तृतीयां सामायिकप्रतिमाम्, तत्स्वरूपमिदम्—"वरदसणवयजुत्तो, सामाइयं कुणइ जो उ सझासु। उक्कोसेण तिमासं, एसा सामाइयप्पडिमा ॥ ३ ॥" 'चउत्थं' ति चतुर्थीं पौषधप्रतिमामिवस्वरूपाम्—"पुव्वोदियपडिमजुओ, जो कुणइ पोसहं तु सपुन्नं। अट्ठमिचउद्दसाइसु, चउरो मासा चउत्थी सा ॥ ४ ॥" 'पचमं' ति पञ्चमीं प्रतिमाप्रतिमां कायोत्सर्गप्रतिमामित्यर्थः, स्वरूपञ्चास्याः—"सम्ममणुव्वयगुणवयसिक्खावयवं थिरो य नाणी य। अट्ठमिचउद्दसीसु, पडिमं ठाएगराईयं ॥ ५ ॥ असिणाणवियडभोई, मउलिकडो दिवसबंभयारी य। राइं परिमाणकडो, पडिमावज्जेसु दियहेसु ॥ ६ ॥" 'असिणाणवियडभोई' अस्नानोऽरात्रिभोजी चेत्यर्थः।

'मउडिकडो 'त्ति मुत्कलकच्छ इत्यर्थः । "झायइ पडिमाइठिओ, तिलोयपुज्जे जिणे जियकसाए नियदोसपच्चणीयं, अन्नं वा पंच जा मासा ॥ ७ ॥" 'छट्ठं' ति षष्ठीं अब्रह्मवर्जनप्रतिमाम्, एतत्स्वरूपश्चैवम्—" पुव्वोदियगुणजुत्तो, विसेसओ मोहणिज्जवज्जो य । वज्जइ अबंभमेगंतओ य राइंपि थिरचित्तो ॥ ८ ॥ सिंगारकहाविरओ, इत्थीए समं रहम्मि नो ठाइ । चयइ य अइप्पसंगं, तहा विभूसं च उक्कोसं ॥ ९ ॥ एवं जा छम्मासा, एसोऽहिगओ उ इयरहा दिट्ठं । जावज्जीवंपि इमं, वज्जइ एयंमि लोगंमि ॥ १० ॥" 'सत्तमं' ति सप्तमीं सचित्ताहारवर्जनप्रतिमामित्यर्थः, इयञ्चैवम्—" सचित्तं आहारं वज्जइ असणाइयं निरवसेसं । सेसवयसमाउत्तो, जा मासा सत्त विहिपुव्वं ॥ ११ ॥" 'अट्ठमिं' ति अष्टमीं स्वयमारम्भवर्जनप्रतिमाम्, तद्रूपमिदम्—" वज्जइ सयमारंभं, सावज्जं कारवेति पेसेहिं । वित्तिनिमित्तं पुव्वय–गुणजुत्तो अट्ठ जा मासा" ॥ १२ ॥ 'नवमं' ति नवमीं भृतकप्रेष्यारम्भवर्जनप्रतिमाम्, सा चेयम्—" पेसेहिं आरंभं, सावज्जं कारवेइ णो गुरुयं । पुव्वोइयगुणजुत्तो, णव मासा जाव विहिणाओ ॥ १३ ॥" 'दसमं' ति दशमीं उद्दिष्टभक्तवर्जनप्रतिमाम्, सा चैवम्—" उद्दिट्ठकडं भत्तंपि, वज्जए किमुय सेसमारंभं । सो होइ य खुरमुंडो, सिहलिं वा धारए कोइ ॥ १४ ॥" दव्वं पुट्ठो जाणं, जाणेइ वयइ नो य नेवेति । पुव्वोदियगुणजुत्तो, दस मासा कालमाणेणं ॥ १५ ॥" 'एकारसमं' ति एकादशीं श्रमणभूतप्रतिमाम्, तत्स्वरूपश्चैतत्—" खुरमुंडो लोएण व, रयहरणं उग्गहं च घेत्तूणं । समणब्भूओ विहरइ, धम्मं काएण फासंतो ॥१६॥ एवं उक्कोसेणं एकारस मास जाव विहरति ।" इति उपासक प्रथमाध्ययनसावचूरिक २७ प्रतौ ८ पत्रे ॥२॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालनिवर्द्धितयशःपरसालसालातिशालिशीलश्रीजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि श्रीउपासकविचारनामा सप्तमस्तरङ्गः ॥७॥

सर्वविद्वजगत्सर्वं, छद्मस्थोऽप्यवलोकते । यत्प्रभावाद्भृश भक्त्या, भजे तज्जिनभाषितम् ॥ १ ॥

अथ क्रमायातादष्टमाङ्गात्किञ्चित् रत्नावलीतपःस्वरूपजिज्ञासया लिख्यते—

तेणं कालेणं तेणं समएणं चंपाणाम णयरी होत्था, पुण्णभद्दे चेतिए, तत्थ णं चंपाए नयरीए कोणिए राया होत्था, वण्णओ, तत्थ णं चंपाए णयरीए सेणियस्स रण्णो भज्जा कोणियस्स रण्णो चुल्लमाउया काली नाम देवी होत्था, वण्णओ जहा णंदा जाव सामाइयमाइयातिं एकारसअंगाइं अहिज्जति, बहूहिं चउत्थ जाव अप्पाणं भावेमाणी विहरति । तते णं सा काली अज्जा अण्णया कयाइ जेणेव अज्जचंदणा अज्जा तेणेव उवागता २ एवं वयासी–इच्छामि णं अज्जाओ ! तुब्भेहिं अब्भणुण्णाता समाणा रयणावलिं तवं उवसंपज्जित्ता णं विहरित्तए ? अहासुहं देवाणुप्पिया ! मा पडिबंधं करेहि । तते णं सा काली अज्जा अज्जचंदणाए अब्भणुण्णाया समाणा रयणावलिं उवसंपज्जित्ता णं विहरति । तं जहा–चउत्थं करेइ चउत्थं करेत्ता सव्वकामगुणियं पारेति, सव्वकामगुणियं पारेत्ता छट्ठं करेति छट्ठं करेत्ता सव्वकामगुणियं पारेति, पारेत्ता अट्ठमं करेति करेत्ता सव्वकामगुणियं पारेति, पारेत्ता अट्ठछट्ठाइं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चउत्थं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता छट्ठं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता दसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता दुवालसमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चोद्दसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता सोलसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठारसमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता वीसइमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता बावीसइमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता

चउवीसइमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता छवीसइमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठावीसइमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता तीसइमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता बत्तीसं करेइ करेत्ता सव्व-कामगुणियं पारेइ, पारेत्ता चउत्तीसं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चउत्तीसं छट्ठाइं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चउत्तीसं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता बत्तीसं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता तीसं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठावीसं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता छवीसं करेति करेत्ता सव्वकामगुणियं पारेति, पारेत्ता चउवीसइमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता बावीसइमं करेति करेत्ता सव्वकाम-गुणियं पारेइ, पारेत्ता वीसं करेति करेत्ता सव्वकामगुणिय पारेइ, पारेत्ता अट्ठारसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता सोलसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चोद्दसमं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता बार-समं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता दसमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठमं करेति करेत्ता सव्वकामगुणियं पारेति, पारेत्ता छट्ठं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चउत्थं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता अट्ठछट्ठाइं करेति करेत्ता सव्वकामगुणियं पारेति, पारेत्ता अट्ठमं करेइ करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता छट्ठं करेति करेत्ता सव्वकामगुणियं पारेइ, पारेत्ता चउत्थं करेति करेत्ता सव्वकामगुणियं पारेइ। एवं खलु एसा रयणावलीए तवोकम्मस्स पढमा परिवाडी एगेणं संवच्छरेणं तिहिं मासेहिं बावीसाए य अहोरत्तेहिं अहासुत्तं जाव आराहिया भवति। तयाणंतरं च णं दोचाए परिवाडीए चउत्थं करेति विगइवज्जं पारेति, पारेत्ता छट्ठं करेइ विगइवज्जं पारेइ, एवं जहा पढमाए

परिवाडीए तहा बीयाए, नवर—सव्वत्थ पारणए विगइवज्जं पारेति जाव आराहिया भवति । तयाणतरं च णं तच्चाए परिवाडीए चउत्थं करेति करेत्ता अलेवाडं पारेति सेसं तहेव णवर—अलेवाडं पारेति । एवं चउत्थावि परिवाडी णवर—सव्वपारणए आयंबिलं पारेति, सेसं तं चेव । पढमंमि सव्वकामं, पारणयं बितियए विगतिवज्जं । तइयंमि अलेवाडं, आयंबिलमो चउत्थंमि ॥ १ ॥ तते णं सा काली अज्जा रयणावलितवोकम्मं पंचहिं संवच्छरेहिं दोहि य मासेहिं अट्ठावीसाए य दिवसेहिं अहासुत्तं जाव आराहेत्ता जेणेव अज्जचंदणा अज्जा तेणेव उवागच्छति, उवागच्छित्ता अज्जचंदणं अज्जं वंदति नमंसति बहूहिं चउत्थ जाव अप्पाणं भावेमाणी विहरइ । इति । वृत्तिर्यथा—' रयणावलि ' त्ति रत्नावली—आभरणविशेषः । रत्नावलीव रत्नावली, यथाहि—रत्नावली उभयतः आदिसूक्ष्मस्थूलस्थूलतरविभागकाहलिकाख्यसौवर्णावयवद्वययुक्ता भवति पुनर्मध्यदेशे स्थूलविशिष्टमण्यलङ्कृता च भवति, एवं यत्तपः पट्टादावुपदर्श्यमानमिममाकारं धारयति तद्रत्नावलीत्युच्यते, तत्र चतुर्थमेकेनोपवासेन षष्ठं द्वाभ्यामष्टमं त्रिभिः, ततोऽष्टौ षष्ठानि, तानि च स्थापनायां चत्वारि चत्वारि कृत्वा पङ्क्तिद्वयेन स्थाप्यन्ते, अथवा पङ्क्तित्रयेण नव कोष्टकान् कृत्वा मध्यकोष्ठे शून्यं विधाय शेषेष्वष्टासु अष्ट षष्ठानि रचनीयानि, ततश्चतुर्थादि चतुस्त्रिंशत्तमपर्यन्तं, चतुस्त्रिंशत्तमं च षोडशभिरुपवासैः, ततो रत्नावलीमध्यभागकल्पनया चतुस्त्रिंशत् षष्ठानि, एतेषां स्थूलमणितया कल्पितत्वात्, एतानि चोत्तराधर्येण द्वे त्रीणि चत्वारि पञ्च षट् पञ्च चत्वारि त्रीणि द्वे च स्थापनीयानि, अथवा अष्टाभिः षड्भिश्च रेखाभिः पञ्चत्रिंशत्कोष्ठकान् विधाय मध्ये शून्यं कृत्वा शेषेषु चतुस्त्रिंशत्षष्ठानि स्थापनीयानि, एवं चतुस्त्रिंशत्तमादीनि चतुर्थान्तानि, पुनरप्यष्ट षष्ठानि, स्थापना त्वेषां पूर्ववत्, पुनरप्यष्टमषष्ठचतुर्थानीति । प्रथमायां परि-

पार्थ्यां सर्वकामगुणितं पारयति, तत्र सर्वे कामगुणा—अभिलषणीया रसादिगुणाः सञ्जाता यस्मिंस्तत्तथा सर्वरसोपेतमित्यर्थः, भोजनमिति गम्यते । पारणकसङ्ग्रहगाथा—" पढमंमि सव्वकामं, पारणयं बीयते विगइवज्जं । तइयंमि अलेवाडं, आयंबिलमो चउत्थंमि ॥ १ ॥ " पारणक इति गम्यते, वाचनान्तरे—" पढमंमि सव्वगुणिए पारणकं " इति दृश्यते ।

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितयशपरसालसालातिशालिशीलश्रीजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि अन्तगडविचारनामाऽष्टमस्तरङ्गः ॥८॥

अतीतानागता भावा, वर्त्तमान इव स्फुटम् । यत्प्रभावात्प्रतीयन्ते, तां जिनेशगिरं स्तुमः ॥ १ ॥

अथानुत्तरोपपातिकाङ्गे चतुर्दशसहस्रप्रमितेषु साधुषु महादुष्करकारितया महानिर्जरतया भगवता श्रीवीरेण स्वयं व्यावर्णितस्यात एव चमत्कारिचरित्रस्य धन्यकस्य स्वरूपं किञ्चिन्निरूप्यते—

" तेणं कालेणं तेणं समएणं रायगिहे णगरे गुणसिलए चेतिए सेणिए राया, तेणं कालेणं तेणं समएणं समणे भगवं महावीरे समोसढे परिसा णिग्गया, सेणिए णिग्गते, धम्मकहा सोच्चा परिसा पडिगता । तते णं से सेणिए राया समणस्स० अंतिए धम्मं सोच्चा णिसम्म समणं भगवं महावीरं वंदति णमंसति २ एवं वदासी—इमासि णं भंते ! इंदभूतिपामोक्खाणं चोद्दसन्हं समणसाहस्सीणं कतरे अणगारे महादुकरतराए चेव महानिज्जरतराए चेव ? एवं खलु सेणिया ! इमार्सि इंदभूतिपामोक्खाणं चोद्दसन्हं समणसाहस्सीणं धण्णे अणगारे महादुकरकारए चेव माहाणिज्जरतराए चेव । से केणट्ठेणं भंते ! एवं वुच्चति इमासिं जाव साहस्सीणं धण्णे अणगारे महादुकरकारए महाणिज्जरतराए ?

एव खलु सेणिया ! तेणं कालेणं तेण समएणं काकदीणाम णयरी होत्था उप्पि पासायवडिंसए विहरति । तते ण अह अण्णदा कदाइ पुव्वाणुपुव्वीए चरमाणे गामाणुगामं दूइज्जमाणे जेणेव काकंदी नगरी जेणेव सहसववणे उज्जाणे तेणेव उवागए अहापडिरूव उग्गह उ० २ सजमेण जाव विहरामि, परिसा णिग्गता तहेव जाव पव्वइते जाव बिलमिव जाव आहारेति, धण्णस्स अणगारस्स पादाण सरीरवण्णओ सव्वो जाव उवसोभेमाणे २ चिट्ठति, से तेणट्ठेण सेणिया ! एवं वुच्चति–इमासिं चोद्दसन्ह समणसाहस्सीण धण्णे अणगारे महादुक्करकारए महाणिज्जरतराए चेव । तते ण से सेणिए राया समणस्स भगवओ महावीरस्स अतिए एयमट्ठ सोच्चा णिसम्म हट्ठतुट्ठ० समण भगव महावीर तिक्खुत्तो आयाहिणपयाहिण करेति २ वदति नमसति २ जेणेव धण्णे अणगारे तेणेव उवागच्छति २ धण्ण अणगार तिक्खुत्तो आयाहिणपयाहिण करेति करेत्ता वदति नमसति २ एव वयासी–धण्णेऽसि ण तुम देवाणु० सुपुण्णेऽसि० सुकयत्थे सुकयलक्खणे सुलद्धे ण देवाणुप्पिया! तव माणुस्सए जम्मजीवितफलेत्तिकट्टु वंदति णमसति २ जेणेव समणे भगव० तेणेव उवागच्छति उवागच्छित्ता समण भगव० तिक्खुत्तो वदति णमसति २ जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगते । तते ण तस्स धण्णस्स अणगारस्स अण्णया कयाति पुव्वरत्तावरत्तकाले धम्मजागरियं० इमे एतारूवे अज्झत्थिए एव खलु अह इमेण ओरालेण जहा खदओ तहेव चिंता आपुच्छण थेरेहिं सद्धिं विउल दूरुहति मासियाए सलेहणाए णवमासपरियातो जाव कालमासे कालं किच्चा उड्ढ चदिमजाव णव य गेविज्जविमाणपत्थडे उड्ढ दूर वीतिवइत्ता सव्वट्ठसिद्धे विमाणे देवत्ताए उववण्णे, थेरा तहेव उत्तरति जाव इमे से आयारभडए, भतेत्ति भगव गोतमे तहेव पुच्छति जहा खदयस्स भगव वागरेति जाव सव्वट्ठसिद्धे विमाणे

उववन्ने। धण्णस्स णं भंते ! देवस्स केवतियं कालं ठिती पन्नत्ता ? गोयमा ! तेत्तीसं सागरोवमाइं ठिती पण्णत्ता । से णं भंते ! ततो देवलोगातो कहिं गमिहिति ? कहिं उववज्जिहिति ? गोयमा ! महाविदेहे वासे सिज्झिहिति । इति । वृत्तिस्तु सुगमत्वादस्य नास्ति । एतेन च धन्यकेन नवमासपर्यायेण किं योगोद्वहनं कृतं ? एकादशाङ्गी स च श्रूयते एव, तस्मादनागमिकं योगोद्वहनमिति यत्केचित्प्रलपन्ति तच्चाकर्णयितुमनर्हम्, यत आगमव्यवहारिव्यवहारस्यान्यैरनुगन्तुमशक्यत्वात् । सङ्क्षेपेण तदुद्वहनस्य सम्भाव्यमानत्वादन्यत्र सिद्धान्ते विस्तरतो योगोद्वहनविधेऽभिहितत्वाच्चेति ।

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलश्रीजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि अनुत्तरोपपातिकविचारनामा नवमस्तरङ्गः ॥ ९ ॥

रागद्वेषविनिर्मुक्तैर्जिनैर्जनहिताय यः । उपदिष्टः स इष्टानि, वितनोतु जिनागमः ॥ १ ॥

अथ प्रश्नव्याकरणविचारा लिख्यन्ते—

ननु आत्मनि प्रमाणाभावः, प्रत्यक्षादिप्रमाणचतुष्टयाविषयत्वात् । न च घटमहं जानामीत्याद्यहंप्रत्ययानिर्णीतोऽयमिति अस्याऽतात्त्विकत्वात्, इतरथा गौरोऽहं स्थूलोऽहमित्यादिप्रत्ययस्य तात्त्विकत्वापत्त्यात्मनि स्थूलत्वाद्यापत्तेः हसनजल्पनादिचेष्टाश्चेमाः कायाकारपरिणभूतपञ्चकोत्था खादिरताम्बूलचूर्णक्रमुकसंयोगोत्पन्नरागवदित्यादिनास्तिकमतनिराचिकीर्षया परमिथ्यात्विमतनिराचिकीर्षया चागमो लिख्यते—

अवरे णत्थिकवादिणो वामलोकवादी भणति—सुणवि णत्थि जीवो, ण जाइ इह परे वा लोए, न य किंचिवि फुसइ पुण्णपाव, नत्थि फल सुकयदुक्कयाण, पचमहाभूतियं सरीर भासति, हे वातजोगजुत्त, पच य खधे भणति केई, मण च मणजीविया वदति, वाउ जीवो त्ति एवमाहसु, सरीर सादीय सणिधण इह भवे एगे भवे तस्स विप्पणासमि सव्वणासो त्ति एव जपति मुसावादी, तम्हा दाणवयपोसहाण तवसंजमबभचेरकल्लाणमादियाण णत्थि फल, णवि य पाणिवह अलियवयण, न चेव चोरिक्ककरण परदारसेवण वा, सपरिग्गहपावकम्मकरणपि णत्थि किंचि, ण णेरइयतिरियमणुयाण जोणी, ण देवलोको वा अत्थि, ण य अत्थि सिद्धिगमण, अम्मापियरोवि णत्थि, णवि अत्थि पुरिसकारो, पच्चक्खाणमवि णत्थि, णवि अत्थि कालमच्चू, अरहता वा चक्कवट्टी बलदेवा वासुदेवा नत्थि, णेवत्थि केवि रिसओ धम्माधम्मफल वा णेव अत्थि किंचि बहुअ व थोवक वा, तम्हा एव विजाणिऊण जहा सुबहुइदियाणुकूलेसु सव्वविसएसु वट्ट, णत्थि काचि किरिया वा अकिरिआ वा एव भणति, णत्थिकवादिणो वामलोगवादी। इमपि बितिय कुदसण असब्भाववादिणो पण्णवेंति मूढा—सभूओ अंडकाओ लोको, सयभूणा सय च निम्मिओ, एव एत अलिय पयावइणा इसरेण य कयति केई, एव विण्हुमय कसिणमेव य जगति केई, एवमेके वदति मोस एको आया अकारको वेदको य सुकयस्स दुक्कयस्स, करणाणि कारणाणि य सव्वहा सव्वहिं च णिच्चो य णिक्कियो निग्गुणो य, अणुवलेवओ (अन्नो य लेवओ) त्तिवि य एवमाहसु असब्भाव। जंपि इह किंचि जीवलोगे दीसइ सुकय वा दुक्कय वा। एय जइच्छाए वा सभावेण वावि दइवतप्पभावओ वावि भवति। णत्थित्थ किंचि कयक तत्त लक्खणविधाण णियतीयकारिका, एव केइ जपति इड्ढिरस-

सातगारवपरा । वृत्तिर्यथा–तथा अपरे–उक्तेभ्योऽन्ये नास्तिकवादिनो–लोकायतिकाः वामं–प्रतीपं लोकं वदन्ति ये सतां लोकवस्तूनामसत्त्वस्य प्रतिपादनात्ते वामलोकवादिनो भणन्ति–प्ररूपयन्ति, किं? शून्यमिति जगदिति गम्यते कथं? आत्माद्यभावात्, तदेवाह–नास्ति जीवः तत्प्रसाधकप्रमाणाभावात्, स हि न प्रत्यक्षग्राह्योऽतीन्द्रियत्वेन तस्याभ्युपगतत्वात्, नाप्यनुमानग्राह्यः प्रत्यक्षाप्रवृत्तावनुमानस्याप्यप्रवृत्तेः, आगमानां च परस्परतो विरुद्धत्वेनाप्रमाणत्वादिति, असत्त्वादेवासौ न याति–न गच्छति ‘ इहे ’ ति मनुष्यापेक्षया मनुष्यलोके, परे वा परस्मिन् तदपेक्षयैव देवादिलोके, न च किञ्चिदपि स्पृशति बध्नाति पुण्यपापं–शुभाशुभं कर्म, नास्ति फलं सुकृतदुष्कृतानां पुण्यपापकर्मणां जीवासत्वेन तयोरप्यसत्वात्, तथा पञ्चमहाभौतिकं शरीरं भाषन्ते ‘ हे ’ इति निपातो वाक्यालङ्कारे वातयोगयुक्तं–प्राणवायुना सर्वक्रियासु प्रवर्त्तितमित्यर्थः । तत्र पञ्चमहाभौतिकमिति महान्ति च तानि लोकव्यापकत्वाद्भूतानि च सद्भूतवस्तूनि महाभूतानि, तानि चामूनि–पृथिवी कठिनरूपा आपो द्रवलक्षणाः तेज उष्णरूपम् वायुश्चलनलक्षणः आकाशं शुषिरलक्षणमिति, एतन्मयमेव शरीरं नापरः शरीरवर्त्ती तन्निष्पादकोऽस्ति जीवः इति विवक्षा । तथाहि–भूतान्येव सन्ति प्रत्यक्षेण तेषामेव प्रतीयमानत्वात् तदितरस्य तु सर्वथाऽप्रतीयमानत्वात्, यच्चु चैतन्यं भूतेषूपलभ्यते तद्भूतेष्वेव कायाकारपरिणतेष्वभिव्यज्यते मद्याङ्गेषु समुदितेषु मदशक्तिवत्, तथा न भूतेभ्योऽतिरिक्तं चैतन्यं कार्यत्वान्मृदो घटवदिति, ततो भूतानामेव चैतन्याभिव्यक्तिर्जलस्य बुद्बुदाभिव्यक्तिवदिति, अलीकवादिता चैषामात्मनः सत्त्वात्, सत्त्वं च प्रमाणोपपत्तेः प्रमाणं च सर्वजनप्रतीतं जातिस्मरणाद्यन्यथाऽनुपपत्तिलक्षणमनेकधा शास्त्रान्तरप्रसिद्धमिति । न च भूतधर्मश्चैतन्यं तद्भावेऽपि तस्याभावाद्दिव-

क्षितभूताभावेऽपि प्रेताद्यवस्थायां चैतन्यसद्भावाच्चेति ।' पंच य खंधे भणंति केई 'त्ति पंच च स्कन्धान् रूपवेदनाविज्ञानसंज्ञासंस्काराख्यान् भणन्ति केचिदिति–बौद्धाः, तत्र रूपस्कन्धः–पृथिवीधात्वादयो रूपादयश्च वेदनास्कन्धः पुनः–सुखा दु खा सुखदुःखेति त्रिविधवेदनास्वभाव , विज्ञानस्कन्धस्तु–रूपादिविज्ञानलक्षण , संज्ञास्कन्धश्च–संज्ञानिमित्तोद्ग्राहणात्मकः प्रत्ययः, संस्कारस्कन्धः पुनः–पुण्यापुण्यादि धर्मसमुदाय इति, न चैतेभ्यो व्यतिरिक्तः कश्चिदात्माख्यपदार्थोऽध्यक्षादिभिरवसीयते इति । तथा ' मण च मणजीविया वदंति 'त्ति न केवल पञ्चैव स्कन्धान् मनश्च–मनस्कारो रूपादिज्ञानलक्षणानामुपादानकारणभूतो यमाश्रित्य परलोकोऽभ्युपगम्यते बौद्धै , मन एव जीवो येषां मते ते मनोजीवाः त एव मनोजीविकाः, अलीकवादिता चैषां सर्वथाऽननुगामिनि मनोमात्ररूपे जीवे कल्पिते परलोकासिद्धेः, तदसिद्धिश्चावस्थितस्यैकस्यात्मनोऽसत्त्वान्मनोमात्रात्मनः क्षणान्तरस्यैवोत्पादात् अकृताभ्यागमादिदोषप्रसङ्गात्, कथञ्चिदनुगामिनि तु मनसि जीवत्वाभ्युपगमः सम्यक् एवेति । तथा ' वाउजीवोत्ति एवमाहंसु ' त्ति वातः–उच्छ्वासादिलक्षणो जीव इत्याहुरेके, सद्भावाभावयोर्जीवनमरणव्यपदेशात् नान्यः परलोकयाय्यात्माऽस्तीति, अलीकवादिता चैषां वायोर्जडत्वेन चैतन्यरूपजीवत्वायोगात्, तथा शरीर सादि उत्पन्नत्वात् सनिधन क्षयदर्शनात् ' इह भवे एगे भवे ' त्ति इह भव एव प्रत्यक्षजन्मैव एको भव –एक जन्म नान्यः परलोकोऽस्ति प्रमाणाविषयत्वात्, तस्य–शरीरस्य विविधैः प्रकारै प्रकृष्टो नाशो विप्रणाशस्तस्मिन् सति सर्वनाश इति नात्मा शुभाशुभरूप वा कर्म विशिष्टमवशिष्यते इति, एतत्–एवमुक्तप्रकार 'जपंति' जल्पन्ति, के ? मृषावादिनः, मृषावादिता चैषां जातिस्मरणादिना जीवपरलोकसिद्धेः । तथा किमन्यद्वदन्ति ? इत्याह–यस्मात् शरीर सादिकमित्यादि तस्माद्दान-

व्रतपौषधानां—वितरणनियमपर्वोपवासानाम् तथा तपो—अनशनादि संयमः—पृथिव्यादिरक्षा ब्रह्मचर्यं प्रतीतं एतान्येव कल्याणं कल्याणहेतुत्वात् तदादिर्येषां ज्ञानश्रद्धादीनां तानि तथा तेषां नास्ति फलं—कर्मक्षयसुगतिगमनादिकम्, नापि चास्ति प्राणिवधालीकवचनमशुभफलसाधनतयेति गम्यम्, न चैव—नैव चौर्यकरणं परदारसेवनं वाऽस्त्यशुभफलसाधनतयैव, सह परिग्रहेण यद्वर्त्तते तत्सपरिग्रहं तच्च तत्पापकर्मकरणं च—पातकक्रियासेवनं तदपि नास्ति किञ्चित्क्रोधमानाद्यासेवनरूपम्, नरकादिका च जगतो विचित्रता स्वभावादेव न कर्मजनिता, तदुक्तम्—" कण्टकस्य च तीक्ष्णत्वं, मयूरस्य विचित्रता । वर्णाश्च ताम्रचूडानां, स्वभावेन भवन्ति हि ॥ १ ॥ " इति । मृषावादिता चैवमेतेषाम्—स्वभावो हि जीवाद्यर्थान्तरभूतस्तदा प्राणातिपातादिजनितं कर्मैवासौ, अथानर्थान्तरभूतस्ततो जीव एवासौ, तदव्यतिरेकात्तत्स्वरूपवत्, ततो निर्हेतुका नारकादिविचित्रता स्यात्, न च निर्हेतुकं किमपि भवति अतिप्रसङ्गादिति । तथा न नैरयिकातिर्यग्मनुजानां योनिः—उत्पत्तिस्थानं, पुण्यपापकर्मफलभूताऽस्तीति प्रकृतम्, न देवलोको वाऽस्तीति पुण्यकर्मफलभूतः नैवाऽस्ति सिद्धिगमनं सिद्धेः सिद्धस्य चाभावात्, अंबापितरावपि न स्तः उत्पत्तिमात्रनिबन्धनत्वात् मातापितृत्वस्य, न चोत्पत्तिमात्रनिबन्धनस्य मातापितृतया विशेषो युक्तः, यतः कुतोऽपि किञ्चिदुत्पद्यते एव, यथा—सचेतनात्सचेतनं यूकामत्कुणादि अचेतनं च मूत्रपुरीषादि, अचेतनाच्च सचेतनं यथा काष्ठाद् घुणकीटकादि अचेतनं च चूर्णादि, तस्माज्जन्यजनकभावमात्रमर्थानामस्ति नान्यो मातापितृपुत्रादिर्विशेष इति, तदभावात्तद्भोगविनाशापमाननादिषु न दोष इति भावः, मृषावादिता चैषां वस्त्वन्तरस्य पित्रोश्च जनकत्वे समानेऽपि तयोरत्यन्तहिततया विशेषवत्त्वेन सत्त्वात्, हितत्वं च तयोः प्रतीतमेव, आह च—" दुःप्रतिकारौ " इत्यादि, ना-

प्यस्ति पुरुषकार, त विनैव नियतित सर्वप्रयोजनानां सिद्धेः, उच्यते च–" प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्य भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्य भवति न भाविनोऽस्ति नाश ॥ १ ॥" मृषावादिता चैषां सकललोकप्रतीतपुरुषकारापलापेन प्रमाणातीतनियतिमताभ्युपगमादिति। तथा प्रत्याख्यानमपि नास्ति धर्मसाधनतया धर्मस्यैवाभावादिति, अस्य च सर्वज्ञवचनप्रामाण्येनास्तित्वात्तद्वादिनामसत्यता। तथा नैवास्ति कालमृत्यु. तत्र कालो नास्ति अनुपलम्भात्, यच्च वनस्पतिकुसुमादिकाललक्षणमाचक्षते तत्तेषां स्वरूपमिति मन्तव्यम्, असत्यता चैषामपि स्वरूपस्य वस्तुनोऽनतिरेकात् कुसुमादिकरणमकारणं तरूणां स्यात्। तथा मृत्युः–परलोकप्रयाणलक्षणोऽसावपि नास्ति, जीवाभावेन परलोकगमनाभावात्, अथवा कालक्रमेणविवक्षितायुष्ककर्मणः सामस्त्यनिर्जरावसरे मृत्युः कालमृत्युः, तदभावश्चायुष एवाभावात्, तथा अर्हदादयो 'नत्थि' त्ति न सन्ति प्रमाणाविषयत्वात्। 'नेवत्थि केवि रिसओ' त्ति नैव सन्ति केचिदपि ऋषयो–गौतमादिमुनयः प्रमाणाविषयत्वादेव, वर्त्तमानकाले वा ऋषित्वस्य साध्वनुष्ठानस्यासत्त्वात्, सतोऽपि वा निष्फलत्वादिति अत्र शिष्यादिप्रवाहानुमेयत्वादर्हदादिसत्त्वस्यानन्तरोक्तत्वात् वादिनामसत्यता। ऋषित्वस्यापि सर्वज्ञवचनप्रामाण्येन सर्वदा भावादित्याज्ञाप्राह्यार्थापलापिनां सर्वत्रासत्यवादिता भावनीयेति, तथा धर्माधर्मफलमपि नास्ति किञ्चिद् बहुक वा स्तोक वा, धर्माधर्मयोरदृष्टत्वेन नास्तित्वात् 'नत्थि फल सुकय' इत्यादि, यदुक्तम्–प्राकृतसामान्यजीवापेक्षया यच्च 'धम्माधम्म' इत्यादि तद्दर्शनापेक्षयेति न पुनरुक्ततेति। 'तम्ह' त्ति यस्मादेव तस्मादेव–उक्तप्रकार वस्तु विनाय 'जहा सुबहुइंदियाणुकूलेसु' त्ति यथा–यत्प्रकाराः सुबहु–अत्यर्थमिन्द्रियानुकूला ये ते तथा तेषु सर्वेषु विषयेषु वर्त्तितव्यम्, नास्ति काचित् क्रिया

वा—अनिन्द्यक्रिया अक्रिया वा—पापक्रिया पापेतरक्रिययोरास्तिककल्पितत्वेनापरमार्थिकत्वात्, भणंति च " पिव खाद च चारुलोचने ! यदतीतं वरगात्रि ! तन्न ते । न हि भिरु ! गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् ॥ १ ॥ " एवमित्यादि निगमनम् । तथा इदमपि द्वितीयं नास्तिकदर्शनापेक्षया कुदर्शनं कुमतमसद्भाववादिनः प्रज्ञापयन्ति मूढाः—व्यामोहवन्तः, कुदर्शनता च वक्ष्यमाणस्यार्थस्याप्रमाणत्वात्तद्वादिप्रोक्तप्रमाणस्य च प्रमाणाभासत्वाद्भावनीया, किम्भूतं दर्शनं ? इत्याह—सम्भूतो—जातोऽण्डकात्—जन्तुयोनिविशेषात् लोकः—क्षितिजलानलानिलवननरनरकनाकितिर्यग्रूपः, तथा स्वयम्भूवा—ब्रह्मणा स्वयं च—आत्मना निर्मितो—विहितः तत्राण्डकप्रसूतभुवनवादिनां मतमित्थमाचक्षते—" पुव्वं आसि जगमिणं, पंचमहब्भूयवज्जियगभीरं । एगण्णवं जलेणं, महप्पमाणं तहिं अंडं ॥ १ ॥ वीईपरेण घोलंत, अच्छिउं सुइरकालओ फुट्टं । फुट्टं दुभागजायं, अध्धं भूमी य संवुत्तं ॥ २ ॥ तत्थ सुरासुरनारगसमणुयसचउप्पयं जगं सव्वं । उप्पण्णं भणियमिणं, बंभंडपुराणसत्थंमि ॥३॥" तथा स्वयम्भूनिर्मितजगद्वादिनो भणन्ति—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अवितर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥ १ ॥ तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे । नष्टामरनरे चैव, प्रणष्टोरगराक्षसे ॥ २ ॥ केवलं गह्वरीभूते, महाभूतविवर्जिते । अचिन्त्यात्मा विभुस्तत्र, शयानस्तप्यते तपः ॥ ३ ॥ तत्र तस्य शयानस्य, नाभेः पद्मं विनिर्गतम् । तरुणरविमण्डलानिभं, हृद्यं काञ्चनकर्णिकम् ॥ ४ ॥ तस्मिन् पद्मे भगवान्, दण्डी यज्ञोपवीतसंयुक्तः । ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥ ५ ॥ अदितिः सुरसङ्घानां, दितिरसुराणां मनुर्मनुष्याणाम् । विनता विहङ्गमानां, माता विश्वप्रकाराणाम् ॥ ६ ॥ कद्रुः सरीसृपाणां, सुलसा माता च नागजातीनाम् ।

सुरभिश्चतुष्पदानामिला पुनः सर्वबीजानाम् ॥७॥ " इति । एवमुक्तक्रमेणैतदनन्तरोदित वस्तु अलीक भ्रान्तज्ञानिभिः प्ररूपितत्वात्, तथा प्रजापतिना–लोकप्रभुणा ईश्वरेण च–महेश्वरेण च कृत–विहितमिति केचिद्वादिनो भणन्तीति प्रकृत, भणन्ति चेश्वरवादिनः–बुद्धिमत्कारणपूर्वक जगत् संस्थानविशेषयुक्तत्वात् घटादिवदिति, कुदर्शनता चास्य वल्मीकबुद्बुदादिभिर्हेतोरनैकान्तिकत्वात्, कुलालादितुल्यस्य बुद्धिमत्कारणस्य साधनेन चेष्टविघातकारित्वादिति, तथा एव यथा ईश्वरकृत तथा विष्णुमय–विष्ण्वात्मक कृत्स्नमेव जगदिति केचिद्वदन्तीति प्रकृत, भणन्ति च एतन्मतावलम्बिनः—" जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके । ज्वालामालाकुले विष्णुः, सर्व विष्णुमय जगत् ॥१॥ " तथा—" अह च पृथिवी पार्थ ! वाय्वग्निजलमप्यहम् । वनस्पतिगतश्चाह, सर्वभूतगतोऽप्यहम् ॥ २ ॥ " तथा—" सो किल जलयसमुत्थेणुदएणेगन्नवमि लोगमि । वीतीपरपरेण घोलतो उदयमज्झमि ॥ ३ ॥ " स किल मार्कण्डर्षि " पेच्छइ सो तसथावरपणट्ठसुरनरतिरिक्खजोणीय । एगन्नव जगमिण महाभूयविवज्जिय गुहिर ॥ ४ ॥ एवविहे जगमी, पेच्छइ निग्गोहपायव सहसा । मदरगिरिं व तुग महासमुद्द व विच्छिन्न ॥ ५ ॥ खधमि तस्स सयण, अच्छइ तहिं बालओ मणभिरामो । [ विष्णुरित्यर्थः ] ससिद्धो सुद्धहियओ मिउकोमलकुचियसुकेसो ॥ ६ ॥ हत्थो पसारिओ से, महरिसिणा एहि तत्थ भणिओ य। खधे मम विलग्गसु, मा मरिहिसि उदगवुड्डीए ॥ ७ ॥ तेण य घेत्तु हत्थे, उ मीलिओ सो रिसि तओ तस्स पिच्छइ उदरमि जय ससेलवणकाणण सव्व ॥८॥ " ति, पुनः सृष्टिकाले विष्णुना सृष्टम्, कुदर्शनता चास्य प्रतीतिबाधितत्वात्, तथा एव वक्ष्यमाणेन न्यायेन एके–केचनात्माऽद्वैतवाद्यादयो वदन्ति मृषा–अलीक यदुत एक आत्मा, तदुक्तम्—" एक एव हि भूतात्मा, भूते भूते व्यवस्थितः ।

एकधा बहुधा चैव, दृश्यते जलचंद्रवत् ॥ १ ॥ ” तथा “ पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यम् ” इत्यादि, कुदर्शनता चास्य सकललोकविलोक्यमानभेदनिबन्धनव्यवहारोच्छेदप्रसङ्गात्, तथा अकारकः—सुखदुःखहेतूनां पुण्यपापकर्मणामकर्त्तात्मेत्यन्ये वदन्ति, अमूर्त्तत्वनित्यत्वाभ्यां कर्तृत्वानुपपत्तेरिति, कुदर्शनता चास्य संसार्यात्मनो मूर्त्तत्वेन परिणामित्त्वेन च कर्तृत्वोपपत्तेः, अकर्तृत्वे च अकृताभ्यागमप्रसङ्गात्, तथा वेदकश्च—प्रकृतिजनितस्य सुकृतस्य दुष्कृतस्य च प्रतिबिंबोदयन्यायेन भोक्ता, अमूर्त्तत्वे हि कदाचिदपि वेदकता न युक्ताऽऽकाशस्येवेति कुदर्शनताऽस्य तथा सुकृतदुष्कृतस्य, च कर्मणः करणानि—इन्द्रियाणि कारणानि—हेतवः सर्वथा—सर्वप्रकारैः सर्वत्र देशे काले च न वस्त्वन्तरं कारणमिति भावः, करणान्येकादशः, तत्र वाक्पाणिपादपायूपस्थलक्षणानि पञ्च कर्मेन्द्रियाणि स्पर्शनादीनि तु पञ्च बुद्धीन्द्रियाणि एकादशं च मनः इति, एषां चाचेतनावस्थायामकारकत्वात्पुरुषस्यैव कारकत्वेन कुदर्शनत्वमस्य, तथा नित्यश्चासौ, यदाह—“ नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो, न शोषयति (नैनं वहति) मारुतः ॥१॥ अच्छेद्योऽयमभेद्योऽयममूर्त्तोऽयं सनातनः” इति, असच्चैतदेकान्तनित्यत्वे हि सुखदुःखबन्धमोक्षाद्यभावप्रसङ्गात्, तथा निष्क्रियः सर्वव्यापित्वेनावकाशाभावाद्गमनागमनादि क्रियावर्जितः, असच्चैतद्देहमात्रोपलभ्यमानतद्गुणत्वेन तन्नियतत्वात्, तथा निर्गुणश्च सत्वरजस्तमोलक्षणगुणत्रयव्यतिरिक्तत्वात् प्रकृतेरेव ह्येते गुणा इति, यदाह—“अकर्त्ता निर्गुणो भोक्ता, आत्मा कपिलदर्शने। ” इति, असिद्धं चास्य सर्वथा निर्गुणत्वं ‘चैतन्यं पुरुषस्य स्वरूपं’ इति अभ्युपगमात्, तथा ‘अणुवलेवउ’ त्ति अनुपलेपकः कर्मबन्धनरहितः, आह च—“ यस्मान्न बध्यते नापि, मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च, नानाश्रया प्रकृतिः ॥ १ ॥ ” इति,

असच्चैतन्मुक्ताभुक्तयोरेवमविशेषप्रसङ्गात्, पाठान्तरम्—'अन्नो य लेवउ' त्ति तत्रान्यश्चापरो लेपतः कर्मबन्धनादिति, एतदप्यसत् कथञ्चिदिति शब्दानुपादानात्, इत्यपि च, इति-उपदर्शने अपि च-अलीकवादान्तरसमुच्चयार्थः, तथा एव वक्ष्यमाणप्रकारेण ' आहसु ' त्ति ब्रुवते स्म असद्भाव-असन्तमर्थं यदुत यदपि-यदेव सामान्यत सर्वमित्यर्थः, इह-अस्मिन् किञ्चिद्-अविवक्षितविशेष जीवलोके-मर्त्यलोके दृश्यते, सुकृत वा आस्तिकमतेन सुकृतफल सुखमित्यर्थः, दुष्कृत वा दुष्कृतफल दु खमित्यर्थः, एतत् ' जइच्छाए व ' त्ति यदृच्छया वा स्वभावेन चापि दैवतप्रभावतो वाऽपि-विधिसामर्थ्यतो वाऽपि भवति, न पुरुषकारः कर्म वा हिताहितनिमित्तमिति भाव , तत्र अनभिसन्धिपूर्विकार्थप्राप्तिर्यदृच्छा, पठ्यते च—" अतर्कितोपस्थितमेव सर्वं, चित्र जनानां सुखदु खजातम् । काकस्य तालेन यथाऽभिघातो, न बुद्धिपूर्वोऽत्र वृथाऽभिमान' ॥१॥" तथा—" सत्य पिशाचाः स्म वने वसामो, भेरीं कराग्रैरपि न स्पृशामः । यदृच्छया सिध्यति लोकयात्रा, भेरीं पिशाचाः परिताडयन्ति ॥ २ ॥ " इति, स्वभावः पुनर्वस्तुन स्वत एव तथा परिणति भाव', उक्त च—" क कण्टकाना प्रकरोति तैक्ष्ण्य, विचित्रभाव मृगपक्षिणां च । स्वभावत सर्वमिद प्रवृत्त, न कामचारोऽस्ति कुत' प्रयत्न' ? ॥३॥ " इति । दैव-विधिरिति लौकिकी भाषा, तत्रोक्तम्—" प्राप्तव्यमर्थं लभते मनुष्य , किं कारण दैवमलङ्घनीयम् । तस्मान्न शोचामि न विस्मयो मे, यदस्मदीय न हि तत्परेषाम् ॥ ४ ॥ द्वीपादन्यस्मादपि, मध्यादपि जलनिधेर्दिशोऽप्यन्तात् । आनीय झटिति घटयति, विधिरभिमतसभिमुखीभूत' ॥ ५ ॥ " इति, असद्भूतता चात्र प्रत्येकमेषां, जिनमतप्रतिकुष्टत्वात्, तथाहि—" कालो सहाव नियई, पुव्वकय पुरिसकारणेगता । मिच्छत्त ते चेव उ, समासओ होंति सम्मत्त॥१॥ "इति।तथा नास्ति-न विद्यतेऽत्र लोके किञ्चिच्छु-

भमशुभं वा कृतकं–पुरुषकारनिष्पन्नं, कृतं–च कार्यं प्रयोजनमित्यर्थः, पाठान्तरेण—' नत्थि किंचि कयकं तत्तं ' तत्र तत्त्वं वस्तुस्वरूपमिति, तथा लक्षणानि–वस्तुरूपाणि विधाश्च–भेदा लक्षणविधाः तासां लक्षणविधानाम् नियतिश्च–स्वभावविशेषश्च कारिका–कर्त्री, सा च पदार्थानामवश्यन्तया यद्यथा भवने प्रयोजयित्री भवितव्यतेत्यर्थः। अन्ये त्वाहुः–यद् मुद्गादीनां राद्धि-स्वभावत्वमितरद्वा स स्वभावः यच्च राद्धावपि नियतरसत्वं न शाल्यादिरसता सा नियतिरिति, तत्र चोक्तम्—" न हि भवति यन्नभाव्यं, भवति च भाव्यं विनाऽपि यत्नेन। करतलगतमपि नश्यति, यस्य तु भवितव्यता नास्ति ॥ १ ॥ " असत्यता चास्य पूर्ववद्वाच्या, एवमित्युक्तप्रकारेण केचिन्नास्तिकादयो जम्पन्ति–ऋद्धिरससातगौरवपरा ऋद्ध्यादिषु गौरवं–आदरस्तत्प्रधाना इत्यर्थः। इति श्रीप्रश्नव्याकरणद्वितीयाश्रवद्वारवृत्तौ ८६ प्रतौ १६–१७–१८–१९। पत्रे ॥ १ ॥

ननु सांसारिककार्यनिमित्तं द्रौपद्यादिभिः पूजितत्वात् संसारनिमित्तमेव प्रतिमा दृश्यन्ते, न तु मुक्तिनिमित्तम्, यदि च मुक्तिनिमित्तं स्यात्तदा मुनीनामपि कुत्रापि निरवद्यं प्रतिमावन्दनमप्युक्तं स्यात्, अत्रोच्यते–अरे कुमतग्रस्त ! मुनीनामपि अत्यन्तबालादीनां चैत्यान्तानां यथोचितं वैयावृत्त्यं कर्त्तव्यमुक्तम्, तत्र चैत्यस्य तु अन्नादिसंपादनादिकं शरीरविश्रामणादिकं चायौक्तिकमिति वन्दनस्तवनादिकमेव तद्वैयावृत्त्यं, ततो मुनीनामपि चैत्यवन्दनस्तवनमुक्तमेव द्रष्टव्यम्, वैयावृत्त्यसूत्रं चेदम्–

अह केरिसए पुणाइं आराहइ वयमिणं ? जे से उवहिभत्तपाणसंगहणादाणकुसले अच्चंतबाल १ दुब्बल २ गिलाण ३ वुड्ढ ४ खवगे ५ पवत्ति ६ आयरिय ७ उवज्झाए ८ सेहे ९ साहम्मिए १० तवस्सी ११ कुल १२ गण १३ संघ १४ चेइयट्ठे १५ निज्जरट्ठी वेयावच्चं अणिस्सियं दसविहं बहुविहं करेइ ॥ इति। वृत्तिर्यथा–अथ–परिप्रश्नार्थे कीदृशः पुनः 'आइं'

ति अलङ्कारे, आराधयति व्रतमिदम्? इह प्रश्ने उत्तरमाह—'जे से' इत्यादि, योऽसावुपधिभक्तपानानां दान सङ्ग्रहण च तयोः कुशलो-विधिज्ञो यः सः तथा, तथा बालश्च दुर्बलश्चेत्यादिसमाहारद्वन्द्वस्ततोऽत्यन्त यद्बालदुर्बलग्लानवृद्धक्षपक तत्तथा तत्र विषये वैयावृत्त्य करोतीति योगः, प्रवृत्त्याचार्योपाध्याये इह द्वन्द्वैकत्वात्प्रवृत्त्यादिषु, तत्र प्रवृत्तिलक्षणं त्विदम्—"तवसंजमजोगेसु, जो जोगो तत्थ त पवत्तेइ। असुह च नियत्तेई, गणतत्तिल्लो पवित्तीओ ॥ १ ॥" इतरौ प्रतीतौ तथा 'सेहे' त्ति शैक्षे-अभिनवप्रव्रजिते साधर्मिके-समानधर्मिके लिङ्गप्रवचनाभ्यां तपस्विनि-चतुर्थभक्तादिकारिणि,तथा कुल-गच्छसमुदायरूप चन्द्रादिक, गणः-कुलसमुदायरूपः कोटिकादिकः सङ्घ-तत्समुदायरूपः, चैत्यानि-जिनप्रतिमा एतासां योऽर्थः-प्रयोजन स तथा, तत्र निर्जरार्थी-कर्मक्षयकाम' वैयावृत्त्य-व्यावृत्तकर्मरूपमुपष्टम्भमित्यर्थः, अनिश्रित-कीर्त्यादिनिरपेक्ष दशविधं-दश प्रकारम्, आह च—" वेयावच्च वावडभावो इह धम्मसाहणनिमित्त। अन्नाइयाण विहिणा, सपायणमेस भावत्थो ॥ १ ॥ आयरिय १ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहाण ६। साहम्मिय ७ कुल ८ गण ९ सघ १० सगय तमिह कायव्व ॥ २ ॥" बहुविध-भक्तपानादिदानभेदेनानेकप्रकार करोति। इति प्रश्नव्याकरणाङ्गद्वितीयश्रुतस्कन्धतृतीयाध्ययने ८६ प्रतौ ६४ पत्रे ॥ २ ॥

एतेन चतुर्दशोपकरणातिरिक्तमुपकरण वस्त्रादिक मुनिभिर्न रक्षणीयमित्याद्येकान्तेन यदभिधान तदयौक्तिक, उपध्यादिसङ्ग्रह विना तद्दानस्यानुपपत्तेः, तथा एतेनैव च यद्गीतार्थैरपि भुक्तससार एव दीक्षणीयो नाष्टादिवार्षिकः, इत्याद्येकान्तेन यदभिधान तदप्ययौक्तिकमेव, अन्यथाऽत्यन्तबालासम्भवे तद्वैयावृत्त्यस्याप्यसम्भवादिति।

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारक-
श्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेष-
समुच्चयापरनाम्नि प्रश्नव्याकरणविचारनामा दशमस्तरङ्गः ॥ १० ॥

कर्कशकुतर्कसङ्करदुर्धरतिमिरौघदिनकराकारम् । विश्वाधारं जिनमतमभिमतदं नौमि गुरुभक्त्या ॥ १ ॥

अथ विपाकाङ्गविचारा लिख्यन्ते—

केचिन्मिथ्यात्विकृतं सर्वं व्यर्थमेव मन्वते, तच्चायौक्तिकम्, मिथ्यात्विनाऽपि सुबाहुकुमारेण प्राग्भवे मुनिदानप्रभावात्संसारः परिध्वस्तो मनुजायुश्च निबद्धमिति श्रूयते । तथा हि—

तते णं से सुमुहे गाहावती सुदत्तं अणगारं एज्जमाणं पासति २त्ता हट्ठतुट्ठे आसणातो अब्भुट्ठेति २त्ता पायपीठातो पच्चोरुहति २त्ता पाउयाओ अ ओमुयइ २त्ता एगसाडियं उत्तरासंगं करेइ २त्ता सुदत्तं अणगारं सत्तट्ठपयाइं अणुगच्छति २त्ता तिक्खुत्तो आयाहिणपयाहिणं करेति २ त्ता वंदति णमंसति २त्ता जेणेव भत्तघरे तेणेव उवागच्छति २त्ता सयहत्थेणं विउलेणं असणपाणखाइमसाइमेणं पडिलाभेस्सामि त्तिकट्टु हट्ठतुट्ठे । तते णं तस्स सुमुहस्स गाहावइस्स तेणं दव्वसुद्धेणं ३ तिविहेणं तिकरणसुद्धेणं सुदत्ते अणगारे पडिलाभिते समाणे संसारे परित्तीकते मणुस्साउए निबद्धे ॥ इति । वृत्तिस्तु सुगमत्वादस्य नास्ति । इति श्रीविपाकद्वितीयश्रुतस्कन्धप्रथमाध्ययने ४६ प्रतौ ४४ पत्रे ॥ १ ॥

केचिच्च पौर्णमासीममावास्यां (च) विहाय त्रयोदशीचतुर्दश्योः पौषधं कुर्वन्ति, अपरे च पर्वतिथावेव पौषधोऽनुष्ठेयो, नान्य-

देति वदन्ति । ते चोभयेऽपि मिथ्यावादिना द्रष्टव्या। । ' चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु " इत्यत्र चतुर्दशीपौर्णमास्योः, चतुर्दश्यमावास्ययोरेव(वा)ऽऽराध्यत्वेनोक्तत्वात्, सुबाहुकुमारेण पौषधत्रयस्य कृतत्वाच्च । तत्सूत्र चेदम्—

" तते ण से सुबाहुकुमारे समणोवासए जाए, अहिगयजीवाजीवे जाव पडिलाभेमाणे विहरइ । तते ण से सुबाहुकुमारे अण्णदा कदाइ चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु जेणेव पोसहसाला तेणेव उवागच्छति, २ त्ता पोसहसाल पमज्जति २त्ता उच्चारपासवणभूमिं पडिलेहेइ २ त्ता दब्भसथार सथरेइ २त्ता दब्भसथार दुरूहइ २त्ता अट्ठमभत्त पगिन्हति, पगिन्हेत्ता पोसहसालाए पोसहिए अट्ठमभत्तिए पोसह पडिजागरमाणे विहरति । " इति विपाकद्वितीयश्रुतस्कन्धप्रथमाध्ययने ४६ प्रतौ ४४ पत्रे ॥ २ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितयशःपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि श्रीविपाकविचारनामा एकादशस्तरङ्गः ॥११॥

## समाप्त चेद विचाररत्नाकरे प्राच्य तटम् ॥

अनेकसिद्धान्तविचाररत्नारम्ये गुरूपासनमार्गलभ्ये । विचाररत्नाकरनामशास्त्रे, प्राच्य तट प्राप्तमिद समाप्तिम् ॥ १ ॥
पदैस्त्रिभिर्येन समस्तमेतत् त्रैलोक्यमाक्रान्तमहो महीयः । सनातन त नरकान्तक च, सिद्धान्तगोविन्दमह श्रयामि ॥२॥

अथानुक्रमायाता उपाङ्गविचारा। प्रस्तूयन्ते । तत्र प्रथममौपपातिकविचारा यथा—

केचिच्चाविदितसूत्रतात्पर्याः 'जीवेणं भंते ! असंजय ' इत्यादिसूत्रं दर्शयन्तोऽकामनिर्जरालब्धदेवभवा जन्मान्तराराधका न भवन्त्येवेति निश्चयं वदन्ति तच्चासङ्गतं, टीकायां भाज्या, इति व्याख्यातत्वात् । सटीकं सूत्रं चेदम्—

" जीवे णं भंते ! असंजए अविरए अपडिहयपच्चक्खायपावकम्मे इतो चुए पेच्चा देवे सिया ? गोयमा ! अत्थेगतिया देवे सिया अत्थेगतिया णो देवे सिया । से केणट्ठेणं भंते ! एवं वुच्चति–अत्थेगतिया देवे सिया अत्थेगतिया णो देवे सिया ? गोयमा ! जे इमे जीवा गामागरनगरनिगमरायहाणिखेडकब्बडमडंवदोणमुहपट्टणासमसंबाहसन्निवेसेसु अकामतन्हाए अकामच्छुहाए अकामबंभचेरवासेणं अकामअन्हाणकसीयातवदंसमसगसेयजल्लमल्लपंकपरितावेणं अप्पतरो वा भुज्जतरो वा कालं अप्पाणं परिकिलेस्संति अप्पतरो भुज्जतरो वा कालं अप्पाणं परिकिलेसित्ता कालमासे कालं किच्चा अन्नतरेसु वाणमंतरेसु देवलोएसु देवत्ताए उववत्तारो भवंति, तहिं तेसिं गती तहिं तेसिं ठिती तहिं तेसिं उववाए पण्णत्ते । तेसि णं भंते ! देवाणं केवतियं कालं ठिती पण्णत्ता ? गोयमा ! दसवाससहस्साइं ठिती पण्णत्ता । अत्थि णं भंते ! तेसिं देवाणं इड्ढी इ वा जुती इ वा जसे ति वा बले ति वा वीरिए ति वा पुरिसकारपरक्कमे ति वा ? हंता अत्थि । तेणं भंते ! देवा परलोगस्साराहगा ? णो इणट्ठे समट्ठे" इति । वृत्तिर्यथा–' जे इमे जीवा ' इति य इमे प्रत्यचासन्ना जीवाः–पञ्चेन्द्रियतिर्यङ्मनुष्यलक्षणाः, ग्रामाकरादयः प्राग्वत्, 'अकामतन्हाए' त्ति अकामानां–निर्जराद्यनभिलाषिणां सतां तृष्णा–तृट् अकामतृष्णा तया, एवमन्यत्पदद्वयम्, 'अकामअन्हाणगसीयातवदंसमसगसेयजल्लमल्लपंकपरितावेणं' इह स्वेदः–प्रस्वेदो, याति–लगति चेति 'जल्लो' रजोमात्रं,मलः–कठिनीभूतः, पङ्कः–स एव स्वेदेनार्द्रीभूतः, अस्नानकादयस्तु प्रतीताः, अस्नानकादिभिर्यः परितापः

स तथा तेन 'अप्पतरो वा भुज्जतरो वा काल'ति प्राकृतत्वेन विभक्तिपरिणामादल्पतर वा भूयस्तर वा काल यावत् 'अन्नतरेसु' त्ति बहूनां मध्ये एकतरेषु 'वाणमंतरेसु' त्ति व्यन्तरेषु देवलोकेषु-देवजनेषु मध्ये, 'तहिं तेसिं गइ' त्ति तस्मिन् वानमन्तरे देवलोके तेषामसयतादिविशेषणजीवाना गति –गमन, 'ठिइ'त्ति अवस्थान, 'उववाओ' त्ति देवतया भवन, 'इड्ढी इ व' त्ति ऋद्धिः परिवारादिसपत् । 'जुती इ व' त्ति द्युतिः–शरीराभरणादिदीप्तिः, इशब्दो निपातो वाक्यालङ्कारार्थः, इतिशब्दो वाऽय कृतसन्धिप्रयोगउपदर्शनार्थः । 'जसे इ व' त्ति यशःख्यातिः । वा शब्दो विकल्पार्थः, क्वचित्पठ्यते–' उट्ठाणे इ वा कम्मे इ व' त्ति । तत्रोत्थान–उर्द्धीभवन, कर्म–उत्क्षेपणादिका क्रिया, 'बले इ व' त्ति बल–शारीरः प्राणः, 'वीरिए इ व'त्ति वीर्य–जीवप्रभवः प्राण एव 'पुरिसक्कारपरक्कमे इ व' त्ति पुरुषकारः पुरुषत्वाभिमान स एव निष्पादितफलः पराक्रमः, इते ति' एवमेवार्थ, 'तेण देवा परलोगस्स आराहग' त्ति ते अकामनिर्जरालब्धदेवभवा व्यन्तराः परलोकस्य–जन्मान्तरस्य निर्वाणसाधनानुकूलस्याराधका'–निष्पादकाः इति प्रश्न, नो इणट्ठे' त्ति नायमर्थः 'समट्ठे' त्ति समर्थ –सङ्गत. इत्युत्तरम्, अयमभिप्राय –ये हि सम्यग्दर्शनज्ञानपूर्वकानुष्ठानतो देवाः स्युः त एव अवश्यतया आनन्तर्येण पारम्पर्येण वा निर्वाणानुकूल भवान्तरमावर्जयन्ति, तदन्ये तु भाज्याः । इत्यौपपातिकसूत्रवृत्तौ ७० प्रतौ ६२ पत्रे ॥ १ ॥

पुनरपि जिनप्रतिमारिपुप्रतिबोधाय अम्मडेन यथा अन्यतीर्थिकदेवान्यतीर्थिकपरिगृहीतार्हत्प्रतिमानिषेधपूर्वकमर्हत्प्रतिमावन्दनाद्यङ्गीकृत, तथा लिख्यते—

" अम्मडस्स णो कप्पइ अन्नउत्थिया वा अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरिहंतचेइयाणि वा

वंदित्तए वा नमंसित्तए वा जाव पज्जुवासित्तए वा णन्नत्थ अरिहंते वा अरिहंतचेइयाणि वा " इति । वृत्तिर्यथा—' अन्नउत्थिए व ' त्ति अन्ययूथिका-आर्हतसङ्घापेक्षयाऽन्ये शाक्यादयः ' चेइयाइं ' त्ति अर्हच्चैत्यानि-जिनप्रतिमा इत्यर्थः । 'णन्नत्थ अरिहंतेहिं व ' त्ति न कल्पते इह योऽयं नेति निषेधः सोऽन्यत्रार्हद्भ्यः अर्हतो वर्जयित्वेत्यर्थः । इत्यौपपातिकसूत्रवृत्तौ ८३ प्रतौ ६७ पत्रे ॥ २ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्याय श्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे औपपातिकविचारनामा प्रथमस्तरङ्गः ॥१॥

यस्मात्प्रादुर्भवद्रत्नैरयत्नैर्भूष्यते सताम् । कण्ठपीठं नमस्तस्मै, श्रुतरोहणभूभृते ॥ १॥

अथ राजप्रश्नीयविचारा यथा—

श्रोत्रस्य द्वादशयोजनपरिमिते विषये सत्यपि दिव्यानुभावतोऽधिकविषयताऽपि श्रूयते । तथा हि—

तए णं से पाइत्ताणियाहिवई देवे सूरियाभेणं देवेणं एवं वुत्ते समाणे हट्ठ जाव हियए एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणेति २ त्ता जेणेव सूरियाभे विमाणे जेणेव सभा सुहम्मा जेणेव मेघोघरसियगंभीरमहुरसद्दा जोयणपरिमंडला सुस्सरा घंटा तेणेव उवागच्छति तेणेव उवागच्छिता तं मेघोघरसियं गंभीरमहुरसद्दं जोयणपरिमंडलं सुस्सरं घंटं तिक्खुत्तो उल्लालेइ । तते णं तीसे मेघोघरसियगंभीरमहुरसद्दाए जोयणपरिमंडलाए सुस्सराए घंटाए तिक्खुत्तो उल्लालियाए समाणीए से सूरियाभे विमाणे पासायविमाणा निक्खुडावडियसद्दघंटापडिसुयसयसहस्ससंकुला जाया यावि होत्थात्ति । वृत्तिर्यथा—

'तए ण गे' इत्यादि, 'जाव पडिसुणेत्ता' इति, अत्र यावच्छब्दकरणात् 'करयलपरिग्गहिय दसनह सिरसावत्त मत्थए अजलिंकट्टु [एव देवो तहत्ति आणाए विणएण वयण पडिसुणेति]' इति द्रष्टव्यम् । 'तिक्खुत्तो उल्लालेइ' त्ति त्रिःकृत्व.-त्रीन् वारान् उल्लालयति-ताडयति। ततो 'ण'मिति वाक्यालङ्कारे तस्यां-मेघौघरसितगम्भीरमधुरशब्दाया योजनपरिमण्डलाया सुस्वराभिधानाया घण्टायां त्रि'कृत्वस्ताडिताया सत्या यत्सूर्याभविमान तत्प्रासादनिष्कुटेषु च ये आपतिता' शब्दा.-शब्दवर्गणापुद्गलास्तेभ्य' समुच्छलितानि यानि घण्टाप्रतिश्रुतशतसहस्राणि घण्टाप्रतिशब्दलक्षाणि तैः सङ्कुलमपि जातमभूत् किमुक्त भवति ? घण्टाया महता प्रयत्नेन ताडितायां ये विनिर्गता शब्दपुद्गलास्तत्प्रतिघातवशतः सर्वासु दिक्षु विदिक्षु च दिव्यानुभावत. समुच्छलितै प्रतिशब्दै सकलमपि विमानमनेकयोजनलक्षमानमपि बधिरितमुपजायते इति । एतेन द्वादशभ्यो योजनेभ्य समागत' शब्द' श्रोत्रग्राह्यो भवति न परत', तत कथमेकत्र ताडिताया घण्टायां सर्वत्र तच्छब्द श्रुतिरुपजायत इति यचोच्यते तदपाकृतमवसेयम्, सर्वत्र दिव्यानुभावतस्तथारूपप्रतिशब्दोच्छलने यथोक्तदोपासम्भवात् । इति श्री राजप्रश्नीयोपाङ्गवृत्ति ८६ प्रतौ २२ पत्रे ॥ ३ ॥

अथ जिनप्रतिमासत्ताक्षराणि लिख्यन्ते—

तीसे ण मणिपेढियाए उवरिं इत्थ ण महेगे देवच्छदए पण्णत्ते सोलसजोयणाइ आयामविक्खभेण साइरेगाइ सोलसजोयणाइ उड्ढ उच्चत्तेण सव्वरयणामए जाव पडिरूवे एत्थ ण अट्ठसय जिणपडिमाण जिणुस्सेहप्पमाणमेत्ताण सन्निखित्त सचिट्ठइ' इति । वृत्तिर्यथा-'तीसे ण' इत्यादि तस्याश्च मणिपीठिकाया उपरि, अत्र महानेको देवच्छन्दकः प्रज्ञप्तः । स

च षोडशयोजनान्यायामविष्कम्भाभ्यां सातिरेकाणि षोडशयोजनानि ऊर्द्धमुच्चैस्त्वेन 'सव्वरयणामए' इत्यादि प्राग्वत्, तत्र च देवच्छन्दके अष्टशतं अष्टाधिकं शतं जिनप्रतिमानां जिनोत्सेधप्रमाणमात्राणां पञ्चधनुःशतप्रमाणानामिति भावः ।

इति श्रीराजप्रश्नीयोपाङ्गवृत्ति ११० प्रतौ ६४ पत्रे ॥ २ ॥

ननु भवन्तु ताः शाश्वत्यो जिनप्रतिमा विमानाभरणादिवत्, किमेतावता ? अत्रोच्यते—अरे वावदूक ! यथा शाश्वतान्यपि विमानानि अवस्थानाय, आभरणानि परिधानाय भवन्ति, तथा प्रतिमाः कस्मै कृत्याय भवन्ति ? वन्दनायैवेति चेदागतं वन्द्यत्वं, तथा चागमः—

तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववण्णगा देवा सूरियाभस्स देवस्स इमेयारूवमज्झत्थियं जाव समुप्पन्नं समभिजाणित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छति २त्ता सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति २त्ता एवं वयासी—एवं खलु देवाणुप्पियाणं सूरियाभे विमाणे सिद्धाययणंसि जिणपडिमाणं जिणुस्सेहप्पमाणमेत्ताणं अट्ठसयं सन्निक्खित्तं चिट्ठति, सभाए णं सुहम्माए माणवए चेइए खंभे वतिरामएसु गोलवट्टसमुग्गएसु बहूउ जिणसकहाउ सन्निक्खित्ताओ चिट्ठंति, ताओ णं देवाणुप्पियाणं अन्नेसिं च बहूणं वेमाणियाणं देवाण य देवीण य अच्चणिज्जाओ जाव पज्जुवासणिज्जाओ, तं एयं णं देवाणुप्पियाणं पुव्विं करणिज्जं, तं एयं णं देवाणुप्पियाणं पच्छाकरणिज्जं, तं एयं णं देवाणुप्पियाणं पुव्विं सेयं, तं एयं णं देवाणुप्पियाणं पच्छा सेयं, तं एयं णं देवाणुप्पियाणं पुव्विंपि

पच्छावि हियाए सुहाए खमाए निस्सेसाए आणुगामियत्ताए भविस्सइ।" इति, वृत्तिस्तु सुगमत्वादस्य नास्ति। इति श्रीराजप्रश्नीयोपाङ्गसूत्रवृत्तौ ११० प्रतौ ६६ पत्रे ॥ २ ॥

एतेन यत्कैश्चिदुच्यते स्थितिरेवेय देवानां न तु धार्मिकोऽय विधिरिति, तदपि परास्त द्रष्टव्यम्। 'हियाए सुहाए खमाए निस्सेसाए आणुगामियत्ताए भविस्सइ' इत्यादिना परपराज्ञुबन्धिपुण्यहेतुत्वेनोक्तत्वात्

अधुना यै. कारणैर्जीवा जिनधर्म लभन्ते, यैश्च न लभन्ते, तानि लिख्यन्ते—

तए ण केसीकुमारसमणे चित्त सारहिं एव वयासी–एव खलु चउहिं ठाणेहिं चित्ता! जीवा केवलिपन्नत्त धम्म नो लभेज्जा सवणयाए त आरामगय वा उज्जाणगय वा समण वा माहण वा नो अभिगच्छति नो वदति नो नमसति नो सक्कारेति नो सम्माणेति नो कल्लाण मगल देवय चेइय पज्जुवासति नो अट्ठाति हेउइ पसिणाइ वागरणाइ पुच्छति, एएण ठाणेण चित्ता! केवलिपन्नत्त धम्म नो लभति सवणताए १, उवस्सयगय समण वा त चेव जाव एतेणवि ठाणेण चित्ता! जीवा केवलिपन्नत्त धम्म नो लभति सवणताए २, गोअरगय समण वा माहण वा जाव नो पज्जुवासइ नो विउलेण असणपाणखाइमसाइमेण पडिलाभेइ णो अट्ठाइ जाव पुच्छइ एएण ठाणेण चित्ता! केवलिपन्नत्त धम्म नो लभति सवणताए ३ जत्थवियण समणेण माहणेण वा सद्धिं अभिसमागच्छइ तत्थवि य ण हत्थेण वा वत्थेण वा छत्तेणवा अप्पाण आवरित्ता चिट्ठइ नो अट्ठाइ पुच्छइ एएण ठाणेण केवलिपन्नत्त धम्म नो लभति सवणयाए ४ ॥ इति। वृत्तिर्यथा– 'चउहिं ठाणेहिं' इति आरामादिगत श्रमणादिक नाभिगच्छतीत्यादिक प्रथम कारणम् १, उपाश्रयगत नाभिगच्छतीत्या-

दिद्वितीयम् २, ( [1]प्रातिहारिकैः पीठफलकादिकं ( कैः ) न निमन्त्रयतीत्यादितृतीयम् ३, गोचरगतं नाशनादिना प्रतिलाभयतीत्यादिचतुर्थम् ४, एभिरेव चतुर्भिः स्थानकैः केवलिप्रज्ञप्तं धर्मं लभते श्रवणतया श्रवणेनेति भावः । ' जत्थवियणं ' इत्यादि, यत्रापि श्रमणः-साधुर्माहनः-परमगीतार्थः श्रावकोऽभ्यागच्छति तत्रापि हस्तेन वस्त्राञ्चलेन छत्रेण चात्मानमावृत्त्य तिष्ठति इदं प्रथमं कारणम्, एवं शेषाण्यपि कारणानि प्रत्येकमेवं भावनीयानि ) इति राजप्रश्नीयोपाङ्गवृत्ति ८६ प्रतौ ८२ पत्रे ॥ ४ ॥

तथा ये परेषामनुकम्पादानमपि निषेधयन्ति, तन्निरासाय लिख्यते—

तते णं केसीकुमारसमणे पएसिं रायं एवं वयासी-मा णं तुमं देवाणुप्पिया ! पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भवेज्जासि जहा से वणसंडेइ वा णट्टसालाइ वा इक्खुवाडेइ वा खलवाडेइ वा, कहण्णं भंते ! वणसंडे पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भवति ? पएसी ! जयाणं वणसंडे पत्तिए पुप्फिए फलिए हरियगरे रिज्जमाणसिरीए अतीव उवसोभेमाणे २ चिट्ठइ तया णं वणसंडे रमणिज्जे भवति, जया णं वणसंडे जुन्ने परिजुन्नडोडे परिसाडियपंडुपत्ते सुक्करुक्खे इव मिलायमाणे चिट्ठइ तया णं णो रमणिज्जे भवति । जया णं णट्टसालाइ गिज्जइ वाइज्जइ नच्चिज्जइ भणिज्जइ हसिज्जइ रमिज्जइ तया

१ ' प्रातिहारिकै ' इत्यादित. ' भावनीयानि ' इत्यन्तपाठस्थाने ' गोचरगत नाशनादिना प्रतिलाभयतीति तृतीयम् ३, यदापि श्रमणादिकोऽभ्यागच्छति तत्रापि हस्तेन वस्त्राञ्चलेन छत्रेण वाऽऽत्मानमावृत्य तिष्ठतीति चतुर्थम् ४, एभिरेव चतुर्भि. स्थानकै विपरीततया केवलिप्रज्ञप्त धर्म लभते श्रवणतया, यथा-आरामादिगत श्रमणादिकमभिगच्छतीति प्रथमम् १, एवं शेषाण्यपि कारणानि भावनियानि ' इति पाठ स्यात्तदा सम्यक् ।

ण णट्टसाला रमणिज्जा भवइ, जया ण णट्टसालाइ णो गिज्जइ जाव णो रमिज्जइ तया ण णट्टसाला अरमणिज्जा भवइ। जया ण इक्खुवाडे छिज्जइ भिज्जइ खज्जइ पिज्जई दिज्जइ तया ण इक्खुवाडे रमणिज्जे भवइ, जया ण इक्खुवाडे णो छिज्जइ जाव तया ण इक्खुवाडे अरमणिज्जे भवति, जया ण खलवाडे उच्छुभइ उडइज्जइ मडलइज्जइ पुणिज्जइ खज्जइ दिज्जइ पिज्जइ तया ण खलवाडे रमणिज्जे भवइ, जया ण खलवाडे नो उच्छुभइ तया ण अरमणिज्जे भवइ। से तेणट्ठेण पएसी ! एव वुच्चइ माण तुम पएसी पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासि, जहा वणसडेइ वा जाव खलवाडेइ वा। तते ण पएसीराया केसिं कुमारसमण एव वदासी णो खलु भते ! अह पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविस्सामि। अहण्ण सेयवियानयरीपामोक्खाइ सत्तगामसहस्साइ चत्तारिभागे करिस्सामि। एग भाग बलवाहणस्स दलइस्सामि। एग भाग कुट्ठारे छुभिस्सामि एग भाग अंतेउरे दलइस्सामि एगे ण भागेण महतिमहालियमहाणसिय कूडागारसाल करिस्सामि, तत्थ ण बहुहिं पुरिसेहिं दिण्णभइभत्तवेयणेहिं विउलेहिं असणपाणखाइमसाइमेहिं उवक्खडावेत्ता बहूण समणमाहणभिक्खुयाण पहियाण परिभाएत्ता बहूहिं सीलव्वयपच्चक्खाणपोसहोववासस्स जाव विहरिस्सामित्ति कट्टु, जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए। तए ण से पएसी राया कल्ल जाव जलते सेयवियापामोक्खाइ सत्तगामसहस्साइ चत्तारिभाए करेइ एग भाग बलवाहणस्स दलइ जाव कूडागारसाल करेइ, तत्थ ण बहूहिं पुरिसेहिं जाव उवक्खडेत्ता बहूण समण जाव परिभाएमाणे विहरइ इति राजप्रश्नीयोपाङ्गवृत्तौ ८६ प्रतौ ८४ पत्रे ॥ ५ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे श्रीराजप्रश्नीयविचारनामा द्वितीयस्तरङ्ग ॥ २ ॥

सुमनःसन्ततिसेव्या, रसरुचिरा प्रोच्चगोत्रसंभूता । विमलीकृतजननिवहा, जिनवाणी जयति गङ्गेव ॥ १ ॥

अथ क्रमायाताः श्री जीवाभिगमविचारा यथा—

देवभवाच्च्युत्वा पुनरपि यावता कालेन देवः स्यात्तल्लिख्यते—

देवपुरिसस्स णं भंते ! कालओ केवचिरं होइ ? गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं वणस्सइकालो, भवणवासिदेवपुरिसाणं ताव जाव सहस्सारो जहन्नेणं अंतोमुहुत्तं उक्कोसेणं वणस्सतिकालो । आणतदेवपुरिसस्स णं भंते ! केवतिअं कालं अंतरं होइ ? गोयमा ! जहन्नेणं वासपुहुत्तं उक्कोसेणं वणस्सतिकालो, एवं जावगेवेज्जदेवपुरिसस्सवि, अणुत्तरोववातियदेवपुरिसस्स जहन्नेणं वासपुहुत्तं उक्कोसेणं संखेज्जाइं सागरोवमाइं साइरेगाइं इति। वृत्तिर्यथा—'देवपुरिसस्स णं भंते!' इत्यादि, देवपुरुषस्य भदन्त! कालतः कियच्चिरं अन्तरं भवति ? भगवानाह—गौतम ! जघन्येनान्तर्मुहूर्त्तं देवभवाच्च्युत्वा गर्भव्युत्क्रान्तिकमनुष्येषूत्पद्य पर्याप्तिसमाप्त्यनन्तरं तथाविधाध्यवसायमरणेन भूयोऽपि कस्यापि देवत्वेनोत्पादसंभवात्, उत्कर्षतो वनस्पतिकालः । एवमसुरकुमारादारभ्य निरन्तरं तावद्वक्तव्यं यावत्सहस्रारकल्पदेवपुरुषस्यान्तरम्, आनतकल्पदेवस्यान्तरं जघन्येन वर्षपृथक्त्वं कस्मादेतावदिहान्तरमिति चेदुच्यते—इह यो गर्भस्थः सर्वाभिः पर्याप्तिभिः पर्याप्तः शुभाध्यवसायोपेतो मृतः सन् आनतकल्पादारतो ये देवास्तेषूत्पद्यते, नानतादिषु तस्य तावन्मात्रकालस्य तद्योग्याध्यवसायविशुद्ध्यभावात्, ततो य आनतादिभिश्च्युतः सन् भूयोऽप्यानतादिषूत्पत्स्यते सनियमाच्चारित्रमवाप्य, चारित्रं चाष्टमे वर्षे, तत उक्तं जघन्यतो वर्षपृथक्त्वं, उत्कर्षतो वनस्पतिकालः । एवं प्राणतारणाच्युतकल्पग्रैवेयकदेवपुरुषाणामपि प्रत्येकमन्तरं जघन्यत उत्कर्षतश्च वक्त-

व्यम्। अनुत्तरोपपातिककल्पातीतदेवपुरुषस्य जघन्यतोऽन्तरं वर्षपृथक्त्वम्, उत्कर्षतः सङ्ख्येयानि सागरोपमाणि सातिरेकाणि, तत्र सङ्ख्येयानि सागरोपमाणि तदन्यवैमानिकेषु सङ्ख्येयवारोत्पत्त्या सातिरेकाणि मनुष्यभवैः। तत्र सामान्याभिधानेऽप्येतदपराजितान्तमवगन्तव्यम्, सर्वार्थसिद्धे सकृदेवोत्पादतस्तत्रान्तरासम्भवात्। अन्ये त्वभिदधति-भवनवासिन आरभ्य आईशानादमरस्य जघन्यतोऽन्तर्मुहूर्त्तम्। सनत्कुमारादारभ्यासहस्राराभवदिनानि। आनतकल्पादारभ्याच्युतकल्पं यावन्नवमासाः। नवसु ग्रैवेयकेषु सर्वार्थसिद्धमहाविमानवर्जेष्वनुत्तरविमानेषु च नववर्षाणि। ग्रैवेयकान् यावत् सर्वत्रापि उत्कर्षतो वनस्पतिकालः। विजयादिषु चतुर्षु महाविमानेषु द्वे सागरोपमे। उक्तं च—" आईसाणादमरस्स, अंतरं हीणय मुहुत्तंतो। आसहसारे अच्चुय णुत्तरदिणमासवासनव ॥ १ ॥ थावरकालुक्कोसो, सव्वट्ठे बीयओ न उववाओ, दोअयरा विजयाइसु "। इति श्रीजीवाभिगमसूत्रवृत्तौ द्वितीयप्रतिपत्तौ २६४ प्रतौ ४३ पत्रे ॥ १ ॥

अथ यैः कारणैर्नारकाणां सातोदयो भवति तानि लिख्यन्ते—

उववाएण व सायं, नेरइओ देवकम्मुणा वावि। अज्झवसाणनिमित्तं, अहवा कम्माणुभावेण ॥१॥ इति। वृत्तिर्यथा—'उववाएण' इत्यत्र सप्तम्यर्थे तृतीया, उपपातकाले सातं-सातवेदनीयकर्मोदयं कश्चिद्वेदयते यः प्राग्भवे दाघच्छेदादिव्यतिरेकेण मरणमुपगतोऽनतिसंक्लिष्टाध्यवसायी समुत्पद्यते, तदानीं हि न तस्य प्राग्भवानुबद्धं व्याधिरूपं दुःखं नापि क्षेत्रस्वभावजं नापि परमाधार्मिककृतं, नापि परस्परोदीरितम्, तत एवंविधदुःखाभावादसौ सातं वेदयते, इत्युच्यते ॥ १ ॥ 'देवकम्मुणावावि' इति देवकर्मणा पूर्वसाङ्गतिकदेवप्रयुक्तया क्रियया, तथाहि—गच्छति पूर्वसाङ्गतिको देवः पूर्वपरिचितस्य नैरयिकस्य

वेदनोपशमनार्थं यथा बलदेवः कृष्णवासुदेवस्य, स च वेदनोपशमो देवकृतो मनाक्कालमात्र एव भवति तत ऊर्द्ध्वं नियमात् क्षेत्रस्वभावजा अन्या वा वेदनाः प्रवर्त्तन्ते, तथास्वाभाव्यात् ॥ २ ॥ 'अज्झवसाणनिमित्तं' इति अध्यवसायनिमित्तं सम्यक्त्वोत्पादकाले, तत ऊर्द्ध्वं कदाचित्तथाविधविशिष्टशुभाध्यवसायप्रत्ययं कश्चिन्नैरयिको बाह्यक्षेत्रस्वभावजवेदनासद्भावेऽपि सातोदयमेवानुभवति, सम्यक्त्वोत्पादकाले हि जात्यन्धस्य चक्षुर्लाभ इव महान् प्रमोद उपजायते, तदुत्तरकालमपि कदाचित्तीर्थकरगुणानुमोदनाद्यनुगतां विशिष्टां भावनां भावयतः, ततो बाह्यक्षेत्रस्वभावजवेदनासद्भावेऽप्यन्तः सातोदयो विजृम्भमाणो न विरुध्यते ३। 'अहवा कम्माणुभावेणं' इति, अथवा कर्मानुभावेन बाह्यतीर्थकरजन्मदीक्षाज्ञानापवर्गकल्याणसम्भूतिलक्षणबाह्यनिमित्तमधिकृत्य तथाविधस्य च सातवेदनीयस्य कर्मणोऽनुभावेन विपाकोदयेन कश्चित्सातं वेदयते, न चैतद्व्याख्यानमनार्षं यत उक्तं वसुदेवचरिते। इति श्रीजीवाभिगमसूत्रवृत्तौ२ तृतीयप्रतिपत्तिनारकाधिकारतृतीयोद्देशके ॥ २ ॥

इह जीवयोनिलक्षाणां चतुरशीतिर्या प्रसिद्धा श्रूयते सा उपलक्षणं, ततोऽधिकानामपि श्रूयमाणत्वात्। तथा हि——

तेसि णं भंते! जीवाणं कति जातिकुलकोडीजोणीपमुहसयसहस्सा पण्णत्ता? गोयमा! बारस जातिकुलकोडीजोणीपमुहसयसहस्सा। भुयगपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाणं भंते! कतिविधे जोणीसंगहे पण्णत्ते? गोयमा! तिविहे जोणीसंगहे पण्णत्ते, तं जहा-अंडया पोयया संमुच्छिमा, एवं जहा खहयराणं तहेव, णाणत्तं जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी, उवट्टित्ता दोच्चं पुढविं गच्छंति। णव जातिकुलकोडीजोणीपमुहसतसहस्सा भवंतीति मक्खायं सेसं तहेव। उरगपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाणं भंते! पुच्छा जहेव भुयगपरिसप्पाणं तहेव णवरं-ठिती जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं पुव्वकोडी,

उव्वट्टित्ता जाव पचमिं पुढवीं गच्छति, दसजातिकुलकोडी। चउप्पदथलयरपचिंदियतिरिक्खजोणियाण पुच्छा गोयमा! दुविहे पण्णत्ते त जहा–पोयया य सम्मुच्छिमा य, (से किं त) पोयया२ तिविहा पण्णत्ता, त जहा–इत्थी पुरिसा णपुसगा, तत्थ ण जे ते सम्मुच्छिमा ते सव्वे णपुसगा, तेसि ण भते! जीवाण कति लेसाओ पण्णत्ताओ? सेस जहा पक्खीण णाणत्त ठिती जहन्नेण अतोमुहुत्त, उक्कोसेण तिन्नि पलिओवमाइ, उव्वट्टित्ता चउत्थिं पुढविं गच्छति, दस जातिकुलकोडी। जलयरपचिंदिय तिरिक्खजोणियाण पुच्छा जधा भुयगपरिसप्पाण, नवर उव्वट्टित्ता जाव अहे सत्तमिं पुढविं अद्धतेरस जातिकुलकोडीजोणीपमुह० जाव प०। चउरिंदियाण भते! कति जातिकुलकोडीजोणीपमुहसतसहस्सा पण्णत्ता? गोयमा! नव जाइकुलकोडीजोणीपमुहसतसहस्सा जाव समक्खाया। तेइंदियाण पुच्छा गोयमा! अट्ठ जातिकुल जाव समक्खाया। बेइंदियाण भते! कइ जाइ पुच्छा गोयमा! सत्त जाइकुलकोडीजोणीपमुह०। कइ ण भते! गधा पण्णत्ता? कइ ण भते! गधसया पण्णत्ता? गोयमा! सत्त गधा सत्त गधसया पण्णत्ता। कइ ण भते! पुप्फजाइकुलकोडीजोणीपमुहसयसहस्सा पण्णत्ता? गोयमा! सोलसपुप्फजातिकुलकोडीजोणीपमुहसयसहस्सा पण्णत्ता, त जहा––चत्तारि जलजाण, चत्तारि थलयाण, चत्तारि महारुक्खियाण, चत्तारि महागुम्मियाण। कति ण भते! वल्लीओ कति वल्लीसता पण्णत्ता? गोयमा! चत्तारि वल्लीओ चत्तारि वल्लीसया पण्णत्ता। कति ण भते! लताओ कति लतासया पण्णत्ता गोयमा! अट्ठ लयाओ अट्ठ लयासया पण्णत्ता। कति ण भते! हरियकाया हरियकायसया पण्णत्ता? गोयमा! तओ हरियकाया हरियकायसता पण्णत्ता। फलसहस्स च विंटबद्धाण, फुलसहस्स च णालबद्धाण, एते सव्वे वि हरितकायमेव समोयरति, ते एव समणुगम्ममाणा२ एव समणुगाहिज्जमाणा२ एव सम-

णुपेहिज्जमाणाए एवं समणुचिंतिज्जमाणाए एएसु चेव दोसु काएसु समोयरंति । तं जहा-तसकाए चेव, थावरकाए चेव, एवामेव सपुव्वावरेणं आजीवियदिट्ठंतेणं चउरासीति जातिकुलकोडीजोणीपमुहसतसहस्सा भवंतीति मक्खाया ॥ इति । वृत्ति-र्यथा--' तेसि णं ' इत्यादि, तेषां भदंत ! जीवानां कति किं प्रमाणानि जातिकुलकोटीनां योनिप्रमुखाणि-योनिप्रवाहाणि शतसहस्राणि योनिप्रमुखशतसहस्राणि जातिकुलकोटियोनिप्रमुखशतसहस्राणि भवन्ति ? भगवानाह-द्वादश जातिकुलकोटि-योनिप्रमुखशतसहस्राणि प्रज्ञप्तानि, तत्र जातिकुलयोनीनामिदं परिस्थूरमुदाहरणं पूर्वाचार्यैरुपदर्शितम्-जातिरिति किल तिर्य-ग्जातिः तस्याः कुलानि-कृमिकीटवृश्चिकादीनि, इमानि च कुलानि योनिप्रमुखाणि, तथा हि-एकस्यामेव योनौ अनेकानि कुलानि भवन्ति, तथा हि-छगणयोनौ कृमिकुलं, कीटकुलं, वृश्चिककुलमित्यादि, अथवा जातिकुलमित्येकं पदम्, जातिकु-लयोन्योश्च परस्परं विशेषः एकस्यामेव योनावनेकजातिकुलसम्भवात्, तद्यथा-एकस्यामेव छगणयोनौ कृमिजातिकुलं कीट-जातिकुलं वृश्चिकजातिकुलमित्यादि, एवमेकस्यामेव योनाववान्तरजातिभेदभावादनेकानि योनिप्रवाहाणि जातिकुलानि सम्भव-न्तीति उत्पद्यन्ते खचरपञ्चेन्द्रियतिर्यग्योनिजानां द्वादश जातिकुलकोटिशतसहस्राणि, अत्र सङ्ग्रहणीगाथा-"जोणीसंगहलेस्सा, दिट्ठी नाणे य जोग उवओगे । उववाय ठिई समुग्धाय चवण जाई कुलविहीओ" ॥ अस्या अक्षरगमनिका-प्रथमं योनिसङ्ग्र-हद्वारं, ततो लेश्याद्वारं, ततो दृष्टिद्वारमित्यादि । ' भुयगाणं भंते ! ' इत्यादि, भुजगानां भदंत ! कतिविधो योनिसङ्ग्रहः प्रज्ञप्तः ? इत्यादि पक्षिवत्सर्वं-निरवशेषं वक्तव्यम्, नवरं स्थितिच्यवनकुलकोटिषु नानात्वं, तद्यथा--स्थितिर्जघन्येनान्तर्मु-हूर्त्तं, उत्कर्षतः पूर्वकोटी, च्यवनं-उद्वर्त्तना, तत्र नरकगतिचिन्तायामधो यावद्वितीया पृथिवी, उपरि यावत्सहस्रारकल्पस्ता-

तदुत्पद्यते, नव तेषां जातिकुलकोटियोनिप्रमुखशतसहस्राणि प्रज्ञप्तानि, एवमुरःपरिसर्पाणामपि वक्तव्यम्, नवरं तत्र च्यवनद्वारेऽधश्चिन्तायां यावत्पञ्चमी पृथिवीति वक्तव्यम्, कुलकोटिचिन्तायां दश जातिकुलकोटियोनिप्रमुखशतसहस्राणि प्रज्ञप्तानि । 'चउप्पयाण' इत्यादि, चतुष्पदानां भदन्त ! कतिविधो योनिसङ्ग्रहः प्रज्ञप्तः ? भगवानाह–गौतम ! द्विविधो योनिसङ्ग्रहः प्रज्ञप्तः, तद्यथा–पोतजा सम्मूर्च्छिमाश्च, इह ये अण्डजव्यतिरिक्ता गर्भव्युत्क्रान्ताः, ते सर्वे जरायुजाः अजरायुजा वा पोतजा इति विवक्षितमतोऽत्र द्विविधो यथोक्तस्वरूपो योनिसङ्ग्रह उक्तः, अन्यथा गवादीनां जरायुजत्वात्तृतीयोऽपि जरायुजलक्षणो योनिसङ्ग्रहो वक्तव्यः स्यादिति, तत्र ये पोतजास्ते त्रिविधा प्रज्ञप्ताः, तद्यथा––स्त्रियः पुरुषा नपुंसकाश्च, तत्र ये ते सम्मूर्छिमास्ते सर्वे नपुंसकाः, शेषद्वारकलापः पूर्ववत्, नवरं स्थितिर्जघन्येनान्तर्मुहूर्त्तमुत्कर्षतस्त्रीणि पल्योपमानि, च्यवनद्वारेऽधश्चिन्तायां यावच्चतुर्थी पृथिवी, ऊर्ध्वं यावत्सहस्रारः, जातिकुलकोटियोनिप्रमुखशतसहस्राणि अत्रापि दश । 'जलचराणं' इत्यादि, जलचराणां भदन्त ! कतिविधो योनिसङ्ग्रहः प्रज्ञप्तः ?–भगवानाह–गौतम ! त्रिविधो योनिसङ्ग्रहः प्रज्ञप्तः, तद्यथा––अण्डजाः पोतजाः सम्मूर्च्छिमाश्च, अण्डजास्त्रिविधाः प्रज्ञप्ताः, तद्यथा––स्त्रियः पुरुषा नपुंसकाश्च, पोतजास्त्रिविधाः प्रज्ञप्ताः, तद्यथा–स्त्रियः पुरुषा नपुंसकाश्च, तत्र ये ते सम्मूर्च्छिमास्ते सर्वे नपुंसकाः । शेषद्वारकलापचिन्ता प्राग्वत्, नवरं स्थितिच्यवनजातिकुलकोटिषु नानात्वम्, स्थितिर्जघन्येनान्तर्मुहूर्त्तमुत्कर्षतः पूर्वकोटी, च्यवनद्वारेऽधश्चिन्तायां यावत्सप्तमी ऊर्ध्वं यावत्सहस्रारः, कुलकोटियोनिप्रमुखशतसहस्राणि अर्द्धत्रयोदश–सार्द्धानि द्वादशेत्यर्थः । 'चउरिंदियाणं' इत्यादि, चतुरिन्द्रियाणां भदन्त ! कति जातिकुलकोटियोनिप्रमुखशतसहस्राणि प्रज्ञप्तानि ? भगवानाह––गौतम ! नव जाति-

कुलकोटियोनिप्रमुखशतसहस्राणि प्रज्ञप्तानि, एवं त्रीन्द्रियाणामष्टौ जातिकुलकोटियोनिप्रमुखशतसहस्राणि, द्वीन्द्रियाणां सप्त जातिकुलकोटियोनिप्रमुखशतसहस्राणि प्रज्ञप्तानि । इह जातिकुलकोट्यो योनिजातीयास्ततो भिन्नजातीयाभिधानप्रसङ्गतो गन्धाङ्गानि भिन्नजातीयत्वात् प्ररूपयति–'कइ णं' इत्यादि, कति भदन्त ! गन्धाङ्गानि कचिद्गन्धा इति पाठः तत्र पदैकदेशे पदसमुदायोपचारात् गन्धा इति गन्धाङ्गानीति द्रष्टव्यानि प्रज्ञप्तानि ? तथा गन्धाङ्गशतानि प्रज्ञप्तानि ? भगवानाह–गौतम ! सप्त गन्धाङ्गानि सप्त गन्धाङ्गशतानि प्रज्ञप्तानि, इह सप्त गन्धाङ्गानि परिस्थूरजातिभेदादमूनि, तद्यथा––मूलं१ त्वक्२ काष्ठं३ निर्यासः४ पत्रं५ पुष्पं६ फलं७ च । तत्र मूलं मुस्ताबालकोशीरादि१, त्वक् सुवर्णच्छल्लीत्वचाप्रभृति२, काष्ठं चन्दनागुरुप्रभृति३, निर्यासः कर्पूरादि४, पत्रं जातिपत्रतमालादि५, पुष्पं प्रियङ्गुनागरपुष्पादि६, फलं जातिफलकक्कोलकैलालवङ्गप्रभृति७, एते च वर्णमधिकृत्य प्रत्येकं कृष्णादिभेदात्पञ्चपञ्चभेदा इति वर्णपञ्चकेन गुण्यन्ते जाताः पञ्चत्रिंशत्, गन्धचिन्तायामेते सुरभिगन्धय एवेत्येकेन गुणिताः पञ्चत्रिंशज्जाताः पञ्चत्रिंशदेव'एकेन गुणितं तदेव भवती' ति न्यायात्, तत्राप्येकैकस्मिन् वर्णभेदे रसपञ्चकं द्रव्यभेदेन विविक्तं प्राप्यते इति सा पञ्चत्रिंशत् रसपञ्चकेन गुण्यते जातं पञ्चसप्ततिशतम्, स्पर्शाश्च यद्यप्यष्टौ भवन्ति तथाऽपि गन्धाङ्गेषु यथोक्तरूपेषु प्रशस्या व्यवहारतश्चत्वार एव मृदुलघुशीतोष्णरूपाः, ततः पञ्चसप्ततिशतं स्पर्शचतुष्टयेन गुण्यते, जातानि सप्तशतानि । उक्तं च––" मूलतयकट्ठनिज्जास, पत्तपुप्फफलमेयं गंधंगा । वण्णादुत्तरभेया, गंधंगसया मुणेयव्वा ॥ १ ॥ " अस्या व्याख्यानरूपं गाथाद्वयम्––" मुत्था सुवण्णच्छल्ली[३], अगुरु[३] वालो तमालपत्तं च । तह य पियंगू[६] जाईफलं च जाईए गंधंगा ॥ १ ॥ गुणणाए सत्तसया, पंचहि वण्णेहि सुरभिगंधेणं । रसपणगेणं

तह फासेहि य चउहिं पसत्येहिं ॥२॥ ” अत्र ‘ जाईए गधगा ’ इति जात्या—जातिभेदेनामूनि गन्धाङ्गानि, शेष भावितम् । ‘ कइ ण ’ इत्यादि, कति भदन्त ! पुष्पजातिकुलकोटिशतसहस्राणि प्रज्ञप्तानि ?, भगवानाह—गौतम ! षोडश पुष्पजातिकुल कोटिशतसहस्राणि प्रज्ञप्तानि, तद्यथा—चत्वारि जलजानां पद्मानां जातिभेदेन, चत्वारि स्थलजानां कोरण्टकादीनां जातिभेदेन, चत्वारि महागुल्मिकादीनां जात्यादीनाम्, चत्वारि महावृक्षाणां मधूकादीनामिति । ‘कइ ण’ इत्यादि, कति भदन्त ! वल्लय ? कति वल्लिशतानि प्रज्ञप्तानि ?, भगवानाह—गौतम ! चतस्रो वल्लयः स्रग्पुष्पादिमूलभेदेन, ताश्च मूलटीकाकृता वैविक्त्येन न व्याख्याता इति सम्प्रदायादवसेया', चत्वारि वल्लिशतान्येवान्तरजातिभेदेन । ‘कइ ण’ इत्यादि, कति भदन्त ! लताः कति लताशतानि प्रज्ञप्तानि ?, भगवानाह—गौतम ! अष्टौ लता नागलताद्या या मूलभेदेन ता अपि सम्प्रदायादवगन्तव्या मूलटीकाकारेणाव्याख्यानात्, अष्टौ लताशतानि प्रज्ञप्तानि अवान्तरजातिभेदेन । ‘कइ ण’ इत्यादि, कति भदन्त ! हरितकायाः कति हरितकायशतानि प्रज्ञप्तानि ? भगवानाह—गौतम ! त्रयो हरितकायाः प्रज्ञप्ता'—जलजाः स्थलजाः उभयजाः, एकैकस्मिन् शतमवान्तरभेदानामिति, त्रीणि हरितकायशतानि । ‘ फलसहस्स च ’ इत्यादि, फलसहस्र च वृन्तबद्धानां वृन्ताक प्रभृतीनां, फुलसहस्र च नालबद्धानाम्, ‘ते वि सव्वे’ इत्यादि, तेऽपि सर्वे भेदाः, अपिशब्दादन्येऽपि तथाविधा हरितकायमेव समवतरन्ति, हरितकायेऽन्तर्भवन्ति, हरितकायोऽपि वनस्पतौ, वनस्पतिरपि स्थावरेषु, स्थावरा अपि जीवेषु । तत एव समनुगम्यमानाः समनुगम्यमानाः तथा जात्यन्तर्भावेन स्वत एव सूत्रतः, तथा समनुग्राह्यमानाः २ परेण सूत्रत एव, तथा समनुप्रेक्ष्यमाणा २ अनुप्रेक्षया—अर्थालोचनरूपया, तथा समनुचिन्त्यमाना'२ तथा तथा तन्त्रयुक्तिभिरेतयोरेव द्वयो काययोः समवतरन्ति,

तद्यथा–त्रसकाये च स्थावरकाये च, ' एवामेव ' इत्यादि, एवमेव उक्तेनैव प्रकारेण 'सपुव्वावरेणं' ति, पूर्वं चापरं च पूर्वापरं सह पूर्वापरं येन स सपूर्वापर उक्तप्रकारस्तेन उक्तविषयपूर्वापरपर्यालोचनयेति भावार्थः। 'आजीवगदिट्ठंतेणं' ति, आ–सकलजगदभिव्याप्त्या जीवानां यो दृष्टान्तः–परिच्छेदः स आजीवदृष्टान्तस्तेन सकलजीवनिदर्शनेनेत्यर्थः, आह च मूलटीकाकारः— आजीवकदृष्टान्तेन सकलजीवनिदर्शनेने ' ति चतुरशीतिजातिकुलकोटियोनिप्रमुखशतसहस्राणि भवन्तीत्याख्यातं मया अन्यैश्च ऋषभादिभिरिति। अत्र चतुरशीतिसङ्ख्योपादानमुपलक्षणं, तेनान्यान्यपि जातिकुलकोटियोनिप्रमुखशतसहस्राणि वेदितव्यानि, तथा हि–पक्षिणां द्वादशजातिकुलकोटियोनिप्रमुखशतसहस्राणि, भुजगपरिसर्पाणां नव, उरगपरिसर्पाणां दश, चतुष्पदानां दश, जलचराणामर्द्धत्रयोदशानि, चतुरिन्द्रियाणां नव, त्रीन्द्रियाणामष्टौ, द्वीन्द्रियाणां सप्त, पुष्पजातीनां षोडश। एतेषां चैकत्र मीलने त्रिनवतिर्जातिकुलकोटियोनिप्रमुखशतसहस्राणि सार्द्धानि भवन्ति, ततश्चतुरशीतिसङ्ख्योपादानमुपलक्षणमवसेयं, न चैतद्व्याख्यानं स्वमनीषिकाविजृंभितम्, यत उक्तं चूर्णौ ' आजीवगदिट्ठंतेणं ' ति, अशेषजीवनिदर्शनेन चउरासीजातिकुलकोटियोनिप्रमुखशतसहस्रा एतत्प्रमुखा अन्येऽपि विद्यन्ते । इति श्रीजीवाभिगमसूत्रवृत्तितृतीयप्रतिपत्तौ तिर्यगधिकारे प्रथमोद्देशके २६४ प्रतौ ८० पत्रे ॥ ३ ॥

केचित्त मिथ्यात्विकृतानि सर्वसत्त्वमैत्रीसत्यभाषणपरद्रव्यानपहारसुशीलादिरूपाणि मार्गानुसारिधर्मकर्त्तव्यान्यपि निष्फलान्येव इत्याहुः तच्चाज्ञानविलसितं वेदितव्यम्, यतो व्यन्तरदेवाः प्राग्जन्मकृतानां सुचीर्णानां सुचरितानां शुभफलानां सकलसत्त्वमैत्रीसत्यभाषणपरद्रव्यानपहारसुशीलादिकर्मणां फलमनुभवन्तीति सिद्धान्तेऽभिहितम्, ते च प्राग्जन्मनि मिथ्या-

दश एव, सम्यग्दृशां विमानपर्जाधुर्वन्याभावात्, सिद्धान्तश्चायम्—

तत्थ ण बहवे वाणमंतरा देवा देवीओ य आसयंति सयंति चिट्ठंति णिसीदन्ति तुयट्टंति रमंति ललंति कीलंति मोहंति पुरापोराणाणं सुचिण्णाणं सुपरिक्कंताणं सुभाणं कल्लाणाणं कडाणं कम्माणं फलवित्तिविसेसं पच्चणुब्भवमाणा विहरंति ॥ इति । वृत्तिर्यथा—' तत्थ ' इति तत्र तेषु उत्पादपर्वतादिगतहंसासनादिषु यावन्नानारूपसंस्थानसंस्थितपृथिवीशिलापटकेषु ' ण ' इति पूर्ववत् बहवो वानमन्तरा देवा देव्यश्च यथासुखमासते शेरते–दीर्घकायप्रसारणेन वर्त्तन्ते न तु निद्रां कुर्वन्ति तेषु देवयोनिकतया निद्राऽभावात्, तिष्ठन्ति–ऊर्ध्वस्थानेन वर्त्तन्ते, निषीदन्ति–उपविशन्ति, 'तुयट्टंति' इति त्वग्वर्त्तनं कुर्वन्ति–वामपार्श्वत परावृत्य दक्षिणपार्श्वेन तिष्ठन्ति दक्षिणपार्श्वतो वा परावृत्य वामपार्श्वेनावतिष्ठन्ते, रमन्ते–रतिमाबध्नन्ति, ललन्ति–मनईप्सितं यथा भवति तथा वर्त्तन्ते इति भावः, क्रीडन्ति–यथासुखमितस्ततो गमनविनोदेन गीतनृत्यादिविनोदेन वा तिष्ठन्ति, मोहन्ति–मैथुनसेवां कुर्वन्ति इत्येवम्, ' पुरा पोराणाणं ' इत्यादि, पुरा–पूर्वं प्राग्भवे इति भाव । कृतानां कर्मणामिति योगः । अत एव पौराणानां सुचीर्णानां–सुचरितानामिह सुचरितजनितं कर्मापि कार्ये कारणोपचारात्सुचरितमिति विवक्षितम् , ततोऽयं भावार्थः–विशिष्टतथाविधधर्मानुष्ठानविषयाप्रमादकरणक्षान्त्यादिषु सुचरितानामिति, तथा सुपराक्रान्तानामत्रापि कारणे कार्योपचारात्सुपराक्रान्तजनितानि कर्माण्येव सुपराक्रान्तानि, इत्युक्तं भवति, सकलसत्त्वमैत्रीसत्यभाषणपरद्रव्यानपहारसुशीलादिरूपसुपराक्रमजनितानामिति, अत एव शुभानां शुभफलानां, इह किञ्चिदशुभफलमपि इन्द्रियमतिविपर्यासात् शुभफलमाभाति ततस्तात्त्विकशुभत्वप्रतिपत्त्यर्थमस्यैव पर्यायशब्दमाह—कल्याणानां–तत्त्ववृत्त्या तथाविध-

विशिष्टफलदायिनां, अथवा कल्याणानां—अनर्थोपशमकारिणां कल्याणरूपं फलविपाकं 'पच्चणुभवमाणा' प्रत्येकमनुभवन्तो विहरन्ति—आसते । इति श्रीजीवाभिगमसूत्रवृत्तौ तृतीयप्रतिपत्तिमन्दरोद्देशके ॥ ४ ॥

प्रतिमार्चनव्यामोहनिराकरणाय हिताय सुखाय क्षमाय निःश्रेयसाय आनुगामिकतायै भविष्यतीति कृत्वा यथा विजयदेवेन सविस्तरं प्रतिमापूजिता तथा लिख्यते—

तते णं से विजए देवे चउहिं सामाणियसाहस्सीहिं जाव अण्णेहि य बहूहिं वाणमंतरेहिं देवेहि य देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए सव्वज्जुत्तीए जाव णिग्घोसणाइयरवेणं जेणेव सिद्धायतणे तेणेव उवागच्छति उवागच्छित्ता सिद्धाययणं अणुप्पयाहिणीकरेमाणे २ पुरत्थिमिल्लेणं दारेणं अणुपविसति अणुपविसित्ता जेणेव देवच्छंदए तेणेव उवागच्छति उवागच्छित्ता आलोए जिणपडिमाणं पणामं करेति २ त्ता लोमहत्थगं गेण्हति लोमहत्थगं गेण्हित्ता जिणपडिमाओ लोमहत्थएणं पमज्जति २ त्ता सुरभिणा गंधोदएणं न्हाणेति, सुरभिगंधोदएणं न्हाणेत्ता दिव्वाए सुरभीए गंधकासाईए गाताइं लूहेति. गाताइं लूहेत्ता सरसेणं गोसीसचंदणेणं गाताइं अणुलिंपइ अणुलिंपेत्ता जिणपडिमाणं अहयाइं सेताइं दिव्वाइं देवदूसजुयलाइं णियंसेति नियंसेत्ता अग्गेहिं वरेहि य गंधेहि य मल्लेहि य अच्चेति अच्चेत्ता पुप्फारुहणं गंधारुहणं मल्लारुहणं वण्णारुहणं चुण्णारुहणं आभरणारुहणं करेति करेत्ता आसत्तो सत्तविउलवट्टवग्घारितमल्लदामकलावं करेति करेत्ता अच्छेहिं सण्हेहिं सेएहिं रययामएहिं अच्छरसातन्दुलेहिं जिणपडिमाणं पुरओ अट्ठट्ठमंगलए आलिहति सोत्थियसिरिवच्छ जाव दप्पणे अट्ठट्ठमंगले आलिहति आलिहित्ता कयग्गाहग्गहितकरतलपब्भट्ठविप्पमुक्केणं दसद्धवण्णेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलितं करेति करेत्ता

चद्प्पभवइरवेरुलियविमलदंड कंचनमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुयंत वेरुलियामयं कडुच्छयं पग्गहित्तु पयत्तेण धूवं दाऊण जिणवराणं अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं संथुणइ संथुणित्ता सत्तट्ठपयाइं ओसरति सत्तट्ठपयाइं ओसरित्ता वामं जाणुं अंचेइ अंचेत्ता दाहिणं जाणुं धरणितलंसि निवाडेइ तिक्खुत्तो मुद्धाणं धरणितलंसि णमेइ नमित्ता ईसिं पच्चुण्णमइ पच्चुण्णमित्ता कडयतुडियथंभियाओ भुयाओ पडिसाहरति पडिसाहरित्ता करतलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोत्थु णं। इति। वृत्तिर्यथा—ततः स विजयो देवश्चतुर्भिः सामानिकसहस्रैश्चतसृभिः सपरिवाराभिरग्रमहिषीभिः तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभिः षोडशभिरात्मरक्षकदेवसहस्रैः अन्यैश्च बहुभिर्विजयराजधानीवास्तव्यैर्वानमन्तरैर्देवैः देवीभिश्च सार्द्धं संपरिवृत सर्वर्द्ध्या, ' जाव निग्घोसनादितरवेणं ' ति यावत्करणादेव परिपूर्णः पाठो द्रष्टव्यः—" सव्वजुईए, सव्वबलेणं सव्वसमुदएणं सव्वविभूईए सव्वसंभमेणं, सव्वपुप्फगंधमल्लालंकारेणं सव्वतुडियसद्दनिनाएणं महया इड्ढीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडियजमगसमगपडुप्पवाइयरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कदुन्दुभिनिग्घोसनादितरवेणं "। अस्य व्याख्या प्राग्वत्। यत्रैव सिद्धायतनं तत्रैवोपागच्छति उपागत्य सिद्धायतनमनुप्रदक्षिणीकुर्वन् पूर्वद्वारेण प्रविशति प्रविश्यालोके जिनप्रतिमानां प्रणामं करोति, कृत्वा यत्रैव मणिपीठिका यत्रैव देवच्छन्दको यत्रैव जिनप्रतिमास्तत्रैवोपागच्छति उपागत्य लोमहस्तकं परामृशति परामृश्य च जिनप्रतिमाः प्रमार्जयति प्रमार्ज्य दिव्ययोदकधारया स्नपयति स्नपयित्वा सरसेनार्द्रेण गोशीर्षचन्दनेन गात्राण्यनुलिम्पति अनुलिप्य अहतानि अपरिमलितानि दिव्यानि देवदूष्य-

युगलानि 'नियंसेइ' इति परिधापयति, परिधाप्याग्रैरभुक्तैर्वरैः प्रधानैर्गन्धैर्माल्यैश्चार्चयति। एतदेव सविस्तरमुपदर्शयति—पुष्पारोपणं माल्यारोपणं वर्णकारोपणं चूर्णारोपणं गन्धारोपणं आभरणारोपणं (च) करोति, कृत्वा तासां जिनप्रतिमानां पुरतोऽच्छैः-स्वच्छैःश्लक्ष्णैः-मसृणै रजतमयैः, अच्छो रसो येषां ते अच्छरसाः प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्मला इति भावः, ते च ते तन्दुलाश्च अच्छरसतन्दुलाः पूर्वपदस्य दीर्घान्तता प्राकृतत्वात्। यथा 'वइरामया नेमा' इत्यादौ, देवाः तैरष्टावष्टौ स्वस्तिकादीनि मङ्गलकान्यालिखति, आलिख्य 'कयग्गाहग्गहीयं' इत्यादि, मैथुनप्रथमसंरम्भे मुखचुम्बनाद्यर्थं युवत्याः पञ्चाङ्गुलिभिः केशेषु ग्रहणं कचग्राहस्तेन कचग्राहेण गृहीतं करतलाद्विमुक्तं सत् प्रभ्रष्टं करतलप्रभ्रष्टविमुक्तम्, प्राकृतत्वात्पदव्यत्ययः, तेन दशार्द्धवर्णेन-पञ्चवर्णेन कुसुमेन कुसुमसमूहेन पुष्पपुञ्जोपचारकलितं, पुष्पपुञ्ज एव उपचारः पुष्पपुञ्जोपचारः तेन कलितं-युक्तं करोति कृत्वा च 'चंदप्पभवइरवेरुलियविमलदंडं' चन्द्रप्रभवज्रवैडूर्यमयो विमलो दण्डो यस्य सः तथा तं काञ्चनमणिरत्नभक्तिचित्रं कालागुरुप्रवरकुन्दुरुकतुरुष्कधूपेन गन्धोत्तमेनानुविद्धा कालागुरुप्रवरकुन्दुरुकतुरुष्कधूपगन्धोत्तमानुविद्धा, प्राकृतत्वात्पदव्यत्ययः, तां धूपवर्ति विनिर्मुञ्चन्तं वैडूर्यमयं धूपकडुच्छुकं प्रगृह्य प्रयतो धूपघटीतो धूपं दत्त्वा जिनवरेभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, सप्ताष्टानि पदानि पश्चादपसृत्य दशाङ्गुलिमञ्जलिं मस्तके कृत्वा प्रयतः 'अट्ठसयविसुद्धगंथजुत्तेहिं' ति। विशुद्धो-निर्मलो लक्षणदोषरहित इति भावः, यो ग्रन्थः-शब्दसन्दर्भस्तेन युक्तानि विशुद्धग्रन्थयुक्तानि अष्टशतं च तानि विशुद्धग्रन्थयुक्तानि च तैरर्थयुक्तैरर्थसारैरपुनरुक्तैर्महावृत्तैस्तथाविधदेवलब्धैः प्रभावः एषः, संस्तौति संस्तुत्य वामं जानुमञ्चति-उत्पाटयति दक्षिणं जानुं धरणितले 'निवाडेइ' इति निपातयति लगयतीत्यर्थः, त्रिकृत्वः-त्रीन् वारान् मूर्द्धानं धरणितले

नमयति नमयित्वा च ईषत्प्रत्युन्नमयति, ईषत्प्रत्युन्नम्य कनकत्रुटितस्तम्भितौ भुजौ ' संहरति ' सङ्कोचयति, संहृत्य करतलपरिगृहीत शिरस्यावर्त्तं मस्तकेऽञ्जलिं कृत्वैवमवादीत्–' नमोत्थु णं ' इत्यादि। इति श्रीजीवाभिगमसूत्रवृत्तितृतीयप्रतिपत्तिमन्दरोद्देशके ३१३ प्रतौ १७२।पत्रे ॥ ५ ॥

केचिच्चाज्ञानिनो विद्याचारणादिलब्धिमतः श्रमणान् लब्ध्युपजीविनः प्रमादिनो न किञ्चिदेते इत्यादिभिर्वचनैः प्रतिमावन्दनवैरेण निन्दन्ति, तच्च तेषामनन्तसंसारकारणम्, यतस्ते हि महानुभागाः सुतरां नमस्याः यदेतेषां प्रभावेण लवणसमुद्रो जम्बूद्वीपं नावपीडयति। तथा च सिद्धान्तः—

कम्हा णं भंते! लवणसमुद्दे जंबुद्दीवं दीवं नो उवीलेइ? नो उप्पीलेइ? नो चेव णं एक्कोदगं करेइ? गोयमा! जंबुद्दीवेणं दीवे भरहेरवएसु वासेसु अरिहंतचक्कवट्टिबलदेवा वासुदेवा चारणा विज्जाहरा समणा समणीओ सावया सावियाओ मणुया पगइभद्दया पगइविणीया पगइउवसंता पगइपयणुकोहमाणमायालोभा मिउमद्दवसंपण्णा अल्लीणा भद्दगा विणीया, तेसिं णं पणिहाते लवणसमुद्दे जंबुद्दीवं दीवं नो उव्वीलेइ नो चेव णं एक्कोदगं करेइ इति। वृत्तिर्यथा—' कम्हा णं ' इत्यादि, कस्माद् भदन्त! लवणसमुद्रो जम्बूद्वीपं द्वीपं नावपीडयति–जलेन न प्लावयति? नोत्पीडयति–प्राबल्येन न बाधते?, 'णं' इति वाक्यालङ्कृतौ, एकोदकं–सर्वात्मना उदकप्लावितं न करोति?, भगवानाह—गौतम! जम्बूद्वीपे–भरतैरावतयोः क्षेत्रयोरर्हन्तश्चक्रवर्त्तिनो बलदेवा वासुदेवाः चारणा–जङ्घाचारणमुनयो विद्याधराः श्रमणा–साधवः श्रमण्यः–संयत्यः श्रावकाः श्राविका एतत्सुषमदुष्षमाद्यारकत्रयवर्त्तिनमपेक्ष्योक्तं वेदितव्यम्, तत्रैवार्हदादीनां यथायोगं सम्भवात् सुषमसुषमादिकमधिकृ-

त्याह—मनुष्याः प्रकृतिभद्रकाः प्रकृतिप्रतनुक्रोधमानमायालोभाः मृदुमार्दवसम्पन्नाः आलीना भद्रका विनीताः, एतेषां व्याख्यानं प्राग्वत्, तेषां प्रणिधया प्रणिधानं प्रणिधा 'उपसर्गादात' इत्यङ्प्रत्ययः तान् प्रणिधाय—अपेक्ष्य तेषां प्रभावत इत्यर्थः । लवणसमुद्रो जंबूद्वीपं द्वीपं नावपीडयतीत्यादि, दुष्पमदुष्पमादावपि नावपीडयति, भरतैरावतवैताढ्याधिपतिदेवता प्रभावात्, तथा क्षुल्लहिमवच्छिखरिणोर्वर्षधरपर्वतयोर्देवता महर्द्धिका, यावत्करणान्महाद्युतिका इत्यादिपरिग्रहः परिवसन्ति तेषां प्रणिधया—प्रभावेन लवणसमुद्रो जंबूद्वीपं द्वीपं नावपीडयतीत्यादि तथा हैमवतैरण्यवतोर्वर्षयोर्मनुजाः प्रकृतिभद्रका यावद्विनीतास्तेषां प्रणिधयेत्यादि पूर्ववत्, तथा तयोरेव वर्षयोर्यथाक्रमं शब्दापातिविकटापाती वृत्तवैताढ्यौ पर्वतौ तयोर्देवौ महर्द्धिकौ यावत्पल्योपमस्थितिकौ परिवसतस्तेषां प्रणिधयेत्यादि पूर्ववत्, तथा महाहिमवद्रुक्मिवर्षधरपर्वतयोर्देवता महर्द्धिका इत्यादि तथैव, तथा हरिवर्षरम्यकवर्षयोर्मनुजाः प्रकृतिभद्रका इत्यादि सर्वं हैमवतवत्, तथा तयोः क्षेत्रयोर्यथाक्रमं गन्धापातिमाल्यवत्पर्यायौ यौ वृत्तवैताढ्यपर्वतौ तयोर्देवौ महर्द्धिकावित्यादि पूर्ववत्, तथा पूर्वविदेहापरविदेहवर्षयोरर्हन्तश्चक्रवर्त्तिनो यावन्मनुजाः प्रकृतिभद्रका यावद्विनीतास्तेषां प्रणिधयेत्यादि पूर्ववत्, तथा देवकुरूत्तरकुरुषु मनुजाः प्रकृतिभद्रका यावद्विनीतास्तेषां प्रणिधयेत्यादि पूर्ववत्, तथा उत्तरकुरुषु जम्ब्वां सुदर्शनायामनाद्दतो नामदेवो जंबूद्वीपाधिपतिः परिवसति तस्य प्रणिधया—प्रभावेनेत्यादि । इति श्रीजीवाभिगमतृतीयप्रतिपत्तिमन्दरोद्देशके २६४ प्रतौ १८५ पत्रे ॥ ६ ॥

चातुर्मासिकसांव्वत्सरिकपर्वदिनानि देवानामपि सुतरां मान्यानीत्यभिप्रायो लिख्यते—

सेसं तहेव जाव सिद्धायतणा सव्वा ते चिय वसणा णायव्वा । तत्थ णं बहवे भवणवइवाणमंतरजोइसियवेमाणिया

देवा चाउम्मासियपडिवएसु संवच्छरेसु य अण्णेसु बहूसु जिणजम्मणनिक्खमणणाणुप्पायपरिणिव्वाणमादिएसु य देवकज्जेसु य देवसमुदएसु य देवसमितीसु य देवसमवाएसु य देवपओयणेसु य एगतओ सहिया समुवागया समाणा पमुइयपक्कीलिया अट्ठाहियारूवाओ महामहिमाओ करेमाणा पालेमाणे सुहंसुहेणं विहरन्ति ॥ इति वृत्तिर्यथा—'तत्थ णं' इत्यादि, तत्र तेषु सिद्धायतनेषु 'णं' इति पूर्ववत्, बहवो भवनपतिव्यन्तरज्योतिष्कवैमानिका देवाश्चातुर्मासिकेषु पर्युषणायामन्येषु च बहुषु जिनजन्मनिष्क्रमणज्ञानोत्पादपरिनिर्वाणादिषु देवकार्येषु देवसमितिषु, एतदेव पर्यायद्वयेन व्याचष्टे-देवसमवायेषु-देवसमुदायेषु आगताः प्रमुदितप्रक्रीडिता अष्टाहिकारूपा महामहिमाः कुर्वन्तः सुखसुखेन विहरन्ति-आसते। इति श्रीजीवाभिगमतृतीयप्रतिपत्तिज्योतिष्कोद्देशके २६४ प्रतौ २०७ पत्रे ॥ ७ ॥

अत्र मनुष्यलोके मनुष्याणां यथा गृहाद्बहिर्गमनाय समीचीनः सालङ्कारो वेषो भवति गृहे तु सामान्य एव, तथा देवानामपि यानि केनचित्प्रयोजनेन विकुर्वितानि शरीराणि तानि सालङ्काराणि साभरणानि, यानि तु भवधारणीयानि (तानि) तु विभूषया प्रकृतिस्थानीत्यभिप्रायो लिख्यते—

सोहम्मीसाणा देवा केरिसया विभूसाए पण्णत्ता ? गोयमा ! दुविहा पण्णत्ता, तं जहा—'वेउव्वियसरीरा य अवेउव्वियसरीरा य, तत्थ णं जे ते वेउव्वियसरीरा ते हारविराइयवच्छा जाव दसदिसाओ उज्जोवेमाणा पभासेमाणा जाव पडिरूवा, तत्थ णं जे ते अवेउव्वियसरीरा ते आभरणवसणरहिया पगतित्था विभूसाए पण्णत्ता ॥ इति। वृत्तिर्यथा—'सोहम्मीसाणा' इत्यादि, सौधर्मेशानयोर्भदन्त ! कल्पयोर्देवानां शरीरकाणि कीदृशानि विभूषया प्रज्ञप्तानि ? भगवानाह—गौतम ! द्विविधानि शरी-

रकाणि प्रज्ञप्तानि, तद्यथा—भवधारणीयानि उत्तरवैक्रियाणि च, तत्र यानि तानि भवधारणीयानि शरीराणि तानि आभरणवसनरहितानि प्रकृतिस्थानि विभूषया प्रज्ञप्तानि, स्वाभाविक्येव तेषां विभूषा नौपाधिकीति भावः। तत्र यानि तानि उत्तरवैक्रियाणि शरीराणि तानि 'हारविराइयवच्छा' इत्यादि, पूर्वोक्तं तावद्वक्तव्यं यावत् 'दसदिसाओ उज्जोवेमाणा पभासेमाणा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा विभूसाए पण्णत्ता' अस्य व्याख्या प्राग्वत्। इति श्रीजीवाभिगमचतुर्थप्रतिपत्तौ ज्योतिष्कोद्देशके ॥७॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे जीवाभिगमविचारनामा तृतीयस्तरङ्गः ॥ ३ ॥

अनन्यसामान्यसुवर्णपूर्णं, सतां मनःकामितदं च तूर्णम्। भूयिष्ठरत्नं किल सप्रयत्नं, श्रीजैनसिद्धान्तनिधिं श्रयध्वम् ॥१॥

अथ प्रज्ञापनाविचारा लिख्यन्ते- तत्र निंबाम्रादिवृक्षाणां मूलपत्रादीनि यथा यावत्प्राणिप्रतिबद्धानि तथा लिख्यन्ते

णिंबंबजंबुकोसब—सालअंकोल्ल पीलु सेलू य। सल्लइमोयइमालुय, बउल पलासे करंजे य ॥ १ ॥ पुत्तंजीवयऽरिट्ठे, बिहेलए हरिडए य भिल्लाए। उंबेभरिया खीरिणि, बोधव्वे धायइ पियाले ॥ २ ॥ पूइयनिंबकरंजे, सण्हा तह सीसवा य असणे य। पुन्नागनागरुक्खे, सीवन्नि तहा असोए य ॥ ३ ॥ जे यावन्ने तहप्पगारा, एएसि णं मूलावि असंखेज्जजीविया कंदावि खंदावि तयावि सालावि पवालावि पत्ता पत्तेयजीविया पुप्फा अणेगजीविया फला एगट्ठिया से तं एगट्ठिया ॥ इति। वृत्तिर्यथा—' निंब ' इत्यादिगाथात्रयम्। तत्र निंबाम्रजंबूकोशाम्बाः—प्रतीताः, शालः—सर्जः, 'अंकोल्ल' ति अङ्कोठः, प्राकु-

तत्वाच्च सूत्रे ठकारस्य लादेशः, 'अङ्कोठे ल्लः' (८-१-२००) इति वचनात्, पीलुः-प्रतीतः शेलुः-श्लेष्मातकः सल्लकी-गजप्रिया मोचकीमालुकौ च देशविशेषप्रतीतौ बकुलः-केसरः पलासः-किंशुकः करञ्जो-नक्तमालः ॥१॥ पुत्रजीवको-गोपगिरौ प्रसिद्धः अरिष्टः-पिचुमन्दः बिभीतकः-अक्षः हरीतकः-कोङ्कणदेशप्रसिद्धः कषायनहुलः भल्लातको-भल्लातकाभिधानानि फलानि लोकप्रसिद्धानि उम्बेभरिकाक्षीरखीधातकीप्रियालपूति( निम्ब )करञ्जश्लक्ष्णाशिंशपाशनपुन्नागनागश्रीपर्ण्यशोका लोकप्रतीताः । 'जे यावन्ने तहप्पगारा' इति येऽपि चान्ये तथाप्रकाराः-एवंप्रकारास्तत्तद्देशविशेषभाविनः ते सर्वेऽपि एकास्थिका वेदितव्याः, एतेषां-एकास्थिकानां मूलान्यप्यसङ्ख्येयजीवकानि-असङ्ख्येयप्रत्येकशरीरजीवात्मकानि, एवं कन्दा अपि स्कन्धा अपि त्वचोऽपि शाखा अपि प्रवाला अपि प्रत्येकमसङ्ख्येयप्रत्येकशरीरजीवकाः, तत्र मूलानि-यानि कन्दस्याऽधस्ताद्भूमेरन्तः प्रसरन्ति, तेषामुपरि कन्दाः ते च लोकप्रतीताः, स्कन्धाः-स्थुडाः त्वचः-छल्ल्यः शालाः-शाखाः प्रवालाः-पल्लवाङ्कुराः, 'पत्ता पत्तेयजीविय' त्ति पत्राणि प्रत्येकजीवकानि-एकैकं पत्रमेकैकेन जीवेनाधिष्ठितमिति भावः, 'पुप्फा अणेगजीविय' त्ति पुष्पाण्यनेकजीवानि प्रायः प्रतिपुष्पपत्रं जीवभावात्, फलान्येकास्थिकानि । उपसंहारमाह—'से तं एगट्ठिया' सुगमम् । इति श्रीप्रज्ञापनाप्रथमपदसूत्रवृत्तौ ४०० प्रतौ २७ पत्रे ॥ १ ॥

केचिच्च जातिप्रभृतिपुष्पाणां सङ्ख्यातजीवत्वेऽपि प्रतिमापूजनभयोत्पादनाय सामान्यतः पुष्पाणामनन्तजीवत्वं वदन्तो जनान् विप्रतारयन्ति ते तु दुर्लभबोधिनो वेदितव्याः, पुष्पेषु सङ्ख्यासङ्ख्यानन्तजन्तुकृतो विवेकश्चायं सिद्धान्तोक्तः—

पुप्फा जलया थलया य, विंटबद्धा य णालबद्धा य । संखिज्जमसंखिज्जा, बोधव्वाणंतजीवा य ॥ ८२ ॥ जे केइ णालि-

थावद्धा, पुप्फा संखेज्जजीविया भणिया। णिहूया अणंतजीवा, जे यावन्ने तहाविहा ॥ ८३ ॥ वृत्तिर्यथा—'पुप्फा जलया' इत्यादि, पुष्पाणि चतुर्विधानि, तद्यथा—जलजानि–सहस्रपत्रादीनि स्थलजानि–कोरण्टकादीनि, एतान्यपि च प्रत्येकं द्विधा, तद्यथा—कानिचिद्वृन्तबद्धानि अतिमुक्तकप्रभृतीनि कानिचिन्नालबद्धानि जातिपुष्पप्रभृतीनि, अत्र एतेषां मध्ये कानिचित्पत्रादिगतजीवापेक्षया सङ्ख्येयजीवानि कानिचिदसङ्ख्येयजीवानि कानिचिदनन्तजीवानि, यथागमं बोद्धव्यानि ॥ ८२ ॥ अत्रैव कश्चिद्विशेषमाह—'जे केइ णालियाबद्धा' इत्यादि, यानि कानिचिन्नालिकाबद्धानि पुष्पाणि जात्यादिगतानि तानि सर्वाण्यपि सङ्ख्येयजीवकानि भणितानि तीर्थकरगणधरैः, स्निहूपुष्पं पुनरनन्तजीवम्, यान्यपि चान्यानि स्निहूपुष्पकल्पानि तान्यपि तथाविधानि–अनन्तजीवात्मकानि ज्ञातव्यानि ॥८३॥ इति श्रीप्रज्ञापनाप्रथमपदसूत्रवृत्तौ ४०० प्रतौ २८ पत्रे ॥ २ ॥

अथ पुष्पफलकालिङ्गफलादीनां वृन्तादीनि यावज्जीवात्मकानि भवन्ति तल्लिख्यते—

पुप्फफलं कालिंगं, तुंबं तउसेलवालुवालुकं। घोसाडयं पडोलं, तिंदूयं चेव तेंदूसं ॥ ९० ॥ विंटं मंसकडाहं, एयाइं हुंति एगजीवस्स। पत्तेयं पत्ताइं, सकेसरमकेसरं मिंजा ॥ ९१ ॥ वृत्तिर्यथा—पुष्पफलमेवं कालिङ्गं तुम्बं त्रपुषं 'एलवालु' त्ति चिर्भटविशेषरूपं वालुकं–चिर्भटम्। तथा घोषातकं पटोलं तेन्दुकं तिन्दूसं च वरफलम्, एतेषु प्रत्येकं 'विण्टं' वृन्तं 'मंसकडाहं' इति मांसं–गिरं तथा कटाहं, एतानि त्रीणि एकस्य जीवस्य भवन्ति एक जीवात्मकान्येतानि त्रीणि भवन्तीत्यर्थः। तथा एतेषामेव पुष्पफलादीनां तिन्दुक(स)पर्यन्तानां पत्राणि पृथक् 'प्रत्येकं' इति प्रत्येकशरीराधिष्ठितानि–एकैकजीवाधिष्ठितानीत्यर्थः। तथा सकेसरा अकेसरा वा मिञ्जा–बीजानि प्रत्येकमेकैकजीवाधिष्ठितानि ॥ ९०–९१ ॥ इति श्रीप्रज्ञापना-

प्रथमपदसूत्रवृत्ती ४०० प्रतो २६ पत्रे ॥ ३ ॥

अथ निगोदजीवा यथाऽऽहारान्नपानादिक गृह्णन्ति, यथा चैकस्मिन् शरीरेऽनन्तास्तिष्ठन्तो मृदुधिया प्रतीतिपथमवत रन्ति, यथा च तेषामानन्त्य सुखेन प्रतीयते तथा लिख्यते—

समय वक्कताण, समय तेसिं सरीरनिव्वत्ती । समय आणुग्गहण, समय ऊसासणीसासो ॥ १ ॥ एक्कस्स उ ज गहण, बहूण साहारणाण त चेव । ज बहुयाण गहण, समासओ तपि एगस्स ॥ २ ॥ साहारणमाहारो, साहारणआणुपाणगहण च । साहारणजीवाण, साहारणलक्खण एय ॥ ३ ॥ जह अयगोलो धतो, जाओ तत्ततवणिज्जसकासो । सव्वो अगणिपरिणओ णिगोयजीवे तहा जाण ॥ ४ ॥ एकस्स दोन्ह तिन्ह व, सखिज्जाण व ण पासिउ सक्का । दीसति सरीराइ, णिगोयजीवाणणताण ॥ ५ ॥ लोगागासपएसे, णिगोयजीव ठवेहि इक्किक्क । एव मविज्जमाणा, हवति लोगा अणता उ ॥ ६ ॥

एतद्वृत्तिर्यथा—'समय' इत्यादि, 'समय' युगपद्व्युत्क्रान्ताना-उत्पन्नाना सता तेषां-साधारणजीवाना 'समय'-एककाल शरीरनिवृत्तिर्भवति, समक च गाणापानग्रहण-प्राणापानयोग्यपुद्गलोपादानम्, ततः समकम्-एककाल तदुत्तरकालभाविनाच्छ्वासनिश्वासौ ॥ १ ॥ तथा एकस्य यदाहारादिपुद्गलाना ग्रहण तदेव बहूनामपि साधारणजीवानामवसेयम्, किमुक्त भवति ? यदाहारादिकमेको गृह्णाति शेषा अपि तच्छरीराश्रिता बहवोऽपि तदेव गृह्णन्तीति, तथा च यद् बहूनां ग्रहण तत्सङ्क्षेपादेकत्र शरीरे समावेशादेकस्यापि ग्रहणम् ॥२॥ सम्प्रत्युक्तार्थोपसहारमाह—'साहारण' इत्यादि, सर्वेषामप्येकशरीराश्रिताना जीवानामुक्तप्रकारेण यत्साधारण-साधारणः, सूत्रे नपुसकतानिर्देशः आर्षत्वात्, आहार -आहारयोग्यपुद्गलोपादानम्,

यच्च साधारणं प्राणापानयोग्यपुद्गलोपादानमुपलक्षणमेतत् यौ साधारणावुच्छ्वासनिःश्वासौ या च साधारणा शरीरनिर्वृत्तिः एतत्साधारणजीवानां लक्षणम् ॥ ३ ॥ सम्प्रति यथैकस्मिन्निगोदशरीरेऽनन्ता जीवाः परिणताः प्रतीतिपथमवतरन्ति तथा प्रतिपादयन्नाह–' जह अयगोलो ' इत्यादि, यथा अयोगोलो ध्मातः सन् तप्ततपनीयसङ्काशः सर्वोऽग्निपरिणतो भवति तथा निगोदजीवान् जानीहि, निगोदरूपेऽप्येकैकस्मिन् शरीरे तच्छरीरात्मकतयाऽनन्तान् जीवान् परिणतान् जानीहि ॥ ४ ॥ एवं च सति—' एगस्स ' इत्यादि, एकस्य द्वयोस्त्रयाणां यावत्सङ्ख्येयानां, वा शब्दादसङ्ख्येयानां वा निगोदजीवानां शरीराणि द्रष्टुं न शक्यानि, कुतः इति चेत् ? उच्यते—अभावात्, न ह्येकादिजीवगृहीतानि अनन्तवनस्पतिशरीराणि सन्ति, अनन्तजीवपिण्डात्मकत्वात्तेषाम्, कथं तर्ह्युपलभ्यानि ? इत्यत आह–' दीसंति ' इत्यादि, दृश्यन्ते शरीराणि निगोदजीवानां–बादरनिगोदजीवानामनन्तानां न तु सूक्ष्मनिगोदजीवानाम्, तेषां शरीराणामनन्तजीवसङ्घातात्मकत्वेऽप्यनुपलभ्यस्वभावत्वात्, तथा सूक्ष्मपरिणामपरिणतत्वात्, अथ कथमेतदवसीयते निगोदरूपशरीरं नियमादनन्तजीनपरिणामाविर्भावितं भवतीति ? उच्यते–जिनवचनात्, तच्चेदम्—" गोला य असंखिज्जा, असंखनिगोअओ हवइ गोलो । एकेक्कंमि निगोए, अणंतजीवा मुणेयव्वा ॥ १ ॥ " ॥ ५ ॥ सम्प्रत्येतेषामेव निगोदजीवानां प्रमाणमभिधित्सुराह–' लोगागास ' इत्यादि, एकैकस्मिन् लोकाकाशप्रदेशे एकैकं निगोदजीवं स्थापय, एवमेकैकस्मिन् आकाशप्रदेशे एकैकजीवरचनया मीयमाना अनन्ता लोका–अनन्तलोकाकाशप्रदेशप्रमाणा निगोदजीवा भवन्ति ॥ ६ ॥ इति प्रज्ञापनाप्रथमपदवृत्तौ ४०० प्रतौ ३१ पत्रे ॥ ४ ॥

अत्र सूत्ररुचिबीजरुच्यधिगमरुचीनां स्वरूपं लिख्यते—

जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्तं । अंगेण बाहिरेण व, सो सुत्तरुइ त्ति नायव्वो ॥ १ ॥ एगपएणेगाइं,
पयाइं जो पसरई उ सम्मत्तं । उदएव्व तिल्लबिंदू, सो बीयरुइ त्ति नायव्वो ॥ २ ॥ सो होइ अभिगमरुई, सुयनाणं जस्स
अत्थओ दिट्ठं । एक्कारस अंगाइं, पइण्णगं दिट्ठिवाओ य ॥ ३ ॥ एतासां वृत्तिर्यथा—'जो सुत्त' इत्यादि, यः सूत्रम्-
अङ्गप्रविष्टमङ्गबाह्यं वाऽधीयानस्तेन श्रुतेनाङ्गप्रविष्टेनाङ्गबाह्येन वा सम्यक्त्वमवगाहते स सूत्ररुचिरिति ज्ञातव्यः । बीजरुचि-
माह—'एगपएणेगाइं' इत्यादि, एकेन पदेन प्रक्रमाज्जीवादीनामनेकानि पदानि प्राकृतत्वेन विभक्तिव्यत्ययादनेकेषु जीवा-
दिषु पदेषु यः सम्यक्त्वमिति धर्मधर्मिणोरभेदोपचारात्सम्यक्त्ववानात्मा प्रसरति तुशब्दोऽवधारणार्थः प्रसरत्येव, कथं ?
इत्याह—उदक इव तैलबिन्दुः, किमुक्तं भवति ? यथा—उदकैकदेशगतोऽपि तैलबिन्दुः समस्तमुदकमाक्रामति तथैकदेशोत्प-
न्नरुचिरप्यात्मा तथाविधक्षयोपशमभावादशेषेषु तत्त्वेषु रुचिमान् भवति स एवंविधो बीजरुचिरिति ज्ञातव्यः । अधिगमरु-
चिमाह—'सो होइ अहिगमरुई' इत्यादि, यस्य श्रुतज्ञानमर्थतो दृष्टमेकादशाङ्गानि, प्रकीर्णकमित्यत्र जातावेकवचनम्, ततोऽ-
यमर्थः—प्रकीर्णकानि—उत्तराध्ययनादीनि दृष्टिवादः, चशब्दादुपाङ्गानि च, स भवत्यधिगमरुचिरित्यादि । इति प्रज्ञापनाप्रथम-
पदवृत्तौ ४०० प्रतौ ४५ पत्रे ॥ ५ ॥

अथ गर्भजमनुष्यसङ्ख्या लिख्यते—

मणुस्साणं भंते ! केवइया ओरालियसरीरगा पन्नत्ता ? गोयमा ! दुविहा पन्नत्ता, तंजहा—बद्धेल्लगा य मुक्केल्लगा य,
तत्थ णं जे ते बद्धेल्लगा ते णं सिय संखेज्जा सिय असंखेज्जा, जहन्नपदे संखेज्जा संखेज्जाओ कोडाकोडीओ तिजमलपयस्स

उवरिं चउजमलपयस्स हिट्ठा, अहव णं छट्ठो वग्गो पंचमवग्गपडुप्पणो, अहव णं छन्नउइच्छेयणगदाई रासी । उक्कोसपए असंखेज्जा, असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो रूवपक्खित्तेहिं मणुस्सेहिं सेढी अवहीरति, तीसे सेढीए आगासखेत्तेहिं अवहारो मग्गिज्जइ असंखेज्जा असंखेज्जाहिं उस्सप्पिणिओसप्पिणिहिं कालतो, खेत्ततो अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पण्णं ॥ इति । वृत्तिर्यथा—मनुष्याणां बद्धान्यौदारिकशरीराणि स्यात्–कदाचित्सङ्ख्येयानि कदाचिदसङ्ख्येयानि, कोऽत्राभिप्रायः इति चेत् ? उच्यते–इह द्वये मनुष्या–गर्भव्युत्क्रान्तिकाः सम्मूर्च्छिमाश्च, तत्र गर्भव्युत्क्रान्तिकाः सदाऽवस्थायिनो, न स कश्चित्कालोऽस्ति यो गर्भव्युत्क्रान्तिकमनुष्यविरहितो भवति, सम्मूर्च्छिमाश्च कदाचिद्विद्यन्ते कदाचित् सर्वथा तेषामभावो भवति, तेषामुत्कर्षतोऽन्तर्मुहूर्त्तायुष्कत्वात्, उत्पत्त्यन्तरस्य चोत्कर्षतश्चतुर्विंशतिमुहूर्त्तप्रमाणत्वात्, ततो यदा सर्वथा सम्मूर्च्छिमा मनुष्या न विद्यन्ते किन्तु केवला गर्भव्युत्क्रान्तिका एव तिष्ठन्ति तदा स्यात्सङ्ख्येयाः, सङ्ख्येयानामेव गर्भव्युत्क्रान्तिकानां भावात्, महाशरीरत्वे प्रत्येकशरीरत्वे च सति परिमितक्षेत्रवर्त्तित्वात्, यदा तु सम्मूर्च्छिमास्तदाऽसङ्ख्येयाः सम्मूर्च्छिमानामुत्कर्षतः श्रेण्यसङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणत्वात्, तथा चाह—'जहन्नपदे संखेज्जा' इत्यादि, जघन्यपदं नाम यत्र सर्वस्तोका मनुष्याः प्राप्यन्ते, आह–किमत्र सम्मूर्च्छिमानां ग्रहणमुत गर्भव्युत्क्रान्तिकानाम् ? उच्यते—गर्भव्युत्क्रान्तिकानां तेषामेव सदाऽवस्थायितया सम्मूर्च्छिमविरहे सर्वस्तोकतया प्राप्यमाणत्वात्, उत्कृष्टपदे तूभयेषामपि ग्रहणम्, यदाह मूलटीकाकारः—"सेतराणां ग्रहणमुत्कृष्टपदे जघन्यपदे गर्भव्युत्क्रान्तिकानामेव केवलानां ग्रहण"मिति, अस्मिन् जघन्यपदे सङ्ख्येया मनुष्याः, तत्र सङ्ख्येयकं सङ्ख्येयभेदभिन्नमिति न ज्ञायते कियन्तस्ते ?

इति विशेष निर्द्धारयति सङ्ख्येयाः कोटीकोटाः, अथवा इदमन्यत् विशेषतर परिमाणम् ' तिजमलपयस्सुवरिं चउजमलपयस्स हेट्ठा ' इति, इह मनुष्यसङ्ख्याप्रतिपादकान्येकोनत्रिंशदङ्कस्थानानि वक्ष्यमाणानि, तत्र समयपरिभाषयाऽष्टानामष्टानामङ्कस्थानानां यमलपदमिति सञ्ज्ञा, चतुर्विंशत्या चाङ्कस्थानैस्त्रीणि यमलपदानि लब्धानि, उपरि पञ्चाङ्कस्थानानि तिष्ठन्ति, अथवा यमलपदमष्टभिरङ्कस्थानैस्ततश्चतुर्थं यमलपद न प्राप्यते तत उक्त त्रयाणा यमलपदानामुपरि पञ्चभिरङ्कस्थानैर्वर्द्धमानत्वात्, चतुर्थस्य च यमलपदस्याधस्तात्त्रिभिरङ्कस्थानैर्हीनत्वात् । अथवा द्वौ द्वौ वर्गा समुदितौ एक यमलपदम्, चत्वारो वर्गा समुदिता द्वे यमलपदे, षट् वर्गाः समुदितास्त्रीणि यमलपदानि, अष्टौ वर्गाः समुदिताश्चत्वारि यमलपदानि, तत्र यस्मात्षण्णां वर्गाणामुपरि वर्तन्ते सप्तमस्य च वर्गस्याधस्तात् तत उक्त त्रियमलपदस्योपरि चतुर्यमलपदस्याधस्तादिति, त्रियमलपदस्येति-तृतीयानां यमलपदानां समाहारस्त्रियमलपद तस्य, तथा चतुर्णां यमलपदाना समाहारश्चतुर्यमलपद, तस्य । सम्प्रति स्पष्टतर सङ्ख्यानमुपदर्शयति—' अहव ण छट्ठो वग्गो पचमवग्गपडुप्पणो ' इति, अथवेति-प्रकारान्तरे 'ण'मिति वाक्यालङ्कारे षष्ठो वर्ग पञ्चमवर्गेण प्रत्युत्पन्नो-गुणित' सन् यावान् भवति तावत्प्रमाणा जघन्यपदे मनुष्याः, तत्रैकस्य वर्ग एक एव स च वृद्धिं न गत इति वर्गो न गण्यते, द्वयोर्वर्गश्चत्वार एष प्रथमो वर्ग ४, चतुर्णां वर्गः षोडश एष द्वितीयो वर्गः १६, षोडशाना वर्गे द्वे शते षट्पञ्चाशदधिके एष तृतीयो वर्गः २५६, द्वयो' शतयोः षट्पञ्चाशदधिकयोर्वर्गः पञ्चषष्टिः सहस्राणि पञ्चशतानि षट्त्रिंशदधिकानि एष चतुर्थो वर्ग ६५५३६, एतस्य वर्गश्चत्वारि कोटिशतानि एकोनत्रिंशत्कोटयः एकोनपञ्चाशल्लक्षा सप्तषष्टि सहस्राणि द्वे शते षण्णवत्यधिके एष पञ्चमो वर्ग ४२९४९६७२९६, उक्तश्च

" चत्तारि य कोडिसया, अउणत्तीसं च हौंति कोडीओ । अउणावण्णं लक्खा, सत्तट्ठी चेव य सहस्सा ॥ १ ॥ दो य सया छण्णउया, पंचमवग्गो समासओ होइ । एयस्स कतो वग्गो, छट्ठो जो होइ तं वोच्छं ॥ २ ॥ " एतस्य पञ्चमस्य वर्गस्य यो वर्गः स षष्ठो वर्गस्तस्य परिमाणम्—एकं कोटीकोटीशतसहस्रं चतुरशीतिः कोटीकोटीसहस्राणि चत्वारि सप्तषष्ट्यधिकानि कोटीकोटीशतानि चतुश्चत्वारिंशत्कोटिलक्षाणि सप्तकोटीसहस्राणि त्रीणि सप्तत्याधिकानि कोटिशतानि पञ्चनवतिर्लक्षाः एकपञ्चाशत्सहस्राणि षट्शतानि षोडशोत्तराणि १८४४६७४४०७३७०९५५१६१६, एष षष्ठो वर्गः। उक्तं च—"लक्खं कोडाकोडी, चउरासीई भवे सहस्साइं । चत्तारि य सत्तट्ठा, हौंति सया कोडिकोडीणं ॥ १ ॥ चोयालं लक्खाइं, कोडीणं सत्त चेव य सहस्सा । तिण्णिसया सत्तयरी, कोडीणं हौंति नायव्वा ॥ २ ॥ पंचाणउई लक्खा, एकावण्णं भवे सहस्साइं । छस्सोलसुत्तरसया, एसो छट्ठो हवइ वग्गो ॥ ३ ॥ इति । एष षष्ठो वर्गः । पंचमवर्गेण गुण्यते गुणिते च सति यावान् राशिर्भवति तावत्प्रमाणा जघन्यपदे मनुष्याः, ते चैतावन्तो भवन्ति—७९२२८१६२५१४२६४३३७५९३५४३९५०३३६, एतान्येकोनत्रिंशदङ्कस्थानानि । एतानि च कोटाकोट्यादिद्वारेण कथमप्यभिधातुं न शक्यन्ते ततः पर्यन्तवर्त्तिनोऽङ्कस्थानादारभ्याङ्कस्थानसङ्ग्रहमात्रं पूर्वपुरुषप्रणीतेन गाथाद्वयेनाभिधीयते—छ त्तिण्णि तिण्णि सुण्णं, पंचेव य नव य तिण्णि चत्तारि । पंचेव तिण्णि नव पंच सत्त तिण्णेव तिण्णेव ॥ १ ॥ चउ छ दो चउ एक्को, पण दो छक्किक्को य अट्ठेव । दो दो णव सत्तेव य, ठाणाइं उवरि हुंताइं ॥ २ ॥ " अथवाऽयमङ्कस्थानप्रथमाक्षरसङ्ग्रहः " छ त्ति ति सु पं ण ति च पं, ति ण पं स ति ति च छ दो च ए । पं दो छ ए अ दो दु ण स, पढमक्खरसन्नियट्ठाणा ॥ १ ॥ " एतेषामेव एकोनत्रिंशदङ्कस्थानानां पूर्वपुरुषैः पूर्वाङ्गैः परिसङ्ख्यानं

क्त तदुपदर्श्यते—तत्र चतुरशीतिर्लक्षाणि पूर्वाङ्ग, चतुरशीतिर्लक्षाश्चतुरशीतिलक्षैर्गुण्यन्ते ततः पूर्वं भवति, तस्य परिमाणम्—सप्ततिः कोटिलक्षाणि षट्पंचाशत्कोटिसहस्राणि ७०५६००००००००००, एतेन भागो ह्रियते तत इदमागतम्—एकादश-पूर्वकोटीकोट्यो द्वाविंशतिः पूर्वकोटीलक्षाणि चतुरशीतिः पूर्वकोटीसहस्राणि अष्टादशोत्तराणि पूर्वकोटिशतानि, एकाशीतिः पूर्वलक्षाणि पञ्चनवतिः पूर्वसहस्राणि त्रीणि षट्पञ्चाशदधिकानि पूर्वशतानि, अत ऊर्ध्वं पूर्वैर्भागो न लभ्यते ततः पूर्वाङ्गैर्भाग-हरण, तत्रेदमागतम्—एकविंशति पूर्वाङ्गलक्षाणि सप्ततिः पूर्वाङ्गसहस्राणि षट् एकोनषष्ट्यधिकानि पूर्वाङ्गशतानि, तत ऊर्द्ध्वं चेदमन्यदुद्धरितमवतिष्ठते—त्र्यशीतिर्लक्षाणि पञ्चाशत्सहस्राणि त्रीणि शतानि षट्त्रिंशदधिकानि मनुष्याणामिति ११२२८४११८८१६५३५६। २१७०६५६। ८३५०३३६। तथा च पूर्वाचार्यप्रणीता अत्र गाथा—"मणुयाण जहण्णपदे, एक्कारसपुव्वकोडिकोडीओ। बावीसकोडिलक्खा, कोडिसहस्साइ चुलसीई ॥ १ ॥ अट्ठेव य कोडिसया, पुव्वाण दसुत्तरा तओ होंति। एकासीई लक्खा, पचाणउई सहस्साइ ॥ २ ॥ छप्पन्ना तिन्निसया, पुव्वाण पुव्ववण्णिया अण्णे। एत्तो पुव्वगाइ, इमाइ अहियाइ अण्णाइ ॥ ३ ॥ लक्खाइ एगवीस, पुव्वगाण सयरी सहस्साइ। छच्चेवेगूणट्ठा, पुव्वगाण सया होंति ॥ ४ ॥ तेसीइ सयसहस्सा, पण्णास खलु भवे सहस्साइ। तिन्नि सया छत्तीसा, एवइया अविगला मणुया ॥ ५ ॥ इति। इमामेव सङ्ख्यां विशेषोपलम्भनिमित्तं प्रकारान्तरेणाह—'अहव ण छन्नउइ च्छेयणगदाई रासी' इति, 'अहव ण' ति अन्यत् षण्णवतिच्छेदनकानि यो राशिर्ददाति स षण्णवतिच्छेदनकदायी राशिः, किमुक्तं भवति? यो राशिरर्द्धेनार्द्धेन छिद्यमानः षण्णवतिं वारान् छेदं सहते पर्यन्ते च सकलमेकं रूपं पर्यवसितं भवति स षण्णवतिच्छेदनकदायी राशिरिति, क

पुनरेवंविध इति चेत् ? उच्यते–एष एव षष्ठो वर्गः पञ्चमवर्गगुणितः, कोऽत्र प्रत्यय इति चेत् ? उच्यते–इह प्रथमवर्गश्छि-
द्यमानो द्वे छेदनके ददाति, तद्यथा–प्रथमच्छेदनकं द्वौ द्वितीयमेकमिति, द्वितीयो वर्गश्चत्वारि च्छेदनकानि, तत्र प्रथममष्टौ,
द्वितीयं चत्वारः तृतीयं द्वौ चतुर्थमेक इति । एवं तृतीयो वर्गोऽष्टौ छेदनकानि प्रयच्छति, चतुर्थः षोडश, पञ्चमो द्वात्रिंशतं
षष्ठश्चतुःषष्ठिं, स चैवं पञ्चमवर्गेण गुणितः षण्णवतिः, कथमेतदवसेयमिति चेत् ? उच्यते–इह यो यो वर्गो येन येन वर्गेण गुण्यते
तत्र तत्र तयोर्द्वयोरपि छेदनकानि प्राप्यन्ते, यथा–प्रथमवर्गेण गुणिते द्वितीयवर्गे षट्, तथाहि–द्वितीयो वर्गः षोडशलक्षणः
प्रथमवर्गेण चतुष्करूपेण गुण्यते जाता चतुःषष्टिः, तस्याः प्रथमं छेदनकं द्वात्रिंशत्, द्वितीयं षोडश, तृतीयमष्टौ, चतुर्थं
चत्वारः, पञ्चमं द्वौ, षष्ठमेक इति, एवमन्यत्रापि भावनीयम् । तत्र पञ्चमवर्गे द्वात्रिंशच्छेदनकानि, षष्ठे चतुःषष्टिः, ततः
पञ्चमवर्गेण षष्ठे वर्गे गुणिते षण्णवति छेदनकानि प्राप्यन्ते । अथवा एकं रूपं स्थापयित्वा ततः षण्णवतिवारान् द्विगुणद्वि-
गुणीक्रियते कृतं च सद्यदि तावत्प्रमाणो राशिर्भवति ततोऽवसातव्यमेष षण्णवतिच्छेदनकदायी राशिरिति । तदेवं जघन्यपद-
मभिहितं, इदानीमुत्कृष्टपदमाह–' उक्कोसपए असंखेज्जा ' इत्यादि, उत्कृष्टपदे ये मनुष्या भवन्ति तेऽसङ्ख्येयाः, तत्रापि कालतः
परिमाणचिन्तायां प्रति समयमेकैकमनुष्यापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतो रूपे प्रक्षिप्ते
मनुष्यैरेका श्रेणिः परिपूर्णाऽपह्रियते, किमुक्तं भवति ?–उत्कृष्टपदे ये मनुष्यास्तेषु मध्ये एकस्मिन्नसत्कल्पनया रूपे प्रक्षिप्ते
सकलाऽपि श्रेणिरेकाऽपह्रियते, तस्याश्च श्रेणेः क्षेत्रकालाभ्यामपहारमार्गणा कालतस्तावदसङ्ख्येयाभिरुत्सर्पिण्यवसर्पिणीभिः
क्षेत्रतोऽङ्गुलप्रथमवर्गमूलं तृतीयवर्गमूलप्रत्युत्पन्नम्, किमुक्तं भवति ?–अङ्गुलमात्रक्षेत्रप्रदेशराशिरसत्कल्पनया षट्पञ्चाशदधिक-

षोडशलक्षण ततस्तृतीयवर्गमूलेनासत्कल्पनया द्विकलक्षणेन गुण्यते, गुणिते च सति यावान् प्रदेशराशिर्भवति असत्कल्पनया द्वात्रिंशदेवायतप्रमाणं खण्डैरपह्रियमाणा यावत् श्रेणिर्निष्ठामियर्त्ति तावन्मनुष्या अपि निष्ठामुपयान्ति, आह–कथमेकस्याः श्रेणेर्यथोक्तप्रमाणैः खण्डैरपह्रियमाणाया असङ्ख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति ? उच्यते–क्षेत्रस्यातिसूक्ष्मत्वात्, उक्तं च सूत्रेऽपि " सुहुमो य होइ कालो, तत्तो सुहुमयरं हवइ खेत्तं । अंगुलसेढीमेत्ते, उसप्पिणिओ असंखिज्जा ॥ १ ॥ " इति प्रज्ञापनाद्वादशपदसूत्रवृत्तौ ४४० प्रतौ २१५ पत्रे ॥ ६ ॥

अथादर्शादौ स्वच्छे वस्तुनि यत्प्रतिबिम्बं दृश्यते तत्किमात्मकं ? इति निर्णयो लिख्यते—

अद्दायं पेहमाणे मणूसे किं अद्दायं पेहति अत्ताणं पेहइ पलिभागं पेहइ ? गोयमा ! अद्दायं पेहति नो अप्पाणं पेहति पलिभागं पेहति, एवं एतेणं अभिलावेणं असिं मणिं दुद्धं पाणिं तेल्लं फाणियं वसं ॥ इति ॥ वृत्तिर्यथा—' अद्दायं पेहमाणे ' इत्यादि, ' अद्दायं ' इति आदर्शं ' पेहमाणे ' इति प्रेक्ष्यमाणो मनुष्यः किमादर्शं प्रेक्षते आहोस्विदात्मानम् ? अनात्मशब्देन शरीरमभिगृह्यते, उत ' पलिभागं ' इति प्रतिभाग–प्रतिबिम्बम् ? भगवानाह–आदर्शं तावत्प्रेक्षत एव, तस्य स्फुटरूपस्य यथावस्थिततया तेनोपलम्भात्, आत्मानं–आत्मशरीरं पुनर्न पश्यति, तस्य तत्राभावात्, स्वशरीरं हि स्वात्मनि व्यवस्थितं नादर्शे, ततः कथमात्मशरीरं च तत्र पश्येदिति ? प्रतिभाग–स्वशरीरस्य प्रतिबिम्बं पश्यति । अथ किमात्मकं प्रतिबिम्बम् ? उच्यते–छायापुद्गलात्मकम्, तथा हि–सर्वमैन्द्रियकं वस्तु स्थूलं चयापचयधर्मकं रश्मिवच्च, रश्मय इति छायापुद्गला व्यवह्रियन्ते, ते च छायापुद्गलाः प्रत्यक्षत एव सिद्धाः, सर्वस्यापि स्थूलवस्तुनश्छाया अध्यक्षतः प्रतिप्राणिप्रतीतेः । अन्यच्च यदि

स्थूलवस्तु व्यवहिततया दूरस्थिततया वा नादर्शादिष्ववगाढरश्मिर्भवति, ततो न तत्र तत् दृश्यते तस्मादवसीयते सन्ति छायाः पुद्गला इति, ते च छायापुद्गलास्तत्तत्सामग्रीवशाद्विचित्रपरिणमनस्वभावाः, तथा हि—ते च छायापुद्गला दिवा वस्तुन्यभास्वरे प्रतिगताः सन्तः स्वसम्बन्धिद्रव्याकारमाबिभ्राणाः श्यामरूपतया परिणमन्ते निशि तु कृष्णाभाः. एतच्च प्रसरति दिवसे सूर्यकरनिकरे निशि तु चन्द्रोद्योते प्रत्यक्षत एव सिद्धम् । त एव छायापरमाणव आदर्शादिभास्वरद्रव्यप्रतिगताः सन्तः स्वसम्बन्धिद्रव्याकारमादधाना यादृग्वर्णः स्वसम्बन्धिनि द्रव्ये कृष्णो नीलः सितः पीतो वा तदाभाः परिणमन्ते, एतदप्यादर्शादिष्वध्यक्षतः सिद्धम्, ततोऽधिकृतसूत्रेऽपि ये मनुष्यस्य छायापरमाणव आदर्शमुपसङ्क्रम्य स्वदेहवर्णतया स्वदेहाकारतया च परिणमन्ते, तेषां तत्रोपलब्धिर्न शरीरस्य, ते च प्रतिबिम्बशब्दवाच्याः, अत उक्तं--न शरीरं पश्यति किं तु प्रतिभागमिति, न चैतत्स्वमनीषिकाविजृम्भितम्, यत उक्तमागमे—" सामा उ दिया छाया, अभासुरगता निसिं तु कालाभा । सा चेव भासुरगया, सदेहवण्णा मुणेयव्वा ॥ १ ॥ जे आदरिसस्सन्तो, देहावयवा हवंति संकंता। तेसिं तत्थुवलद्धी, पगासजोगा न इयरेसिं ॥ २ ॥ " मूलटीकाकारोऽप्याह—" यस्मात्सर्वमेव हि ऐन्द्रियकं स्थूलं द्रव्यं चयापचयधर्मकं रश्मिवच्च भवति, यतश्चादर्शादिषु छाया स्थूलस्य दृश्यतेऽवगाढरश्मिनः न चानवगाढरश्मिनः, ततः स्थूलद्रव्यस्य कस्यचिद्दर्शनं भवति न चान्तरितं दृश्यते किञ्चित् अतिदूरस्थं वा, अतः 'पलिभागं' प्रतिभागं 'पेहति' पश्यतीति" । एवमसिमण्यादिविषयाण्यपि षट्(सप्त)सूत्राणि भावनीयानि । सूत्रपाठोऽप्येवम् "अंसिं पेहमाणे मणूसे किं अंसिं पेहइ अत्ताणं पेहइ पलिभागं पेहइ ? गोयमा ! नो अंसिं पेहइ नो अप्पाणं पेहइ पलिभागं पेहइ । " इत्यादि । इति श्रीप्रज्ञापनापञ्चदशपदसूत्रवृत्तौ प्रथमोद्देशके ४०० प्रतौ ॥ ७ ॥

अथ यस्माद्दण्डकात्समागतस्तीर्थकरादित्वं लभते तल्लिख्यते—

रयणप्पभापुढवीनेरइए णं भंते ! रयणप्पभापुढवीनेरइएहिंतो अणंतरं उवट्टित्ता तित्थगरत्तं लभेज्जा ? गोयमा ! अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा, से केणट्ठेणं भंते ! एवं वुच्चति अत्थेगइए लभेज्जा अत्थेगइए णो लभेज्जा ? गोयमा ! जस्स णं रयणप्पभापुढवीनेरइयस्स तित्थगरनामगोयाइं कम्माइं बद्धाइं पुट्ठाइं निधत्ताइं कडाइं पट्ठवियाइं निविट्ठाइं अभिनिविट्ठाइं अभिसमण्णागयाइं उदिण्णाइं णो उवसंताइं भवंति, से णं रयणप्पभापुढवीनेरइए रयणप्पभापुढवीनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थगरत्तं लभेज्जा, जस्स णं रयणप्पभापुढवीनेरइयस्स तित्थगरणामगोयाइं णो बद्धाइं जाव णो उदिण्णाइं उवसंताइं भवंति से णं रयणप्पभापुढवीनेरइए रयणप्पभापुढवीनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थगरत्तं णो लभेज्जा, से तेणट्ठेणं गोयमा ! एवं वुच्चइ अत्थेगइए लभेज्जा, अत्थेगइए णो लभेज्जा । एवं सक्करप्पभा जाव वालुयप्पभापुढवीनेरइएहिंतो तित्थगरत्तं लभेज्जा । पंकप्पभापुढवीनेरइए णं भंते ! पंकप्पभापुढवीहिंतो अणंतरं उव्वट्टित्ता तित्थगरत्तं लभेज्जा ? गोयमा ! णो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा । धूमप्पभापुढवीनेरइए णं पुच्छा, गोयमा ! णो इणट्ठे समट्ठे सव्वविरतिं पुण लभेज्जा । तमप्पभापुढवी पुच्छा, गोयमा ! णो इणट्ठे समट्ठे विरयाविरइं पुण लभेज्जा । अहे सत्तमाए पुच्छा, गोयमा ! णो इणट्ठे समट्ठे सम्मत्तं पुण लभेज्जा । असुरकुमारस्स पुच्छा, गोयमा ! णो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा । एवं निरंतरं जाव आउकाइए । तेउकाइए णं भंते ! तेउकाइएहिंतो अणंतरं उव्वट्टित्ता उववज्जेज्जा ? गोयमा ! णो तिणट्ठे समट्ठे केवलिपन्नत्तं धम्मं लभेज्जा सवणयाए, एवं वाउकाइए वि । वणस्सतिकाइए णं पुच्छा, गोयमा ! णो तिणट्ठे समट्ठे अंतकिरियं पुण करेज्जा, बेइंदियतेइंदियचउरिंदिए णं पुच्छा, गोयमा ! णो तिणट्ठे समट्ठे मणप-

ज्ञवणाणं पुण उप्पाडेज्जा, पंचिंदियतिरिक्खजोणियमणुस्सवाणमंतरजोइसिए णं पुच्छा, गोयमा! णो तिणट्ठे समट्ठे अंतकिरियं पुण करेज्जा, सोहम्मगदेवे णं भंते! अणंतरं चयं चइत्ता तित्थगरत्तं लभेज्जा? गोयमा! अत्थेगइए लभेज्जा अत्थेगइए णो लभेज्जा, एवं जहा रयणप्पभापुढवीनेरइए एवं जाव सव्वट्ठसिद्धदेवे ॥ इति। वृत्तिर्यथा—'रयणप्पभापुढवीनेरइए णं भंते!' इत्यादि सुगमम्। नवरं बद्धानि-सूचीकलाप इव सूत्रेण प्रथमतो बद्धमात्राणि तदनन्तरं अग्निसंपर्कानन्तरं सकृत् घनकुट्टितसूचीकलापवत्स्पृष्टानि, निधत्तानि—उद्वर्त्तनापवर्त्तनावर्जशेषकरणायोग्यत्वेन व्यवस्थापितानीति भावार्थः, कृतानि-निकाचितानि सकलकरणायोग्यत्वेन व्यवस्थापितानीत्यर्थः, प्रस्थापितानि-मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्तिनामसहोदयत्वेन व्यवस्थापितानीति भावः, निविष्टानि-तीव्रानुभावजनकतया स्थितानि, अभिनिविष्टानि-विशिष्टविशिष्टतराध्यवसायभावतोऽतितीव्रतमानुभावजनकतया व्यवस्थितानि, अभिसमन्वागतानि-उदयाभिमुखीभूतानि, उदीर्णानि-विपाकोदयमागतानि, नोपशान्तानि-न सर्वथाऽभावमापन्नानि निकाचिताद्यवस्थोद्रेकरहितानि वा न भवन्ति, शेषं समस्तमपि कंठ्यम्। एवं शर्कराप्रभावालुकाप्रभाविषये अपि सूत्रे वक्तव्ये। पङ्कप्रभापृथिवीनैरयिकः ततोऽनन्तरमुध्धृतः तीर्थकरत्वं न लभते अन्ताक्रियां पुनः कुर्यात्, धूमप्रभापृथिवीनैरयिकोऽन्ताक्रियामपि न करोति सर्वविरतिं पुनर्लभते। तमःप्रभापृथिवीनैरयिकः सर्वविरतिमपि न लभते विरताविरतिं-देशविरतिं पुनर्लभते। अधःसप्तमपृथिवीनैरयिकस्तामपि देशविरतिं न लभते यदि परं सम्यक्त्वमात्रं लभते। असुरादयो यावद्वनस्पतिकाया अनन्तरमुध्धृतास्तीर्थकरत्वं न लभन्ते, अन्ताक्रियां पुनः कुर्युः, वसुदेवचरिते पुनर्नागकुमारेभ्योऽप्युध्धृतोऽनन्तरमैरावतक्षेत्रेऽस्यामेवावसर्पिण्यां चतुर्विंशतितमस्तीर्थकर उपदर्शितः,

तदत्र तत्त्व केवलिनो विदन्ति । तेजोवायवोऽनन्तरमुद्धृता अन्तक्रियामपि न कुर्वन्ति मनुष्येषु तेषामानन्तर्येणोत्पादाभावात्, अपि च ते तिर्यक्षूत्पन्ना केवलिप्रज्ञप्त धर्म श्रवणतया लभेरन्, न तु बोधत इत्युक्त प्राक् । वनस्पतिकायिका अनन्तरमुद्धृतास्तीर्थकरत्व न लभन्ते, अन्तक्रिया पुन कुर्युः । द्वित्रिचतुरिन्द्रिया अनन्तरमुद्धृतास्तामपि न कुर्वन्ति, मन पर्यवज्ञान पुनरुत्पादयेयु. । तिर्यक्पञ्चेन्द्रियमनुष्यव्यन्तरज्योतिष्का अनन्तरमुद्धृतास्तीर्थकरत्व न लभन्ते, अन्तक्रियां पुन कुर्युः । सौधर्मादय सर्वार्थसिद्धिपर्यवसाना (रत्नप्रभा) नैरयिकवद्वक्तव्या । इति प्रज्ञापनाया विंशतितमपदवृत्तौ ५२२ प्रतौ ३८० पत्रे ॥८॥

अथानतदेवस्य तैजसशरीरावगाहना यथाऽङ्गुलासङ्ख्येयभागप्रमाणमात्रा भवति, तथा लिख्यते—

आणयदेवस्स ण भंते ! मारणतियसमुग्घाएण समोहयस्स तेयासरीरस्स के महालिया सरीरोगाहणा पन्नत्ता ? गोयमा ! सरीरप्पमाणमेत्ता विक्खभबाहल्लेण आयामेण जहन्नेण अगुलस्स असखेज्जइभाग उक्कोसेण जाव अहोलोइयगामा तिरिय जाव मणुस्सखेत्ते उड्ढ जाव अच्चुओ कप्पो । एव आरणदेवस्स अच्चुयदेवस्स वि एव चेव, णवर उड्ढ जाव सयाइ विमाणाइ ॥ इति ॥ वृत्तिर्यथा–आनतदेवस्यापि जघन्यतोऽङ्गुलासङ्ख्येयभागप्रमाणा तैजसशरीरावगाहना, नन्वानतादयो देवा मनुष्येष्वेवोत्पद्यन्ते मनुष्याश्च मनुष्यक्षेत्र एवेति कथमङ्गुलासङ्ख्येयभागप्रमाणा ? उच्यते- इह पूर्व (भव) सम्बन्धिनीं मनुष्यस्त्रियमन्येन मनुष्येणोपभुक्तामानतदेव' कश्चनाप्यवधिज्ञानत उपलभ्यासन्नमृत्युतया विपरीतभावत्वात् सत्त्वचरितवैचित्र्यात् कर्मगतेरचिन्त्यत्वात् कामवृत्तेर्मलिनत्वाच्च, उक्त च—" सत्त्वाना चरित चित्र, विचित्रा कर्मणा गति. । मलिनत्व च कामाना, वृत्ति' पर्यन्तदारुणा ॥ १ ॥ " इति गाढानुरागादिहागत्य नकुलोपगूढा तां परिष्वज्य तदवाच्यप्रदेशे स्वावाच्य

प्रदेशं प्रक्षिप्यातीव मूर्छितः स्वायुःक्षयात्कालं कृत्वा यदा तस्या एव गर्भे मनुष्यबीजे मनुष्यत्वेनोत्पद्यते, मनुष्यबीजं च जघन्यतोऽन्तर्मुहूर्त्तं उत्कृष्टतो द्वादश मुहूर्त्तान् यावदवतिष्ठते, उक्तं च—" मणुस्सबीए णं भंते ! कालतो केवच्चिरं होइ ? गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं बारस मुहुत्ता " इति । ततो द्वादशमुहूर्त्ताभ्यन्तरे उपभुक्तां परिष्वज्य मृतस्य तत्रैवोत्पत्तिर्मनुष्यत्वेन द्रष्टव्या, उत्कर्षतोऽधो यावदधोलौकिका ग्रामाः, तिर्यग् यावन्मनुष्यक्षेत्रं, ऊर्द्ध्वं यावदच्युतकल्पस्तावदवसेया, कथं इति चेत् ? उच्यते-इह यदाऽऽनतदेवः कस्याप्यन्यस्य देवस्य निश्रया अच्युतकल्पं गतो भवति, स च तत्र गतः सन् कालं कृत्वाऽधोलौकिकग्रामेषु यदि वा मनुष्यक्षेत्रपर्यन्ते मनुष्यत्वेनोत्पद्यते तदा लभ्यते । इति । श्रीप्रज्ञापनैकविंशतितमपदसूत्रवृत्तौ ५३२ प्रतौ ४०१ पत्रे ॥ ३ ॥

अथ यः केवलिशरीराज्जीवविराधनामवश्यंभाविनीमपि सर्वथा न स्वीकुरुते तं प्रत्युच्यते-अरे भद्रक ! त्वया तावदुच्यते केवलि हि श्वासोच्छ्वासनिमेषोन्मेषादिकमपि तत्रैव कुरुते यत्राचित्ता वायुकायादयः स्युः, यद्ययमेवं नियमः स्यात्तदा मार्गेऽपि निर्जीवे एव गच्छत्ययमपि नियमः स्यात् तथा च न दृश्यते, यतः केवली मार्गे गच्छंस्त्रसाकुलां भूमिमवलोक्य जन्तुरक्षानिमित्तमुल्लङ्घनप्रलङ्घनादिकमपि करोतीति शास्त्रेऽभिहितम्, ततोऽवसीयतेऽचित्तवायुकायादावेव श्वासोच्छ्वासादिकं कुर्यादयमपि नियमो नास्ति, निर्जीवे एव अचित्तजल एव मार्गे गच्छत्ययमपि नियमोऽनैकान्तिक एवासैद्धान्तिकश्च, केवलं काययोगन्यापारपाल्यजीवरक्षायै उल्लङ्घनप्रलङ्घनादिकं कायव्यापारं करोति । अशक्यरक्षांस्तु तान् जानन्नपि चलोपकरणतया किं करोतु ? किञ्च-त्रसाकुलां भूमिमवलोक्य उल्लङ्घनप्रलङ्घनादिकं कायव्यापारं कुर्यादित्यत्रैवं त्रसरक्षैव कृता भवति, नतु

जलाद्याकुले मार्गे स्थावराणामिति त्रसग्रहणमित्यल प्रसङ्गेन वृद्धवाक्यमेव प्रमाणम् । केवलिनामुल्लङ्घनप्रलङ्घनादिव्यापार-विषये सूत्रवृत्ती यथा—

से ण भंते ! तहा समुग्घायगए सिज्झति बुज्झइ मुच्चति परिनिव्वाति सव्वदुक्खाणमंत करोति ? गोयमा ! नो इणट्ठे समट्ठे, से ण ततो पडिनियत्तति पडिनियत्तिता ततो पच्छा मणजोगपि जुजति वयजोगपि जुजति कायजोगपि जुजति ॥ इति । वृत्तिर्यथा—'से ण भंते ! ' इत्यादि, स भदन्त ! केवली तथा दण्डकपाटादिक्रमेण समुद्घात गत सन् सिद्ध्यति-निष्ठितार्थो भवति, स च वर्त्तमानसामीप्ये वर्त्तमानवद्वा ( ३-३-१३१ पाणिनी ) इति वचनात् सेत्स्यन्नपि व्यवहारत उच्यते । तत आह-बुद्ध्यते-अवगच्छति केवलज्ञानेन यथाऽह निश्चयतो निष्ठितार्थो भविष्यामि निःशेषकर्मांशापगमत तत आह-मुच्यतेऽशेषकर्मांशै इति गम्यते, मुच्यमानश्च कर्माणुवेदनापरितापरहितो भवति, तत आह-परिनिर्वाति-सामस्त्येन शीती-भवति । समस्तमेतदेकेन पर्यायेण स्पष्टयति सर्वदुःखानामन्त करोतीति, भगवानाह-गौतम ! नायमर्थ समर्थः-नायमर्थ-सङ्गतो यत्समुद्घात गत सन् सर्वदुःखानामन्त करोतीति, योगनिरोधस्याद्याप्यकृतत्वात्, सयोगस्य च वक्ष्यमाणयुक्त्या सिद्ध्य-मानादिति भाव , तत किं करोति ? अत आह—'से ण ' इत्यादि, सोऽधिकृतसमुद्घातगत णमिति वाक्यालङ्कारे, ततः समुद्घातात्प्रतिनिवर्त्तते, प्रतिनिवर्त्य च तत प्रतिनिवर्त्तनात्पश्चादनन्तर मनोयोगमपि वाग्योगमपि काययोगमपि युनक्ति-व्या-पारयति, यत स भगवान् भवधारणीयकर्मसु नामगोत्रवेदनीयेषु अचिन्त्यमाहात्म्यसमुद्घातवशत प्रभूतेष्वायुषा सह समी-कृतेष्वपि अन्तर्मुहूर्त्तभाविपरमपदत्वतस्तस्मिन् काले यद्यनुत्तरोपपातिकादिना देवेन मनसा पृच्छ्यते तर्हि प्रश्नव्याकरणाय

मनःपुद्गलान् गृहीत्वा मनोयोगं युनक्ति, तमपि सत्यं असत्यामृपारूपं वा, मनुष्यादिना च पृष्टोऽपृष्टो वा कार्यवशतो वाग्पुद्गलान् गृहीत्वा वाग्योगं युनक्ति, तमपि सत्यं असत्यामृपा वा न शेपान् वाङ्मनसोर्योगान्, क्षीणरागादित्वात् । आगमनादौ चौदारिककाययोगम्, तथा हि—भगवान् कार्यवशतः कुतश्चित्स्थानाद्विवक्षिते स्थाने आगच्छेत् यदिवा क्वापि गच्छेत् अथवा तिष्ठेत् ऊर्द्धस्थानेन वाऽवतिष्ठेत् निषीदेत् वा तथाविधश्रमापनयनाय त्वग्वर्त्तनं वा कुर्यात्, अथवा विवक्षिते स्थाने तथाविधसम्पातिमसत्त्वाकुलां भूमिमवलोक्य तत्परिहाराय जन्तुरक्षानिमित्तमुल्लङ्घनं प्रलङ्घनं वा कुर्यात्, तत्र सहजात्पादविक्षेपान्मनागधिकतरः पादविक्षेपः उल्लङ्घनं, स एवाधिकतरः प्रलङ्घनं, यदिवा प्रातिहारिकपीठफलकशय्यासंस्तारकं प्रत्यर्पयेत्—यस्मादानीतं तस्मै समर्पयेत् । इह भगवताऽऽर्यश्यामेन प्रातिहारिकपीठफलकादीनां प्रत्यर्पणमेवोक्तं ततोऽवसीयते नियमादन्तर्मुहूर्त्तावशेषायुष्क एवावर्जीकरणादिकमारभते न प्रभूतविशेषायुष्कः, अन्यथा ग्रहणस्यापि सम्भवात्तदप्युपादीयेत एतेन, यदाहुरेके—जघन्यतोऽन्तर्मुहूर्त्तावशेषे समुद्घातमारभते उत्कर्षतः षट्सु मासेषु शेषेष्विति तदपास्तं द्रष्टव्यम्, षट्सु मासेषु कदाचिदपान्तराले वर्षाकालसम्भवात्तन्निमित्तं पीठफलकादीनामादानमप्युपपद्येत न च तत्सूत्रसम्मतमिति तत्प्ररूपणमुत्सूत्रमवसेयम् । इति प्रज्ञापनाषट्त्रिंशत्तमपदसूत्रवृत्तौ ४०० प्रतौ ३९३ पत्रे ॥ १० ॥

अपरं च यदि सयोगिकेवलिनः केवलयोगप्रत्ययं विराधनामात्रमपि न स्यात्तर्हि तत्र निश्चयतः सर्वसंवररूपं सर्वोत्तमं चारित्रं न भवतीति को हेतुः ? तच्च शैलेश्यवस्थायां योगनिरोधे सत्येव सर्वसंवररूपं सर्वोत्तमं चारित्रमुक्तम् । तथा हि—

ईसिं हस्सपंचक्खरुच्चारणद्धाए असंखेज्जसमइयं अंतोमुहुत्तियं सेलेसिं पडिवज्जइ ॥ इति ॥ वृत्तिर्यथा—'ईसिं' ति स्तोक-

काल शैलेशीं प्रतिपद्यते इति सम्बन्ध', कियता कालेन विशिष्टा इत्यत आह—ह्रस्वपञ्चाक्षरोच्चारणाद्धया, किमुक्त भवति ? नातिद्रुत नातिविलम्बित किंतु मध्यमेन प्रकारेण यावता कालेन ङञणनम इत्येवरूपाणि पञ्चाक्षराण्युच्चार्यन्ते तावता कालेन विशिष्टामिति, एतावान् काल किं समयप्रमाण ? इति निरूपणार्थमाह—असङ्ख्येयसामयिका—असङ्ख्येयसमयप्रमाणाम्, यथासङ्ख्येयसमयप्रमाण तच जघन्यतोऽप्यन्तर्मुहूर्त्तप्रमाण तत एषाऽप्यन्तर्मुहूर्त्तप्रमाणेति ख्यापनायाह—आन्तर्मौहूर्त्तिकीं शैलेशीमिति, शील—चारित्र तच्चेह निश्चयत सर्वसवररूप तद्ग्राह्य तस्यैव सर्वोत्तमत्वात्, तस्येशः शीलेश, तस्य याऽवस्था सा शैलेशी, ता प्रतिपद्यते, तदानीं च ध्यान ध्यायति व्यवच्छिन्नक्रियमप्रतिपाति, उक्त च—" सील व समाहाण, निच्छयओ सव्वसवरो सो य। तस्सेसो सीलेसो, सेलेसी होइ तदवत्था ॥ १ ॥ हस्सक्खराइ मज्झेण, जेण कालेण पच भणति। अच्छइ सेलेसिगओ, तत्तियमित्त तओ काल ॥ २ ॥ तणुरोहारभाओ, झायइ सुहुमकिरियानियट्टिं सो। वोच्छिन्नकिरियमप्पडिवाई सेलेसिकालमि ॥ ३ ॥ " इति श्री प्रज्ञापनाषट्त्रिंशत्तमपदसूत्रवृत्तौ ५३७ प्रतौ ५३० पत्रे ॥ ११ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालनिवर्द्धितयशपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे श्रीप्रज्ञापनाविचारनामा चतुर्थस्तरङ्ग. ॥

---

यस्यानुभावेन जगत् समस्त, शस्तप्रशस्त परिवर्त्ति नित्यम्। त जैनधर्मं सतत श्रयामो, व्यामोहवल्लीगजराजशावम् ॥ १ ॥

अथ क्रमायाता श्रीजम्बूद्वीपप्रज्ञप्तिविचारा लिख्यन्ते—तत्र यावद्वर्षपर्यायस्य साधोर्यदाचारादिश्रुतमध्याप्य तन्निरूप्यते—योगो—अनमरस्ततः प्रस्तुतोपाङ्गस्य दाने कोऽवसरः ? इति, उच्यते—उपाङ्गस्याङ्गार्थानुवादकतयाऽङ्गसामीप्येन वर्त्तमानाद्य

एवैतदीयाङ्गस्यावसरः स एवास्यापीति, तत्रावसरसूचिका इमा गाथाः—" तिवरिसपरियायस्स उ, आयारपकप्पनाममज्झयणं । चउवरिसस्स य सम्मं, सूअगडं नाम अंगं ति ॥ १ ॥ दसकप्पव्ववहारा, संवच्छरपणगदिक्खियस्सेव । ठाणं समवाओ वि य, अंगे ते अट्ठवासस्स ॥ २॥ दसवासस्स विवाहो, एगारसवासगस्स य इमे उ । खुड्डिअविमाणमाई, अज्झयणा पंच नायव्वा ॥ ३ ॥ बारसवासस्स तहा, अरुणोवायाइ पंच अज्झयणा । तेरसवासस्स तहा, उट्ठाणसुआइया चउरो ॥ ४ ॥ चउदसवासस्स तहा, आसीविसभावणं जिणा बिंति । पन्नरसवासगस्स य, दिट्ठीविसभावणं तह य ॥५॥ सोलसवासाइसु य, एगुत्तरवुड्ढिएसु जहसंखं। चारणभावणमहसुविण-भावणा तेअगिणिसग्गा ॥ ६ ॥ एगूणवीसगस्स उ, दिट्ठिवाओ दुवालसं अंगं। संपुण्णवीसवरिसो, अणुवाई सव्वसुत्तस्स ॥ ७ ॥ " इति । अत्र पञ्चवस्तुकसूत्रे दशवर्षपर्यायस्य साधोर्भगवत्यङ्गप्रदानेऽवसरस्य प्रतिपादनात् षष्ठाङ्गतया ज्ञाताधर्मकथाङ्गस्य प्रदाने तदनन्तरमवसरः, कारणविशेषे गुर्वाज्ञावशादर्वागपि, ततस्तदुपाङ्गत्वादस्य तदनन्तरमवसरः इति सम्भाव्यते । योगविधानसामाचार्यामपि अङ्गयोगोद्वहनानन्तरमेवोपाङ्गयोगोद्वहनस्य विधिप्राप्तत्वात् । इति जंबूद्वीपप्रज्ञप्तिसूत्रवृत्तौ ३८७ प्रतौ प्रथमवक्षस्कारके ३ पत्रे ॥ १ ॥

केचिच्च क्वचिन्मतान्तरादि दृष्ट्वा अहो इयं स्वकपोलकल्पना, अन्यथा सर्वज्ञप्रणीतेऽर्थे कुतो मतान्तरता ? इत्याद्यसद्वाक्यैर्विप्रतारयन्ति लोकान् परं तदपकर्णनीयं कारणविशेषवशात्सिद्धान्तेऽपि मतान्तरदर्शनात् । स सिद्धान्तः कारणविशेषश्च लिख्येते—

कहि णं भंते ! जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसभकूडे नामं पव्वए पन्नत्ते ? गोयमा ! गङ्गाकुंडस्स पच्चत्थिमेणं

सिंधुकुंडस्स पुरच्छिमेणं चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे, एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसभकूडे णामं पव्वए पन्नत्ते, अट्ठ जोयणाइं उड्ढं उच्चत्तेणं, दो जोयणाइं उव्वेहेणं, मूले अट्ठ जोअणाइं विक्खंभेणं, मज्झे छ जोअणाइं विक्खंभेणं, उवरिं चत्तारि जोयणाइं विक्खंभेणं, मूले साइरेगाइं पणवीसं जोयणाइं परिक्खेवेणं, मज्झे साइरेगाइं अट्ठारस जोयणाइं परिक्खेवेणं, उवरिं साइरेगाइं दुवालस जोयणाइं परिक्खेवेणं। पाठान्तर–मूले बारस जोअणाइं विक्खंभेणं, मज्झे अट्ठ जोयणाइं विक्खंभेणं, उप्पिं चत्तारि जोयणाइं विक्खंभेणं, मूले साइरेगाइं सत्ततीसं जोयणाइं परिक्खेवेणं, मज्झे साइरेगाइं पणवीसं जोयणाइं परिक्खेवेणं, उप्पिं साइरेगाइं बारस जोयणाइं परिक्खेवेणं, मूले विच्छिन्ने मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए, सव्वजम्बूणयामए अच्छे सण्हे जाव पडिरूवे ॥ इति ॥ वृत्तिर्यथा 'कहि णं' इत्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वतः प्रज्ञप्तः ? भगवानाह–गौतम ! गङ्गाकुण्डस्य यत्र हिमवतो गङ्गा निपतति तद्गङ्गाकुण्डं, तस्य पश्चिमायाम्, यत्र तु सिंधुर्निपतति तत्सिन्धुकुण्डं तस्य पूर्वस्यां, क्षुल्लहिमवतो वर्षधरस्य दाक्षिणात्ये नितम्बे, सामीप्यलक्षणसप्तम्या नितम्बासन्ने इत्यर्थः, अत्र प्रदेशे जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वतः प्रज्ञप्तः, अष्टौ योजनान्यूर्ध्वोच्चत्वेन, द्वे योजने उद्वेधेन–भूमिप्रवेशेन, उच्चत्वचतुर्थांशस्य भूम्यवगाढत्वात्, अष्टानां च चतुर्थांशे द्वयोरेव लाभात्, मूलमध्यान्तेषु क्रमादष्टषट्चत्वारि योजनानि विष्कम्भेन–विस्तरेण उपलक्षणत्वादायामेनापि, समचतुरस्राकारविष्कम्भायामशालित्वादिति, तथा मूलमध्यान्तेषु पञ्चविंशतिरष्टादश द्वादश च योजनानि सातिरेकाणि परिक्षेपेण–परिधिना, अथात्र पाठान्तरे वाचनाभेदसञ्जातपरिमाणान्तरमाह–मूले द्वादश योजनानि विष्कम्भेन मध्येऽष्टयोजनानि विष्कम्भेन, उपरि

चत्वारि योजनानि विष्कम्भेन, अत्रापि विष्कम्भायामतः साधिकत्रिगुणं मूलमध्यान्तपरिधिमानं सूत्रोक्तं सुबोधम्। अत्राह परः—एकस्य वस्तुनो विष्कम्भादि परिमाणे द्वैरूप्यासम्भवेन प्रस्तुतग्रन्थस्य च सातिशयस्थविरप्रणीतत्वेन कथं नान्यतरनिर्णयः ? यदेकस्यापि ऋषभकूटपर्वतस्य मूलादावष्टादियोजनविस्तृतत्वादि पुनस्तत्रैवास्य द्वादशयोजनविस्तृतत्वादीति, सत्यं, जिनभट्टारकाणां सर्वेषां क्षायिकज्ञानवतामेकमेव मतं मूलतः, पश्चात्तु कालान्तरेण विस्मृत्यादिनाऽयं वाचनाभेदः, यदुक्तं श्रीमलयगिरिसूरिभिर्ज्योतिष्करण्डकवृत्तौ—" इह स्कन्दिलाचार्यप्रवृत्तौ दुःषमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनशत्। ततो दुर्भिक्षातिक्रमे, सुभिक्षप्रवृत्तौ, द्वयोः सङ्घमेलापकोऽभवत्, तद्यथा—एको वल्लभ्यामेको मथुरायाम्, तत्र सूत्रार्थसङ्घट्टने परस्परं वाचनाभेदो जातः, विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा स्मृत्वा सङ्घट्टने भवत्यवश्यं वाचनाभेदः" इत्यादि। ततोऽत्रापि दुष्करोऽन्यतरनिर्णयः, द्वयोः पक्षयोरुपस्थितयोरनतिशायिज्ञानिभिरनभिनिविष्टमतिभिः प्रवचनाशातनाभीरुभिः पुण्यपुरुषैरिति न काचिदनुपपत्तिः। इति जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्तौ प्रथमवक्षस्कारे ३८७ प्रतौ ६६ पत्रे ॥ २ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितयशपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरेऽपरतटे जंबूद्वीपप्रज्ञप्तिविचारनामा पञ्चमस्तरङ्गः ॥ ५ ॥

सर्वज्ञभाषितार्थाय, समर्थाय तमोव्यये। अव्ययाय नमो नित्यं, सिद्धान्ताय जिनेशितुः ॥ १ ॥

अथ परिपाट्यायाताः श्रीचन्द्रप्रज्ञप्तिविचारा यथा—तत्र चन्द्रविमानसंस्थानादिजिज्ञासया लिख्यते—

ता चंदविमाणेणं किं संठिए पण्णत्ते ? ता अद्धकविट्ठगसंठाणसंठिए सव्वफलियामए अब्भुग्गयमूसियपहसिए। विविह-

मणिरयणभत्तिचित्ते वाऊद्धुयविजयवेजयंतीपडागाछत्ताइच्छत्तकलिए तुंगे गगणतलमणुलिहंतसिहरे जालंतररयण पंजरु
म्मिलियव्व मणिकणगथूभियागे वियसियसयवत्तपुंडरीयतिलगरयणद्धचंदचित्ते अंतो बहिं च सण्हे तवणिज्जवालुगापत्थडे
सुहफासे सस्सिरीयरूवे पासाइए दरसणिज्जे अभिरूवे पडिरूवे ॥ इति । वृत्तिर्यथा—' ता चंदविमाणे णं ' इत्यादि, सस्था-
नविषय प्रश्नसूत्र सुगमम्, भगवानाह—' ता अद्धकविट्ठ ' इत्यादि, उत्तानीकृतमर्द्धमात्र कपित्थ तस्येव यत्सस्थान तेन
सस्थित अर्द्धकपित्थसस्थानसास्थितम्, आह–यदि चन्द्रविमानमुत्तानीकृतार्द्धमात्रकपित्थफलसस्थानसास्थित तत उदयकालेऽ-
स्तमनकाले वा यदिवा तिर्यग्परिभ्रमत्पौर्णमास्यां कस्मात्तदर्द्धकपित्थफलाकार नोपलभ्यते काम शिरस उपरि वर्त्तमान
वर्त्तुलमुपलभ्यते ? अर्द्धकपित्थस्य शिरस उपरि दूरमवस्थापितस्य परभागादर्शनतो वर्त्तुलतया दृश्यमानत्वादुच्यते इहार्द्धक
पित्थफलाकार चन्द्रविमान न सामस्त्येन प्रतिपत्तव्य किं तु तस्य चन्द्रविमानस्य पीठ, तस्य च पीठस्योपरि चन्द्रदेवस्य ज्योति-
श्चक्रराजस्य–प्रासादस्तथा कथञ्चनापि व्यवस्थितो यथा पीठेन सह भूयान् वर्त्तुल आकारो भवति, स च दूरभावादेकान्ततः
समवृत्ततया जनाना प्रतिभासते ततो न कश्चिद्दोषः, न चैतत्स्वमनीषिकाया विजृम्भित, यतः एतदेव श्रीजिनभद्रगणिक्षमाश्रमणेन
विशेषणवत्यामाक्षेपपुरस्सरमुक्तम्—" अद्धकविट्ठागारा, उदयत्थमणम्मि कह न दीसंति । ससिसूराण विमाणा, तिरियक्खे-
त्तट्ठियाण च ॥ १ ॥ उत्ताणद्धकविट्ठागार पीठ तदुवरिं च पासाओ । वट्टालेखेण तओ, समवट्टं दूरभावाओ ॥ २ ॥ "
तथा सर्वे निरवशेष स्फटिकमय–स्फटिकविशेषमणिमयम्, तथा अभ्युद्गता आभिमुख्येन सर्वतो विनिर्गता उत्सृता–प्रबल-
तया सर्वासु दिक्षु प्रसृता या प्रभा–दीप्तिः तया सित–शुक्ल अभ्युद्गतोत्सितप्रभासितम्, तथा विविधा–अनेकप्रकारा मणयः

चन्द्रकान्तादयो रत्नानि—कर्केतनादीनि तेषां भक्तयो—विच्छित्तिविशेषास्ताभिश्चित्रं—अनेकरूपवत् आश्चर्यवद्वा विविध-मणिरत्नचित्रम्, वातोद्धुता—वातकंपिता विजयो—अभ्युदयस्तत्सूचिका वैजयन्त्यभिधाना या पताका अथवा विजया इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः पताकाः—ता एव विजयवर्जिता वैजयन्त्यः छत्रा-तिच्छत्राणि च—उपर्युपरि स्थितातपत्राणि तैः कलितं ततो वातोद्धुतविजयवैजयन्तीपताकाछत्रातिच्छत्रकलितं तुङ्गं—उच्च-मत एव 'गगणतलमणुलिहंतसिहरे' त्ति गगनतलं—अम्बरतलमनुलिखत्—अभिलङ्घयच्छिखरं यस्य तद् गगनतलानु-लिखच्छिखरम्, तथा जालानि—जालकानि तानि च भवनभित्तिषु लोके प्रतीतानि तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि यत्र तज्जालान्तररत्नम्, सूत्रे चात्र प्रथमैकवचनलोपो द्रष्टव्यः, तथा पञ्जरादुन्मीलितमिव बहिष्कृतमिव पञ्जरोन्मीलितम्, यथा हि किल किमपि वस्तु पञ्जरात्—वंशादिमयप्रच्छादनविशेषाद्बहिष्कृतमत्यन्तमविनष्टच्छायत्वाच्छोभते एवं तदपि विमानमिति भावः, तथा मणिकनकानां सम्बन्धिनी स्तूपिकाशिखरं यस्य तन्मणिकनकस्तूपिकाकम्, तथा विकसितानि यानि शतपत्राणि पुण्डरीकाणि च द्वारादौ प्रतिकृतित्वेन स्थितानि तिलकाश्च भित्त्यादिषु पुण्ड्राणि रत्नमयाश्चार्द्धचन्द्रा द्वारादिषु तैश्चित्रं विक-सितशतपत्रपुण्डरीकतिलकार्द्धचन्द्रचित्रम्, तथाऽन्तर्बहिश्च श्लक्ष्णं—मसृणमित्यर्थः, तथा तपनीयं—सुवर्णविशेषस्तन्मय्या वालु-कायाः प्रस्तटः—प्रतरो यत्र तत्तपनीयवालुकाप्रस्तटम्, तथा सुखस्पर्शं शुभस्पर्शं वा, तथा सश्रीकाणि—सशोभानि रूपाणि—नरयुग्मादीनि यत्र तत्सश्रीकरूपम्, तथा प्रासादीयं—मनःप्रसादहेतुः, अत एव दर्शनीयं—द्रष्टुं योग्यम्, तद्दर्शनेन तृप्तेरसम्भ-वात्, तथा प्रतिविशिष्टं—असाधारणरूपं यस्य तत्तथा । इतिश्रीचन्द्रप्रज्ञप्त्यष्टादशप्राभृतसूत्रवृत्तौ ४८ पत्रे ॥ १ ॥

केचिदज्ञानिन एव प्रलपन्ति–यत्तीर्थङ्करा हि भगवन्तोऽर्हन्तोऽनुत्तरज्ञानदर्शनचारित्राधारत्वात्पूज्याः, तत्प्रतिमास्तु ज्ञानादिशून्यत्वान्नैकमपि माननीया', न हि नृपमूर्तिरन्यायिदण्डनानपालनादिनृपव्यापारसमर्था भवति चैतन्यशून्यत्वादिति, परं तदेषामनन्तसंसारकारणम्, यतो ज्ञानादिशून्यानामपि भगवत्सक्थ्नां सुरैर्भगवद्वदनुमतत्वात्, भगवत्सम्बन्धित्वादिति चेत्तुल्यं प्रतिमानामपि । तथेदम्—

पभू णं भंते ! चंदे जोइसिंदे जोइसराया चंदवडिंसए विमाणे सभाए सुहम्माए चंदंसि सिंहासणंसि तुडिएणं सद्धिं दिव्वाइं भोगभोगाइं भुंजमाणे विहरित्तए ? गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ नो पभू चंदे जोइसिंदे जाव विहरित्तए ? गोयमा ! चंदस्स णं जोइसिंदस्स जोइसरण्णो चंदवडिंसए विमाणे सभाए सुहम्माए माणवए चेइयखंभे वइरामएसु गोलवट्टसमुग्गएसु बहूओ जिणसकहाओ सन्निक्खित्ताओ चिट्ठंति ताओ णं चंदस्स जाव रण्णो अन्नेसिं च बहूणं जोइसियाणं देवाण य देवीण य अच्चणिज्जाओ वंदणिज्जाओ पूयणिज्जाओ सक्कारणिज्जाओ सम्माणणिज्जाओ कल्लाणं मंगलं देवयं चेइयं पज्जुवासणिज्जाओ एवं खलु नो पभू चंदे जोइसिंदे जोइसराया चंदवडिंसए विमाणे सभाए सुहम्माए तुडिएणं सद्धिं दिव्वाइं भोगभोगाइं भुंजमाणे विहरित्तए ॥ इति । वृत्तिर्यथा—' पभू णं भंते ! चंदे ' इत्यादि, प्रश्नसूत्रं सुगमम्, भगवानाह–' नो इणट्ठे समट्ठे ' इत्यादि नायमर्थः समर्थः —उपपन्नो न युक्तोऽयमर्थ इत्यर्थः, यथा चन्द्रावतंसकविमाने या सुधर्मा सभा तस्यामन्तःपुरेण सार्द्धं, दिव्यान् भोगभोगान् भुञ्जानो विहरतीति, ' से केण ट्ठे णं पभू ' इत्यादि प्रश्नसूत्रं सुगमम्, भगवानाह ' चंदस्स णं ' इत्यादि, चन्द्रावतंसके विमाने सुधर्मायां सभायां माणवको नाम चैत्यस्तम्भोऽस्ति, तस्मिन् माणवके स्तम्भे वज्रमयेषु सिक-

केषु वज्रमया गोलाकारा वृत्ताः समुद्रकास्तेषु बहूनि जिनसक्थीनि निक्षिप्तानि तिष्ठन्ति, 'ताओ णं' इत्यादि तानि जिनसक्थीनि, इह सूत्रे स्त्रीत्वनिर्देशः प्राकृतत्वात्, चन्द्रस्य ज्योतिषेन्द्रस्य ज्योतिषराजस्यान्येषां च बहूनां ज्योतिष्काणां देवानां देवीनां च अर्चनीयानि–पुष्पादिभिः वन्दनीयानि स्तोतव्यानि–विशिष्टैः स्तोत्रैः पूजनीयानि–वस्त्रादिभिः सत्कारणीयानि–आदरप्रतिपत्त्या सन्माननीयानि–जिनोचितप्रतिपत्त्या कल्याणं–कल्याणहेतुः, मङ्गलं–दुरितोपशमहेतुः दैवतं–परमदेवता चैत्यं–इष्टदेवताप्रतिमेत्येवं पर्युपासनीयानि तत एवं–अनेन प्रकारेण खलु–निश्चितं न प्रभुरित्यादि सुगमम् । इति श्रीचन्द्रप्रज्ञप्त्यष्टादशप्राभृतसूत्रवृत्तौ ४४ पत्रे ॥ २ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे श्रीचन्द्रप्रज्ञप्तिविचारनामा षष्ठस्तरङ्गः ॥ ६ ॥

गुणगणभूषितमभितः, सितपटधृतममितवस्तुविस्तारम् । वहनमिव श्रीजिनपतिवचनं नयतीहितं स्थानम् ॥ १ ॥

अथ क्रमाच्छ्रीसूर्यप्रज्ञप्तिविचारा लिख्यन्ते–तत्र नक्षत्रसंस्थानजिज्ञासया लिख्यते—

ता कहं ते नक्खत्तसंठिती आहितेति वदेज्जा ? ता एएसि णं अट्ठावीसाए णक्खत्ताणं अभीई णक्खत्ते किं संठिए पण्णत्ते ? गोयमा ! गोसीसावलिसंठिए पण्णत्ते १, सवणे णक्खत्ते किं संठिते पन्नत्ते ? काहारसंठिते पण्णत्ते २, धणिट्ठाणक्खत्ते किं संठिते पन्नत्ते ? सउणिपंजरसंठिते पण्णत्ते ३, सयभिसयाणक्खत्ते किं संठिते पण्णत्ते ? पुप्फोवयारसंठिते पण्णत्ते ४, पुव्वभद्दवयाणक्खत्ते किं संठिते पण्णत्ते ? अवड्ढवावीसंठाणसंठिते पण्णत्ते ५, एवमुत्तरावि ६, रेवतीनक्खत्ते किं संठिते

पण्णत्ते ? नावासठाणसठिते पण्णत्ते ७, अस्सिणीणक्खत्ते किं सठिते पण्णत्ते ? आसखधसठाणसठिते पण्णत्ते ८, भरणीणक्खत्ते किं सठिते पण्णत्ते ? भगसठाणसाठिते पण्णत्ते ९, कत्तियाणक्खत्ते किं सठिते पण्णत्ते ? छुरघरगसठिते पण्णत्ते १०, रोहिणीणक्खत्ते किं सठिते पण्णत्ते सगडुद्धिसठाणसठितेपन्नत्ते ११, मिगसिरणक्खत्ते किं सठिए पन्नत्ते, मिगसिरावलिसठाण-सठिते पन्नत्ते १२, अद्दाणक्खत्ते किं सठिते पन्नत्ते ? रुधिरबिंदुसठाणसठिते पन्नत्ते १३, पुणव्वसुणक्खत्ते किं सठिते पन्नत्ते ? तुलासठाणसठिते पन्नत्ते १४, पुस्सणक्खत्ते किं सठिते पन्नत्ते ? सुपइट्ठवद्धमाणसठाणसठिते पन्नत्ते १५, अस्सेसाणक्खत्ते किं सठिते पन्नत्ते ? पडागासंठाणसठिते पन्नत्ते १६, मघाणक्खत्ते किं सठिते पन्नत्ते ? पागारसठाणसठिते पन्नत्ते १७, पुव्वफग्गुणीणक्खत्ते किं सठिते पन्नत्ते ? अद्धपलियकसठाणसठिते पन्नत्ते १८, उत्तरफग्गुणीणक्खत्ते किं सठिते पन्नत्ते ? अद्धपलियकसठाणसठिते पन्नत्ते १९, हत्थणक्खत्ते किं सठिते पण्णत्ते ? हत्थसठाणसाठिते पन्नत्ते २०, चित्ताणक्खत्ते किं सठिते पन्नत्ते ? मुहमडणसुवन्नपुप्फसठाणसठिते पन्नत्ते २१, साइनक्खत्ते किं सठिते पन्नत्ते ? कीलगसठाणसठिते पन्नत्ते २२, विसाहाणक्खत्ते किं सठिते पन्नत्ते ? दामणिसठाणसठिते पन्नत्ते २३, अणुराहाणक्खत्ते किं सठिए पन्नत्ते ? एगावलिसठाणसठिते पन्नत्ते २४, जेट्ठानक्खत्ते किं सठिते पन्नत्ते ? गजदतसठाणसठिते पन्नत्ते २५, मूलनक्खत्ते किं सठिए पन्नत्ते ? विच्छुसठाणसठिते पन्नत्ते २६, पुव्वासाढाणक्खत्ते किं सठिते पन्नत्ते ? गयसठाणसठितेपन्नत्ते २७, उत्तरासाढाणक्खत्ते किं सठिते पन्नत्ते ? सीहनिसीयणसठाणसठिते पन्नत्ते २८ ॥ वृत्तिर्यथा—'ता कह ते' इत्यादि, ता इति पूर्ववत्, कथ-केन प्रकारेण भगवन् ! नक्षत्राणां संस्थिति —संस्थानमाख्याता इति वदेत् ? एवमुक्त्वा भूयः प्रत्येक प्रश्न

विदधाति—' ता ' इत्यादि, ता इति पूर्ववत् । एतेषामनन्तरोदितानामष्टाविंशतिनक्षत्राणां मध्ये यदभिजिन्नक्षत्रं तत् ' किं संठितं ' ति कस्येव संस्थितं—संस्थानं यस्य तत्किं संस्थितं प्रज्ञप्तम् ? भगवानाह–' ता एएसि णं ' इत्यादि, ता इति पूर्ववत्, एतेषामनन्तरोदितानामष्टाविंशतेर्नक्षत्राणां मध्येऽभिजिन्नक्षत्रं गोशीर्षावलिसंस्थितं प्रज्ञप्तम्, गोः शीर्षं गोशीर्षं तस्यावलिस्तत्पुद्गलानां दीर्घरूपा श्रेणिस्तत्समं संस्थानं प्रज्ञप्तम्, एवं शेषाण्यपि सूत्राणि भावनीयानि, नवरं दामनी–पशुबन्धनम्, शेषं प्रायः सुगमम् । संस्थानसङ्ग्राहिका गाथाश्चेमा जंबूद्वीपप्रज्ञप्तिसत्कास्तिस्रः–" गोसीसावलि१ काहार२, सउणि३ पुप्फोवयार४ वावी य५–६ णावा७ य आसखंधग८, भग९ छुरघरए य१० सगडुद्धी ॥ ११ ॥ १ ॥ मिगसीसावलि१२ रुहिरबिंदु १३ तुल१४ वद्धमाणग१५ पडागा१६ । पागारे१७ पलिअंके१८–१९, हत्थे२० मुहफुल्लए२१ चेव ॥ २ ॥ खीलग२२ दामणि२३ एगावली२४ य गयदंत२५ विच्छुयअले२६ गयविकमे२७ य तत्तो, सीहनिसाई य२८ संठाणा ॥ ३ ॥ " इति श्रीमलयगिरिविरचितायां सूर्यप्रज्ञप्तीदशमप्राभृताष्टमप्राभृतप्राभृतसूत्रवृत्तौ २०९ प्रतौ ११९ पत्रे ॥ १ ॥

अथ नक्षत्राणां तारासङ्ख्याजिज्ञासया लिख्यते—

ता कहं ते तारग्गे आहितेति वदेज्जा–ता एतेसि णं अट्ठावीसाए णक्खत्ताणं अभीईणक्खत्ते कतितारे पन्नत्ते ? तितारे पण्णत्ते१, सवणे णक्खत्ते कतितारे पण्णत्ते ? तितारे पन्नत्ते २, धनिट्ठानक्खत्ते कतितारे पण्णत्ते ? पणतारे पन्नत्ते ३, सयभिसयाणक्खत्ते कइतारे पन्नत्ते ? सततारे पन्नत्ते ४, पुव्वभद्दवया नक्खत्ते कतितारे पन्नत्ते ? दुतारे पण्णत्ते ५, एवं उत्तरावि ६, रेवतीणक्खत्ते कतितारे पण्णत्ते ? दुतीसतारे पण्णत्ते ७, अस्सिणीणक्खत्ते कतितारे पन्नत्ते ? तितारे पन्नत्ते

भरणीणक्खत्ते कइतारे पन्नत्ते ? तितारे ६, कत्तियाणक्खत्ते कइतारे पन्नत्ते ? छतारे पन्नत्ते १, रोहिणीणक्खत्ते कतितारे पन्नत्ते ? पंचतारे पन्नत्ते ११, मिगसिरनक्खत्ते कइतारे पन्नत्ते ? तितारे पन्नत्ते १२, अद्दानक्खत्ते कइतारे पण्णत्ते ? एगतारे पण्णत्ते १३, पुणव्वसुनक्खत्ते कइतारेपण्णत्ते ? पचतारे पण्णत्ते १४, पुस्सणक्खत्ते कइतारे पण्णत्ते ? तितारे पण्णत्ते १५, आस्सेसानक्खत्ते कइतारे पण्णत्ते ? छतारे पण्णत्ते १६, महानक्खत्ते कइतारे पन्नत्ते ? सत्ततारे पन्नत्ते १७, पुव्वफग्गुणीणक्खत्ते कइतारे पन्नत्ते ? दुतारे पन्नत्ते १६, उत्तरफग्गुणीनक्खत्ते कइतारे पन्नत्ते ? दुतारे पन्नत्ते १६, हत्थनक्खत्ते कतितारे पन्नत्ते ? पचतारे पन्नत्ते २०, चित्ताणक्खत्ते कइतारे पन्नत्ते ? एगतारे पन्नत्ते २१, सातिणक्खत्ते कइतारे पण्णत्ते ? एगतारे पन्नत्ते २२, विसाहानक्खत्ते कइतारे पन्नत्ते ? पचतारे पन्नत्ते २३, अणुराहाणक्खत्ते कइतारे पन्नत्ते ? चउतारे पन्नत्ते २४, जेट्ठानक्खत्ते कइतारे पन्नत्ते ? तितारे पन्नत्ते २५, मूलनक्खत्ते कइतारे पण्णत्ते ? एगादसतारे पन्नत्ते २६, पुव्वासाढानक्खत्ते कइतारे पन्नत्ते ? चउतारे पन्नत्ते २७, उत्तरासाढाणक्खत्ते कइतारे पन्नत्ते ? चउतारे पण्णत्ते २८ ॥ इति । वृत्तिर्यथा—तदेवमुक्तं दशमस्यस्य प्राभृतस्याष्टम प्राभृतप्राभृतम्, सम्प्रति नवममारभ्यते, तस्य चायमर्थाधिकारः—प्रतिनक्षत्र ताराप्रमाण वक्तव्यमिति । ततस्तद्विषय प्रश्नसूत्रमाह—ता कह ते ' इत्यादि, ता इति पूर्ववत्, कथ–केन प्रकारेण ते–त्वया भगवन् ! नक्षत्राणां ताराग्र ताराप्रमाणमाख्यात इति वदेत् ? एवं सामान्यतः प्रश्न कृत्वा सम्प्रति प्रतिनक्षत्र पृच्छति–'ता एएसि णं' इत्यादि, ता इति पूर्ववत्, एतेषामष्टाविंशतेर्नक्षत्राणामभिजिन्नक्षत्र कतितार प्रज्ञप्तम् ? भगवानाह–अभिजिन्नक्षत्र त्रितार प्रज्ञप्तम्, एव शेषाण्यपि प्रश्ननिर्वचनसूत्राणि भावनीयानि, ताराप्रमाणस-

ङ्गाहिके चेमे जंबूद्वीपप्रज्ञप्तीसत्के गाथे—" तिग१ तिग२ पंचग३ सय४ दुग५, दुग६ बत्तीस७ तिगं८ तिगं९ चेव । छ१० प्पंचग११ तिग१२ इक्कग१३ पंचग१४ तिगं१५ छक्कगं१६ चेव ॥ १ ॥ सत्तग१७ दुग१८ दुग१९ पंचग२० इक्कि२१ क्कग२२ पंच२३ चउ२४ तिगं२५ चेव । इक्कारस य२६ चउक्कं२७ चउक्कगं२८ चेव तारग्गं ॥२॥ " इति श्रीसूर्यप्रज्ञप्तिदशमप्राभृतनवमप्राभृतप्राभृतवृत्तौ मलयगिरिविरचितायां २७९ प्रतौ १२० पत्रे ॥ २ ॥

इति श्रीमदकब्बरभूपालविशालचित्तालवालाविवर्द्धितवृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे श्रीसूर्यप्रज्ञप्तीविचारनामा सप्तमस्तरङ्गः ॥ ७ ॥

कल्याणकरणकुशलां, दुरधिगमां भूरिभाग्यसंप्राप्याम् । रसकूपिकामिव मुदा, जिनवाणीमवहितः सेवे ॥ १ ॥

अथ क्रमायाताः श्रीनिरयावलिया कप्पवडिंसिया२ पुप्फिया३ पुप्फचूलिया४ वह्नीदशा५ त्मकोपाङ्गविचारा लिख्यन्ते—तत्र यथा चतुरशीतिसहस्राधिकैकलक्षमनुष्यक्षयकारी चेटकमहाराजकूणिकराज्ञोः सङ्ग्रामः सञ्जातस्तथा लिख्यते—

पढमस्स णं भंते ! अज्झयणस्स निरयावलियाणं समणेणं जावसंपत्तेणं के अट्ठे पन्नत्ते ? एवं खलु जंबू ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे दीवे भारहे वासे चंपानामं नगरी होत्था, रिद्ध० पुन्नभद्दे चेइए, तत्थ णं चंपाए नयरीए सेणीयस्स रन्नो पुत्ते चेल्लणाए देवीए अत्तए कूणिए नामं राया होत्था । महया० तस्स णं कूणियस्स रण्णो पउमावई नामं देवी होत्था, सोमाल । जाव विहरइ । तत्थ णं चंपाए नयरीए सेणियस्स रन्नो भज्जा कूणियस्स रण्णो चुल्लमाउया काली नामं देवी होत्था, सोमाला जाव पडिरूवा । तीसे णं कालीए देवीए पुत्ते काले नामं कुमारे होत्था, सोमाले जाव सुरूवे ।

तत ण से काले कुमारे अन्नया कयाइ तिहिं दतीसहस्सेहिं, तिहिं रहसहस्सेहिं, तिहिं आससहस्सेहिं, तिहिं मणुयकोडीहिं, गरुलवूहे एकारसमेण खडएण कूणिएण रन्ना सद्धिं रहमुसल सगाम ओयाए। तते ण तीसे कालीए देवीए अन्नया कयावि कुडुम्बजागरियं जागरमाणीए अयमेयारूवे अज्झत्थिए जाव समुप्पजित्था-एव खलु मम पुत्ते काले कुमारे तिहिं दतिसहस्सेहिं जाव ओयाए से मन्ने किं जतिस्सति नो जतिस्सति ? जीविस्सइ नो जीविस्सइ ? पराजिणिस्सइ णो पराजिणिस्सइ ? ॥

इति वृत्तिर्यथा—' एव खलु जबू ! तेण कालेण ' इत्यादि ' इहेव ' इति इहैव देशतः प्रत्यासन्ने न पुनरसङ्ख्येयत्वाज्जम्बूद्वीपानामन्यत्रेति भाव', भारते वर्षे-क्षेत्रे चम्पा नगरी अभूत्। रिद्धेत्यनेन ' रिद्धत्थमियसमिद्ध ' इत्यादि दृश्यम्, व्याख्या तु प्राग्वत्, तत्रोत्तरदिग्भागे पूर्णभद्रनामक चैत्य व्यतरायतन, ' कूणिए नाम राय ' त्ति कूणिकनामा श्रेणिजराजपुत्रो राजा ' होत्थ ' त्ति अभवत्' तद्वर्णको ' महयाहिमवतमहतमलयमदरमहिंदसारे ' इत्यादि, पसतडिंबडमर रज्ज पसाहेमाणे विहरइ ' इत्येतदन्त., तत्र महाहिमवानिव महान् शेषराजापेक्षया तथा मलयः-पर्वतविशेषो मन्दरो-मेरुः महेन्द्रः-शक्रादिदेवराजः तद्वत्सारः-प्रधानो यः स तथा, तथा प्रशान्तानि डिम्बानि-विघ्नाः डमराणि-राजकुमारादिकृतविड्वरा यस्मिन् तत्तथा, ( राज्य ) प्रसाधयन्-पालयन् विहरति-आस्ते स्म। कूणिकदेव्या पद्मावतीनाम्न्या वर्णको यथा-' सूमाल। जाव विहरति ' यावत्करणादेव दृश्यम्-' सुकुमालपाणिपाया अहीणपचिंदियसरीरा ' अहीनानि अन्यूनानि लक्षणतः स्वरूपतो वा पञ्चापीन्द्रियाणि यस्मिंस्तत्तथाविध शरीर यस्याः सा तथा, ' लक्खणवजणगुणोववेया ' लक्षणानि-स्वस्तिकचक्रादीनि व्यञ्जनानि-मषीतिलकादीनि तेषां यो गुणः-प्रशस्तता तेन उपपेता-युक्ता या सा तथा, उप अप इता शब्दत्रयस्थाने

शकंध्वादिदर्शनादुपपेतेति स्यात्, 'माणुम्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगा' तत्र मानं—जलस्य द्रोणप्रमाणता कथं ? जलस्यातिभृते कुंडे पुरुषे निवेशिते यज्जलं निस्सरति तद्यदि द्रोणमानं भवति तदा स पुरुषो मानप्राप्त उच्यते, तथा उन्मानं—अर्द्धभारप्रमाणता कथं ? तुलारोपितः पुरुषो यद्यर्द्धभारं तुलति तदा स उन्मानप्राप्त उच्यते, प्रमाणं तु—स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रायिता, ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि—अन्यूनानि सुजातानि सर्वाणि अङ्गानि—शिरःप्रभृतीनि यस्मिंस्तत्तथाविधं सुन्दरमङ्गं—शरीरं यस्याः सा तथा, 'ससिसोमाकारकंतपियदंसणा' शशिवत्सौम्याकारं कान्तं च—कमनीयं अत एव प्रियं द्रष्टॄणां दर्शनं—रूपं यस्या सा तथा, अत एव सुरूपा स्वरूपतः सा पद्मावती देवी 'कूणिएणं सद्धिं उरालाइं भोगभोगाइं भुंजमाणी विहरइ' भोगभोगान्—अतिशयवद्भोगान्, 'तत्थ णं' इत्यादि, 'सोमालपाणिपाया' इत्यादि पूर्ववद्वाच्यम्, अन्यच्च 'कोमुइरयणियरविमलपडिपुन्नसोमवयणा' कौमुदीरजनीकरवत्—कार्त्तिकीचन्द्र इव विमलं प्रतिपूर्णं सौम्यं वदनं यस्या सा तथा, 'कुंडलुल्लिहियगंडलेहा' कुण्डलाभ्यामुल्लिखिता घृष्टा गण्डलेखाः—कपोलविरचितमृगमदादिरेखा यस्याः सा तथा, 'सिंगारागारचारुवेसा' शृङ्गारस्य—रसविशेषस्यागारमिवागारं तथा, चारुवेषो—नेपथ्यं यस्या सा तथा ततः कर्मधारयः, 'काली नामं देवी' श्रेणिकस्य भार्या सा कूणिकस्य राज्ञश्चुल्लजननी—लघुमाताऽभवत्, सा य कालीदेवी सेणियस्स रन्नो इट्ठा वल्लभा कान्ता काम्यत्वात् प्रिया—सदा प्रेमविषयत्वात् 'मणुन्ना' सुन्दरत्वात्—'नामधिज्जा' प्रशस्तनामधेयवतीत्यर्थः नाम वा धार्य—हृदि धरणीयं यस्याः सा तथा, 'वेसासिया' विश्वसनीयत्वात् 'सम्मया' तत्कृतकार्यस्य संमतत्वात् 'बहुमया' बहुशो बहुभ्यो वाऽन्येभ्यः सकाशान्मता बहुमता बहुमानपात्रं वा 'अणुमया' विप्रियकरणस्यापि पश्चा-

न्मता अनुमता 'भडकरडकसमाणा' आभरणकरंडकसमाना उपादेयत्वात्, सुसरक्षितत्वाच्च । 'तेल्लकेला इव सुसगोविया' तैलकेला सौराष्ट्रप्रसिद्धो मृन्मयस्तैलस्य भाजनविशेषः स च भङ्गभयाल्लोठनभयाच्च सुष्ठु सङ्गोप्यते, एवं साऽपि तथोच्यते 'चेलपेडा इव सुसपरिग्गहीया' वस्त्रमञ्जुषेवत्यर्थः, 'सा काली देवी सेणिएण सद्धिं विउलाइ भोगभोगाइ भुंजमाणी विहरइ' कालनामा तत्पुत्र, 'सोमालपाणिपाए' इत्यादि प्रागुक्तवर्णकोपेतो वाच्यः यावत् 'पासाइए दरिसणिज्जे अभिरूवे पडिरूवे' इति पर्यन्तः । 'सेणियस्स रज्जे दुवे रयणा अट्ठारसवंको हारो सेअणगहत्थी, तत्थ किर सेणियस्स रन्नो जावइयं रज्जस्स मुल्लं तावइयं देवदिन्नस्स हारस्स सेयणस्स य गंधहत्थिस्स य, तत्थ हारस्स उप्पत्ति पत्थावे कहिज्जिस्सइ, कूणियस्स एत्थेव उप्पत्ती वित्थरेण भणिस्सइ, तत्कार्येण कालादीनां मरणसम्भवादारम्भसङ्ग्रामतो नरकयोग्यकर्मोपचयविधानात्, नवरं कूणिकस्तदा कालादिदशकुमारान्वितश्चपायां राज्यं चकार, सर्वेऽपि च ते दोगुंदगदेवा इव कामभोगपरायणास्त्रयास्त्रिंशाख्या देवा. फुट्टमाणेहिं मुइंगमत्थएहिं वरतरुणिसंपणिएहिं बत्तीसइपत्तनिबद्धेहिं नाडएहिं उवगिज्जमाणा भोगभोगाइं भुंजमाणा विहरंति, हल्लविहल्लनामाणो कूणियस्स चेल्लणादेविअंगजा दो भायरा अन्नेवि अत्थि । अहुणा हारस्स उप्पत्ती भन्नइ-एत्थ सक्को सेणियस्स भगवंत पइ निच्चलभत्तिस्स पसंसं करेइ, तओ सेडुयस्स जीवो देवो तब्भत्तिरंजिओ सेणियस्स तुट्ठो संतो अट्ठारसवंकं हारं देइ, दोन्नि य वट्टगोलए देइ, सेणिएण सो हारो चेल्लणाए दिण्णो पियत्ति काउं, वट्टदुगं सुनंदाए अभयमातिजणणीए, ताए रुट्ठाए किं अहं चेडरूवत्ति काऊण अच्छाडिया भग्गा, तत्थ एगंमि कुंडलजुअलं एगंमि वत्थजुअलं तुट्ठाए गहियाणि, अन्नया अभओ सामिं पुच्छइ को अपच्छिमो रायरिसित्ति ? सामिणा उदायिणो वागरिओ अओ-

परं वद्धमउडा न पव्वयंति, ताए अभएणं रज्जं दिज्जमाणं न इच्छियंति। सेणिओ चिंतेइ 'कोणियस्स दिज्जिहि' ति हल्लस्स हत्थी दिन्नो सेयणगो वेहल्लस्स देवदिन्नो हारो अभएण वि पव्वयंतेणं सुनंदाए खोमजुअलं कुंडलजुअलं च हल्लविहल्लाणं दिन्नाणि। महया विहवेणं अभओ नियजणणीसमेओ पव्वइओ। सेणियस्स चेल्लणादेवीअंगसमुब्भूया तिन्निपुत्ता कूणिओ हल्लविहल्ला य, कूणियस्स उप्पत्ती एत्थेव भणिस्सइ, कालीमहाकालीपमुहदेवीणं अन्नासिं तणया सेणियस्स वहवे पुत्ता कालपमुहा संति। अभयंमि गहियव्वए अन्नया कोणिओ कालाइहिं दसहिं कुमारेहिं समं मंतेइ-सेणियं सेच्छाविग्घका-रयं बंधित्ता एक्कारसभाए रज्जं करेमो त्ति। तेहिं पडिसुयं, सेणिओ बद्धो पुव्वह्णे अवरह्णे य कससयं दवावेइ, सेणियस्स कूणिओ पुव्वभववेरियत्तणेण चेल्लणाए कयाइ ढोयं न देइ भत्तं वारियं, पाणियं न देइ ताहे चेल्लणा कहवि कुम्मासे वालेहिं बंधिता सयारवसुरं च पवेसेइ सा किर धोव्वइ सयवारे सुरापाणियं सव्वं होइ तीए पहावेण से वेयणं न वेएइ। अन्नया तस्स पउमावईदेवीए पुत्तो एवं पिओ अत्थि। मायाए सो भणिओत्ति-दुरात्मन्! तव अंगुली किमिए वमंती पिया मुहे काऊण आत्थियाओ इयरहा तुमं रोवंतो चेव चिट्ठेसु ताहे चित्तं मणागुवसतं जायं, मए पिया एवं वसणं पाविओ तस्स अधिई जाया भुंजंतओ चेव उट्ठाय परसुहत्थो गओ अन्ने भणंति लोहदंडं गहाय 'नियलाणि भंजामि' त्ति पहाविओ रक्खवा-लगो नेहेण भणइ-एसो सो पावो लोहदंडं परसुं वा गहाय एइ त्ति सेणिएणं चिंतिअं-न नज्जइ केण कुमरणेण मारेही, तओ तालपुडगं विसं खइयं जाव एइ ताव मओ सुट्ठुयरं अधिई जाया, ताहे मयकिच्चं काऊण घरमागओ रज्जधुरामुक्कत-तीओ तं चेव चिंततो अच्छइ एवं कालेण विसोगो जाओ, पुणरवि सयणआसणाईए पिइसंतिए दट्ठूण अधिई होइ, तओ

रायगिहाओ निग्गतु चपं रायहाणिं करेइ, एवं चंपाए कूणिओ राया रज्जं करेइ नियमायपमुहसयणसंजोगओ इह निरयावलियासुयक्खंधे कूणिकवक्तव्यतादावुत्क्षिप्ता, तत्साहाय्यकरणप्रवृत्तानां कालादीनां कुमाराणां दशानामपि सङ्ग्रामे रथमुशलाख्ये प्रभूतजनक्षयकरणेन नरकयोग्यकर्मोपार्जनसम्पादनान्नरकगामितया ' निरयाउ ' त्ति प्रथमाध्ययनस्य कालादिकुमारवक्तव्यताप्रतिबद्धस्यैतन्नाम। अथ रथमुशलसङ्ग्रामस्योत्पत्तौ किं निबन्धनं ? अत्रोच्यते–एवं किलायं सङ्ग्रामः सञ्जातः, चम्पायां कूणिको राजा राज्यं चकार। तस्यानुजौ हल्लविहल्लाभिधानौ भ्रातरौ पितृदत्तसेचनकाभिधाने गन्धहस्तिनि समारूढौ दिव्यकुण्डलादिव्यहारदिव्यवसनविभूषितौ विलसन्तौ दृष्ट्वा पद्मावत्यभिधाना कूणिकराजस्य भार्या कदाचिद्दन्तिनोऽपहाराय तं कूणिकराजं प्रेरितवती–" कर्णविपलगत्वेऽयमेव कुमारो राजा तत्त्वतो न त्वम् यस्येदृशा विलासाः " प्रज्ञाप्यमानाऽपि सा न कथञ्चिदस्यार्थस्योपरमति, तत्प्रेरितकूणिकराजेन तौ याचितौ, तौ च तद्भयाद्वैशाल्यां नगर्यां स्वकीयमातामहस्य चेटकाभिधानस्य राज्ञोऽन्तिके सहस्तिकौ सान्तःपुरपरिवारौ गतवन्तौ, कूणिकेन च दूतप्रेषणेन तौ याचितौ, न च तेन प्रेषितौ, कूणिकस्य तयोश्च तुल्यमातृकत्वात् ततः कूणिकेन भणितम्–यदि न प्रेषयसि तदा युद्धसज्जो भव, तेनापि भणितम्–' एष सज्जोऽस्मि, तत. कूणिकेन कालादयो दश स्वकीया भिन्नमातृका भ्रातरो राजानश्चेटकेन सह सङ्ग्रामायायाताः। तत्रैकैकस्य त्रीणि त्रीणि हस्तिनां सहस्राणि, एवं रथानामश्वानां मनुष्याणां च प्रत्येकं तिस्रः तिस्रः कोट्यः कूणिकस्याप्येवमेव तत एकादशभागीकृतराज्यस्य कूणिकस्य कालादिभिः सह, निजेन एकादशांशेन सङ्ग्रामे कालः उपागतः एतमर्थं वक्तुमाह– तए णं से काले ' इत्यादिना एनं च व्यतिकरं ज्ञात्वा चेटकेनाऽप्यष्टादश गणराजानो मेलिताः, तेषां चेटकस्य च प्रत्येकमेवमेव

चेटकराजस्य तु प्रतिपन्नव्रतत्वेन दिनमध्ये एकमेव शरं मुञ्चत्यमोघबाणश्च सः, हस्त्यादिबलपरिमाणम्, ततो युद्धं सम्प्रलग्नम्, चेटकसैन्ये सागरव्यूहो विरचितः। ततश्च कूणिकस्य कालो दण्डनायको निजबलान्वितो तत्र कूणिकसैन्ये गरुडव्यूहः, ततस्तेन शरनिपातेनासौ निपातितो भग्नं च कूणिकबलम्, गते च द्वे अपि बले निजं युद्ध्यमानस्तावद्गतो यावच्चेटकः, निजबलान्वितो युद्ध्यमानस्तावद्गतो यावच्चेटकः, एवं सोऽप्येक- निजमावासस्थानम्। द्वितीयेऽह्नि सुकालो नाम दण्डनायको सोऽप्येवम्। चतुर्थेऽह्नि कृष्णकुमारः, सोऽप्येवमेव। पञ्चमे सुकृष्णः ५। षष्ठे शरेण निपातितः। एवं तृतीयेऽह्नि महाकालः अष्टमे रामकृष्णः ८। नवमे पितृसेनकृष्णः ९। दशमे पितृमहासेनकृष्णः १०। महाकृष्णः ६। सप्तमे वीरकृष्णः ७। एवं दशसु दिनेषु चेटकेन विनाशिता दशापि कालादयः। एकादशे तु दिवसे चेटक- चेटकेन एकैकशरेण निपातिताः। ततः शक्रचमरावागतौ, ततः शक्रो बभाषे—चेटकः श्रावक इत्यहं न तं जयार्थं देवताराधनाय कूणिकोऽष्टमभक्तं प्रजग्राह, ततोऽसौ तद्रक्षार्थं वज्रप्रतिरूपमभेद्यकवचं कृतवान्। चमरस्तु द्वौ सङ्ग्रामौ विकुर्वित- प्रति प्रहरामि नवरं भवन्तं संरक्षामि, तत्र महाशिलेव कण्टकजीवभेदकत्वान्महाशिलाकण्टकः, ततश्च यत्र तृणशूला- वान्, महाशिलाकण्टकः रथमुशलं चेति, महाशिलाकण्टकेनेवास्याहतस्य वेदना जायते स सङ्ग्रामो महाशिलाकण्टक एवोच्यते। 'रथमुशले' दिनाऽप्यभिहतस्याश्वहस्त्यादेर्महाशिलाकण्टकेनेवास्याहतस्य वेदना जायते स सङ्ग्रामो महाशिलाकण्टक एवोच्यते। 'रथमुशले' इति यत्र रथो मुशलेन युक्तः परिधावन् महाजनक्षयं कृतवान् असौ रथमुशलः। 'ओपाए' इति उपपातः संप्राप्तः 'किं जइ- स्सइ' इति जयश्लाघां प्राप्स्यति पराजेष्यते अभिभविष्यति परसैन्यं परानभिभविष्यति उत नेत्यादि। श्रीनिरयावलिसूत्रवृत्तौ।

इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्यो-

पाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे निरयावलिविचारनामाऽष्टमस्तरङ्गः ॥ ८ ॥

यस्मादत्र समग्रो, व्यवहारो जृम्भते जगन्मध्ये । तदहं धृतबहुमानं, त्रिविधेन सेवे श्रुतज्ञानम् ॥ १ ॥

अथ नन्दीसूत्रविचारा लिख्यन्ते—तत्र पूर्वं श्रीजिनप्रासादसञ्ज्ञाचाक्षराणि लिख्यन्ते—

संवरवरजलपगलिय—उज्झरपविरायमाणहारस्स । सावगजणपउररवंत—मोरनच्चंतकुहरस्स ॥ १५ ॥ व्याख्या—'संवर' इत्यादि, संवरः—प्राणातिपातादिरूपपञ्चाश्रवप्रत्याख्यानरूपः तदेव कर्ममलप्रक्षालनात्सांसारिकतृडपनोदकारित्वात् परिणामसुन्दरत्वाच्च वरजलमिव संवरवरजलं तस्य प्रगलितः—सातत्येन व्यूढ उज्झरः—प्रवाहः स एव प्रविराजमानो हारो यस्य स तथा तस्य, श्रावकजना एव स्तुतिस्तोत्रस्वाध्यायाद्याराधनमुखरतया प्रचुरा रवन्तो मयूरास्तैर्नृत्यन्तीव कुहराणि—जिनमण्डपादिरूपाणि यस्य स तथा तस्य इति नन्दीवृत्तौ १६२ प्रतौ ४२ पत्रे ॥ १ ॥

अथ केचनाऽज्ञानिनः स्त्रीणां मुक्तिं न मन्यन्ते, तद्युक्तियुक्तसिद्धान्तेन निराकर्तुं लिख्यते—

से किं तं अणंतरसिद्धकेवलनाणं ? अणंतरसिद्धकेवलनाणं पन्नरसविहं पन्नत्तं तंजहा—तित्थसिद्धा १ अतित्थसिद्धा २ तित्थयरसिद्धा ३ अतित्थयरसिद्धा ४ सयंबुद्धसिद्धा ५ पत्तेयबुद्धसिद्धा ६ बुद्धबोहियसिद्धा ७ इत्थिलिंगसिद्धा ८ पुरिसलिंगसिद्धा ९ नपुंसगलिंगसिद्धा १० सलिंगसिद्धा ११ अन्नलिंगसिद्धा १२ गिहिलिंगसिद्धा १३ एगसिद्धा १४ अणेगसिद्धा १५ से तं अणंतरसिद्धकेवलनाणं ॥ इति । वृत्तिर्यथा—'से किं तं' इत्यादि, अथ किं तदनन्तरसिद्धकेवलज्ञानम् ? सूरिराह—अनन्तरसिद्धकेवलज्ञानं पञ्चदशविधं प्रज्ञप्तम्, पञ्चदशविधता चास्यानन्तरपाश्चात्यभवरूपोपाधिभेदापेक्षया पञ्चदशविधत्वात्,

ततोऽनन्तरभवोपाधिभेदतः पञ्चदशविधतां मुख्यत आह-तद्यथेत्युपदर्शने 'तित्थसिद्धा' इत्यादि, तीर्यते संसारसागरोऽनेनेति तीर्थ-यथावस्थितसकलजीवाजीवादिपदार्थप्ररूपकं परमगुरुप्रणितप्रवचनम्, तच्च निराधारं न भवतीति कृत्वा सङ्घः प्रथमगणधरो वा वेदितव्यम्, उक्तं च—"तित्थं भंते! तित्थं तित्थकरे तित्थं? गोयमा! अरहा ताव तित्थंकरे तित्थं पुण चाउव्वण्णो समणसंघो पढमगणहरो वा" तस्मिन् उत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः १, तथा तीर्थस्याऽभावोऽतीर्थः तीर्थस्याभावश्च-अनुत्पादः अपान्तराले व्यवच्छेदो वा तस्मिन् ये सिद्धास्तेऽतीर्थसिद्धाः, तत्र तीर्थानुत्पादे सिद्धा मरुदेवीप्रभृतयः, न हि मरुदेव्यादिसिद्धिगमनकाले तीर्थमुत्पन्नमासीत्, तथा तीर्थव्यवच्छेदश्चन्द्रप्रभस्वामिसुविधिस्वाम्यपान्तराले तत्र ये जातिस्मरणादिनाऽपवर्गमवाप्य सिद्धास्ते तीर्थव्यवच्छेदे सिद्धाः२, तथा तीर्थङ्कराः सन्तो ये सिद्धास्ते तीर्थङ्करसिद्धाः३, अतीर्थकरसिद्धा-अन्ये सामान्यकेवलिनः४, तथा स्वयम्बुद्धाः सन्तो ये सिद्धास्ते स्वयम्बुद्धसिद्धाः ५, तथा प्रत्येकबुद्धाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः६, अथ स्वयम्बुद्धप्रत्येकबुद्धानां कः प्रतिविशेषः? उच्यते बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथा हि-स्वयम्बुद्धा बाह्यप्रत्ययमन्तरेणैव बुद्ध्यन्ते स्वयमेव-बाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना बुद्धाः स्वयम्बुद्धाः इति व्युत्पत्तेः, ते च द्विधा तीर्थकरास्तीर्थकरव्यतिरिक्ताश्च इह तीर्थकरव्यतिरिक्तैराधिकारः, आह च चूर्णिकृत् "ते दुविहा तित्थयरा तित्थयरवतिरित्ता वा इह वतिरित्तेहिं अहिगारो" इति, प्रत्येकबुद्धास्तु बाह्यप्रत्ययमपेक्ष्य बुद्ध्यन्ते प्रत्येकं-बाह्यं वृषभादिकं कारणमभिसमीक्ष्य बुद्धाः-प्रत्येकबुद्धा इति व्युत्पत्तेः, तथा च श्रूयते-बाह्यवृषभादिककारणसापेक्ष्य करकण्ड्वादीनां बोधिः, बहिः प्रत्ययमपेक्ष्य च बुद्धाः सन्तो नियमतः प्रत्येकमेव विहरन्ति न गच्छवासिन इव संहिताः, आह च

चूर्णिकृत्—' पत्तेय बाह्य वृषभादिकारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धा , बहिःप्रत्ययप्रतिबुद्धानां च पत्तेय नियमा विहारो जम्हा तम्हा य ते पत्तेयबुद्धा " इति, तथा स्वयम्बुद्धानामुपधिर्द्वादशविध एव पात्रादिकः, प्रत्येकबुद्धानां तु द्विधा–जघन्यतः उत्कर्षतश्च, तत्र जघन्यतो द्विविध उत्कर्षतो नवविधप्रावरणवर्जः, आह च चूर्णिकृत्—" पत्तेयबुद्धाण जहन्नेण दुविहो उक्कोसेण नवविहो नियमा पावरणवज्जो भवइ " तथा स्वयम्बुद्धाना पूर्वाधीत श्रुत भवति वा न वा यदि भवति ततो लिङ्ग देवता प्रयच्छन्ति गुरुसन्निधौ वा गत्वा लिङ्ग प्रतिपद्यते, यदि चैकाकी विहरणसमर्थ इच्छा च तस्य तथारूपा जायते तत एकाकी विहरत्यन्यथा गच्छवासेऽवतिष्ठते, अथ पूर्वाधीत श्रुत न भवति तर्हि नियमाद् गुरुसन्निधे गत्वा लिङ्ग प्रतिपद्यते गच्छ चावश्य न मुञ्चति, उक्त च चूर्णिकृता—" पुव्वाधीय से सुय हवइ वा न वा जइ से नत्थि तो लिंग नियमा गुरुसन्निहे पडिवज्जइ गच्छे य विहरइ त्ति, पुव्वाधीयसुअसंभवो अत्थि तो से लिंग देवया पयच्छइ गुरुसन्निधे वा पडिवज्जइ जइ एग-विहारविहरणजोग्गो इच्छा वा से तो एक्को चि विहरइ अन्नहा गच्छे चेव विहरइ " इति, प्रत्येकबुद्धाना तु पूर्वाधीत श्रुत नियमतो भवति तच्च जघन्यत एकादशाङ्गानि उत्कर्षत किञ्चिन्न्यूनानि दशपूर्वाणि तथा लिङ्ग तस्मै देवता' प्रयच्छन्ति लिङ्गरहितो वा कदाचिद्भवति, तथाऽऽह चूर्णिकृत्—" पत्तेयबुद्धाण पुव्वाधीअं सुअं नियमा हवइ जहन्नउ इक्कारसअंगाइं उक्कोसेण भिन्नदसपुव्वाइं लिंग च से देवया पयच्छइ लिंगवज्जिओ वा भवइ जतो भणिय कप्प पत्तेयबुद्धा " इति, तथा बुद्धा–आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धाः, एते च केचित्स्त्रीलिङ्गसिद्धा , स्त्रियो लिङ्ग स्त्रीलिङ्ग स्त्रीत्व-स्योपलक्षणमित्यर्थः, तच्च त्रिधा तद्यथा–वेद शरीरनिर्वृत्तिर्नेपथ्य च, तत्रेह शरीरनिर्वृत्त्या प्रयोजन न वेदनेपथ्याभ्यां वेदे

सति सिद्धत्वाभावात् नेपथ्यस्य चाप्रमाणत्वात्, आह च चूर्णिकृत्—" इत्थीए लिंगं इत्थीलिंगं इत्थीए उवलक्खणं वुत्तंति भवति तं च तिविहं वेओ सरीरनिव्वत्ती नेवत्थं च, इह सरीरनिव्वत्तीए अहिगारो न वेद नेवत्थेहिं ति " तस्मिन् स्त्रीलिङ्गे वर्त्तमानाः सन्तो ये सिद्धास्ते स्त्रीलिङ्गसिद्धाः ८, एतेन यदाहुराशाम्बरा न स्त्रीणां निर्वाणमिति तदपास्तं द्रष्टव्यम्, स्त्रीनिर्वाणस्य साक्षादनेन सूत्रेणाभिधानात्तत्प्रतिषेधस्य च युक्त्यनुपपन्नत्वात् । तथा हि–मुक्तिपथो ज्ञानदर्शनचारित्राणि " सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः " इति वचनात्सम्यग्दर्शनादीनि च पुरुषाणामिव स्त्रीणामप्यविकलानि, तथा हि–दृश्यन्ते स्त्रियोऽपि सकलमपि प्रवचनार्थमभिरोचयमानाः, जानते च षडावश्यककालिकोत्कालिकादिभेदभिन्नं श्रुतम्, परिपालयन्ति च सप्तदशविधमकलङ्कं संयमम्, धारयन्ति च देवासुराणामपि दुर्द्धरं ब्रह्मचर्यम्, तप्यन्ते च तपांसि मासक्षपणादीनि, ततः कथमिव तासां न मोक्षसम्भवः ? स्यादेतदस्ति स्त्रीणां सम्यग्दर्शनं ज्ञानं च न पुनश्चारित्रं संयमाभावात्, तथा हि–स्त्रीणामवश्यं वस्त्रपरिभोगेन भवितव्यमन्यथाऽविवृताङ्ग्यस्तास्तिर्यस्त्रिय इव पुरुषाणामभिभवनीया भवेयुः, लोके च गर्होपजायते ततोऽवश्यं ताभिर्वस्त्रं परिभोक्तव्यम्, वस्त्रपरिभोगे च सपरिग्रहता सपरिग्रहत्वे च संयमाभाव इति, तदसमीचीनं सम्यग्सिद्धान्तापरिज्ञानात्, परिग्रहो हि परमार्थतो मूर्च्छाभिधीयते ' मुच्छा परिग्गहो वुत्तो ' इति वचनप्रामाण्यात्, तथा हि मूर्च्छारहितो भरतश्चक्रवर्ती सान्तःपुरोऽप्यादर्शकगृहेऽवतिष्ठमानो निष्परिग्रहो गीयते अन्यथा केवलोत्पादासम्भवात्, अपि च यदि मूर्च्छाया अभावेऽपि वस्त्रसंसर्गमात्रं परिग्रहो भवेत्ततो जिनकल्पप्रतिपन्नस्य कस्यचित्साधोस्तुषारकणानुषिक्ते प्रपतति शीते केनाप्यविपक्षोपनिपातमधशीतमीति विभाव्य धर्मार्थिना शिरसि वस्त्रे प्रक्षिप्ते तस्य सपरिग्रहता भवेत्, न चैतदिष्टं, तस्मान्न

ससर्गमात्रं परिग्रहः किन्तु मूर्च्छा, सा च स्त्रीणां वस्त्रादिषु न विद्यते धर्मोपकरणमात्रतया तस्योपादानात्, न खलु ता वस्त्र-मन्तरेणात्मानं रक्षितुमीशते नापि शीतकालादिष्वर्वाग्दशायां स्वाध्यायादि कर्त्तुम् । ततो दीर्घतरसंयमपरिपालनाय यत-नया वस्त्रं परिभुञ्जाना न ताः परिग्रहवत्यः । अथोच्येत सम्भवति नाम स्त्रीणामपि सम्यग्दर्शनादिकं रत्नत्रयं, परं न तत्स-म्भवमात्रेण मुक्तिपदप्रापकं भवति किन्तु प्रकर्षप्राप्तम्, अन्यथा दीक्षानन्तरमेव सर्वेषामप्यविशेषेण मुक्तिपदप्राप्तिप्रसक्तेः, सम्यग्दर्शनादिरत्नत्रयप्रकर्षश्च स्त्रीणामसम्भवी ततो न निर्वाणमिति तदप्ययुक्तम्, स्त्रीषु रत्नत्रयप्रकर्षासम्भवग्राहकस्य प्रमाण-स्याभावात्, न खलु सकलदेशकालव्याप्त्या स्त्रीषु रत्नत्रयप्रकर्षासम्भवग्राहकं प्रत्यक्षं अनुमानं वा प्रमाणं विजृम्भते, देशकाल विप्रकृष्टतया तत्र प्रत्यक्षस्याप्रवृत्तेः, तदप्रमाणवृत्तौ चाऽनुमानस्याप्यसम्भवात्, नापि तासु रत्नत्रयप्रकर्षासम्भवप्रतिपादकः कोऽप्यागमो विद्यते प्रत्युतसम्भवप्रतिपादकः स्थाने स्थानेऽस्ति, यथा-इदमेव प्रस्तुतं सूत्रं ततो न तासां रत्नत्रयप्रकर्षासम्भवः, अथ मन्येथा स्वभावत एवातपेनेव छाया विरुध्यते स्त्रीत्वेन रत्नत्रयप्रकर्षः ततस्तदसम्भवोऽनुमीयते तदयुक्तं युक्तिविरोधात्, तथा हि-रत्नत्रयप्रकर्षं स उच्यते यतोऽनन्तरं मुक्तिपदप्राप्तिः स चायोग्यवस्थाचरमसमये स चास्माकमप्रत्यक्षः, ततः कथं विरोधगतिः ? न हि अदृष्टेन सह विरोधः प्रतिपत्तुं शक्यते मा प्रापत् पुरुषेष्वातिप्रसङ्गः । ननु जगति सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टेनाध्यवसायेनावाप्यते नान्यथा, एतच्चोभयोरप्यावयोरागमप्रामाण्यबलतः सिद्धम्, सर्वोत्कृष्टे च द्वे पदे सर्वोत्कृष्टं दुःखस्थानं सर्वोत्कृष्टं सुखस्थानं च, तत्र सर्वोत्कृष्टं दुःखस्थानं सप्तमनरकपृथ्वी अतः परमदुःखस्थान-स्याभावात् सर्वोत्कृष्टं सुखस्थानं तु निःश्रेयसं ततः परमन्यस्य सुखस्थानस्यासम्भवात्, ततः स्त्रीणां सप्तम-

नरकपृथ्वीगमनमागमे निषिद्धं निषेधस्य च कारणं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्यपरिणत्यभावः, ततः सप्तमपृथ्वीगमननिषेधादवसीयते नास्ति स्त्रीणां निर्वाणं निर्वाणहेतोस्तथारूपसर्वोत्कृष्टमनोवीर्यपरिणत्यसम्भवात्, तथा चात्र प्रयोगः—असम्भवनिर्वाणं स्त्रियः सप्तमपृथ्वीगमनत्वाभावात् सम्मूर्च्छिमादिवत्तदेतदयुक्तम्, यतो यदि नाम स्त्रीणां सप्तमनरकपृथ्वीगमनं प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावः तत एतावता कथमवसीयते निःश्रेयसं प्रत्यपि तासां सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो ? न हि यो भूमिकर्षणादिकं कर्म कर्त्तुं न शक्नोति स शास्त्राण्यवगाढुं न शक्नोतीति प्रत्येतुं शक्यं प्रत्यक्षविरोधात्, अथ सम्मूर्च्छिमादिपूभयं प्रत्यपि सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्टः ततोऽप्यवसीयते, ननु यदि तत्र दृष्टस्तर्हि कथमत्रावसीयते ? न खलु बहिर्व्याप्तिमात्रेण हेतुर्गमको भवति किं त्वन्तर्व्याप्त्या, अन्तर्व्याप्तिश्च प्रतिबन्धबलेन सिध्यति, न चात्र प्रतिबन्धो विद्यते, न खलु सप्तमपृथ्वीगमनं निर्वाणगमनस्य कारणम्, नाप्येवमेवाविनाभाव-प्रतिबन्धेन सप्तमपृथ्वीगमनाविनाभाविनिर्वाणगमनम्, सप्तमपृथ्वीगमनमन्तरेणैव चरमशरीरिणां निर्वाणगमनभावात्, न च प्रतिबन्धमन्तरेणैकस्याभावेऽन्यस्याभावः, मा प्रापद्यस्य कस्यचिदेकस्याभावे सर्वस्याभावप्रसङ्गः, यद्येवं तर्हि कथं सम्मूर्च्छिमादिषु निर्वाणगमनाभावः ? इति उच्यते—तथाभवस्वाभाव्यात्, तथा हि—ते सम्मूर्च्छिमादयो भवस्वभावत एव सम्यग्दर्शनादिकं तथावत् प्रतिपत्तुं न शक्नुवन्ति ततो न तेषां निर्वाणसम्भवः, स्त्रियस्तु प्रागुक्तप्रकारेण यथावत्सम्यग्दर्शनादिरत्नत्रयसम्पद्योग्याः ततस्तासां न निर्वाणाभावः, अपि च भुजपरिसर्पा द्वितीयामेव पृथिवीं यावद्गच्छन्ति न परतः, परपृथ्वीगमनहेतुतथारूपमनोवीर्यपरिणत्यभावात्, तृतीयां यावत् पक्षिणः, चतुर्थीं चतुष्पदाः, पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्द्ध्वमुत्कर्षतः सहस्रारं

यावद्गच्छन्ति, तन्नाधोगतिविषयमनोवीर्यपरिणतेर्वैषम्यदर्शनादूर्ध्वगतावपि तद्वैषम्यम्, तथा च सति सिद्ध स्त्रीपुंसामधोगतिवैषम्येऽपि निर्वाणं सममिति कृत प्रसङ्गेन। तथा पुल्लिङ्गे शरीरनिर्वृत्तिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते पुल्लिङ्गसिद्धाः ९, एव नपुंसकलिङ्गसिद्धा १०, तथा स्वलिङ्गे रजोहरणादिरूपे व्यवस्थिता सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धाः ११, तथा अन्यलिङ्गे परिव्राजकादिसम्बन्धिनि वल्कलकषायादिवस्त्रादिरूपे द्रव्यलिङ्गे व्यवस्थिताः सन्तो ये सिद्धास्तेऽन्यलिङ्गसिद्धा १२, गृहिलिङ्गे सिद्धा गृहिलिङ्गसिद्धा मरुदेवीप्रभृतय १३, तथा एकस्मिन्नेकस्मिन् समये एकैकः सन्तो ये सिद्धास्ते एकसिद्धाः १४, अनेकसिद्धा इति एकस्मिन् समये अनेके सिद्धा अनेकसिद्धा १५, अनेके चैकस्मिन् समये सिध्यन्त उत्कर्षतोऽष्टोत्तरशतसङ्ख्या वेदितव्या। आह-ननु तीर्थसिद्धातीर्थसिद्धरूपभेदद्वये एव शेषा भेदा अन्तर्भवन्ति तत्किमर्थं शेषभेदोपादान ? उच्यते-सत्यमन्तर्भवन्ति पर न तीर्थसिद्धातीर्थसिद्धभेदद्वयोपादानमात्राच्छेषभेदपरिज्ञान भवति, विशेषपरिज्ञानार्थं च विशेषशास्त्रप्रयासः। इति नन्दीसूत्रवृत्तौ १६२ प्रतौ १०४। १०५ पत्रे ॥ २ ॥

निगोदादिजीवानामपि मतिश्रुतज्ञानानन्ताशोऽप्रावृतस्तिष्ठतीत्यभिप्रायो लिख्यते—

सव्वजीवाणपि अण अक्खरस्स अणतभागो निच्चुग्घाडिओ चिट्ठइ, जइ पुण सो वि आवरिज्जा तेण जीवो अजीवत्त पाविज्जा, सुट्ठु वि मेहसमुदए होइ पभा चदसूराण इति। वृत्तिर्यथा-' सव्वजीवाणपि ' इत्यादि, सर्वजीवानामपि णमिति वाक्यालङ्कारे, अक्षरस्य-श्रुतज्ञानस्य श्रुतज्ञान च मतिज्ञानाविनाभावि, ततो मतिज्ञानस्यापि अनन्तमो भागो नित्योद्घाटित सर्वदनावृतस्तिष्ठति, सोऽपि चानन्ततमो भागोऽनेकविधः, तत्र सर्वजघन्यश्चैतन्यमात्र तत् पुनः सर्वोत्कृष्टश्रुतावरणस्त्यान-

र्द्धिनिद्रोदयभावेऽपि नाव्रियते तथा जीवस्वाभाव्यात् । तथा चाह–' जइ पुण ' इत्यादि, यदि पुनः सोऽपि अनन्तो भाग आव्रियते तेन तर्हि जीवोऽजीवत्वं प्राप्नुयात् जीवो हि नाम चैतन्यलक्षणः, ततो यदि प्रबलश्रुतावरणस्त्यानर्द्धिनिद्रोदयभावे चैतन्यमात्रमप्याव्रियते तर्हि जीवस्य स्वस्वभावपरित्यागादजीवतैव सम्पनीपद्यते न चैतद्दृष्टमिष्टं वा, सर्वस्य सर्वथा स्वभावातिरस्कारात् । अत्रैव दृष्टान्तमाह–' सुट्ठुवि ' इत्यादि सुष्ठ्वपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः, इयमत्र भावना–यथा निविडनिविडतरमेघपटलैराच्छादितयोरपि सूर्यचन्द्रमसोर्नैकान्तेन तत्प्रभानाशः सम्पद्यते, सर्वस्य सर्वथा स्वभावापनयनस्य कर्त्तुमशक्यत्वात्, एवमनन्तानन्तैरपि ज्ञानावरणपरमाणुभिरेकैकस्यात्मप्रदेशस्यावेष्टितस्यापि नैकान्तेन चैतन्यमात्रस्याप्यभावो भवति । यतो यत्सर्वजघन्यं तन्मतिश्रुतात्मकं, अतः सिद्धोऽक्षरस्यानन्तमो भागो नित्योद्घाटितः, तथा च सति मतिज्ञानस्य श्रुतज्ञानस्य चानादिभावः प्रतिपद्यमानो न विरुध्यते, इति स्थितम् । इति नन्दीसूत्रवृत्तौ १६२ प्रतौ १६१ पत्रे ॥ ३ ॥

ननु महावीरस्येयन्तः श्रावका अभूवंस्तेषु मध्ये केन जिनप्रतिमा कारिता कस्य वा जिनप्रतिमाऽभूत् इत्यादिभिः, तथा इयत्सु श्रावकेषु केनोपधानानि व्यूढानि कुत्र वा शास्त्रे उपधानान्युक्तानि इत्यादिभिश्च, स्वकपोलकल्पितदुर्विकल्पैरनल्पयन्ति संसारं जल्पाकाः, ततस्तन्मतद्वयनिराकरणाय जिनप्रतिमाक्षराणि उपधानाक्षराणि चैकेनैव सूत्रेण लिख्यन्ते—

से किं तं उवासगदसाओ ? उवासगदसासु णं समणोवासगाणं नगराइं उज्जाणइं चेइआइं वणसंडाइं समोसरणाइं रायाणो अम्मापियरो धम्मायरिया धम्मकहाओ इहलोइअपरलोइया इड्ढिविसेसा भोगपरिच्चाया पव्वज्जाओ परियागा सुअपरिग्गहा तवोवहाणाइं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासपडिवज्जणया पडिमाओ उवसग्गा संलेहणाओ भत्त-

पच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायाईओ पुण बोहिलाभा अंतकिरिआओ अ आघविज्जति । उवासगदसाणं परित्ता वायणा संखिज्जा अणुओगदारा संखिज्जा वेढा संखिज्जा सिलोगा संखिज्जाओ निज्जुत्तीओ संखिज्जाओ संगहणीओ संखिज्जाओ पडिवत्तीओ, से णं अंगट्ठयाए सत्तमे अंगे एगो सुअक्खंधो दस अज्झयणा दस उद्देसणकाला दस समुद्देसणकाला संखिज्जा पयसहस्सा पयग्गेणं संखिज्जा अक्खरा अणंतागमा अणंता पज्जवा परित्ता तसा अणंता थावरा सासयकडनिबद्धनिकाइया जिणपन्नत्ता भावा आघविज्जंति पन्नविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति से एवं आया एवं नाया एवं विन्नाया एवं चरणकरणपरूवणा आघविज्जइ से तं उवासगदसाओ ॥ इति । वृत्तिर्यथा—' से किं तं ' इत्यादि, अथ कास्ता उपासकदशा उपासका —श्रावकास्तद्गताणुव्रतादि क्रियाकलापप्रतिबद्धदशा दश अध्ययनानि उपासकदशाः, तथा चाह सूरिः—' उवासगदसासु णं ' इत्यादि पाठसिद्धं यावन्निगमनम्, नवरं सङ्ख्येयानि पदसहस्राणि पदाग्रेणेति एकादशलक्षा• द्विपञ्चाशच्च सहस्राणि इत्यर्थः, द्वितीयं तु व्याख्यानं प्रागिव भावनीयम् । इति नन्दीसूत्रवृत्तौ १६२ प्रतौ १८३ पत्रे ॥ ४ ॥

इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरमध्यभागे नवमस्तरङ्गः ॥ ६ ॥

---

यदि भूरिभवाभोगश्रान्तिशान्त भवन्मनः । भगवद्वाग्वर्तीभक्तिभाजो भवत तद्ध्रुवम् ॥ १ ॥

अथ श्रीअनुयोगद्वारसूत्रवृत्तिविचारा लिख्यन्ते—तत्र च स्थापनाऽक्षराणि लिख्यन्ते—

से किं तं ठवणावस्सयं ? ठवणावस्सयं जन्नं कट्ठकम्मे वा १ चित्तकम्मे वा २ पोत्थकम्मे वा ३ लेप्पकम्मे वा ४ गंथिमे वा ५ वेढिमे वा ६ पूरिमे वा ७ संघाइमे वा ८ अक्खे वा ९ वराडए वा १० एगो वा अणेगो वा सब्भावट्ठवणाए वा असब्भावट्ठवणाए वा आवस्सए त्ति ट्ठवणा ठविज्जइ से तं ठवणावस्सयं । नामट्ठवणाणं को पइविसेसो ? नामं आवकहिअं, ठवणा इत्तरिआ वा होज्जा आवकहिआ वा ॥ इति । वृत्तिर्यथा—इदानीं स्थापनावश्यकनिरूपणार्थमाह—'से किं तं ' इत्यादि. अथ किं तत्स्थापनावश्यकं ? इति प्रश्ने सत्याह—'ठवणावस्सयं जण्णं' इत्यादि, तत्र स्थाप्यते—अमुकोऽयमभिप्रायेण क्रियते निर्वर्त्यत इति स्थापना—काष्ठकर्मादिगतावश्यकवत् साध्वादिरूपा सा चासौ आवश्यकतद्वतोरभेदोपचारादावश्यकं च स्थापनावश्यकम् स्थापनालक्षणं च सामान्यत इदम् "यत्तु तदर्थवियुक्तं, तदभिप्रायेण यच्च तत्करणि, लेप्यादिकर्म तत्स्थापनेति क्रियतेऽल्पकालं च ॥ १ ॥" इति, विनेयानुग्रहार्थमत्रापि व्याख्या—तुशब्दो नामलक्षणात्स्थापनालक्षणस्य भेदसूचकः स चासावर्थश्च तदर्थो भावेन्द्रभावावश्यकादिलक्षणः तेन वियुक्तं—रहितं यद्वस्तु तदभिप्रायेण क्रियते—स्थाप्यते तत्स्थापनेति सम्बन्धः । किंविशिष्टं यदित्याह—यच्च तत्करणि तेन भावेन्द्रादिना सह करणिः—सादृश्यं यस्य तत्तत्करणि—तत्सदृशमित्यर्थः, चशब्दात्तदकरणि चाक्षादिवस्तु गृह्यते, अतत्सदृशमित्यर्थः, किं पुनस्तदेवंभूतं वस्तु इत्याह—लेप्यादिकर्मेति—लेप्यादिपुत्तलिकादीत्यर्थः, आदिशब्दात् काष्ठपुत्तलिकादि वस्तु गृह्यते, अक्षादि वानाकारं, कियतं कालं तत्क्रियते इत्याह—अल्पः कालो यस्य तदल्पकालं—इत्वरकालमित्यर्थः, चशब्दाद्यावत्कथिकं च शाश्वतप्रतिमादि, यत्पुनर्भावेन्द्राद्यर्थरहितं साकारमनाकारं वा तदर्थाभिप्रायेण क्रियते तत्स्थापना, इति तात्पर्यमित्यार्यार्थः ॥१॥ इदानीं प्रकृतमुच्यते—'जणं' इति, णमिति वाक्यालङ्कारे, यत्काष्ठकर्मणि

वा चित्रकर्मणि वा यावद्वराटके वा एको वा अनेको वा सद्भावस्थापनया वा असद्भावस्थापनया वा 'आवस्सए' त्ति आवश्यकतद्वतोरभेदोपचारात्तद्वानिह गृह्यते, तत्रैको वा अनेको वा, कथम्भूताः ? अत उच्यते–आवश्यकक्रियावानावश्यकक्रियावन्तो वा 'ठवणा ठविज्जइ' त्ति स्थापनारूप स्थाप्यते क्रियते तत्स्थापनावश्यकमित्यादिपदेन सम्बन्धः, इति समुदायार्थः, काष्ठकर्मादिष्वावश्यकक्रियां कुर्वन्तो यत् स्थापनारूपाः साध्वादयः स्थाप्यन्ते तत्स्थापनावश्यकमिति तात्पर्यम् । अधुनाऽवयवार्थ उच्यते–तत्र क्रियत इति कर्म काष्ठे कर्म काष्ठकर्म काष्ठनिकुट्टित रूपकमित्यर्थः, चित्रकर्म–चित्रलिखित रूपकम्, 'पोत्थकम्मे य' त्ति पोत्थ–पोत वस्त्रमित्यर्थ, तत्र कर्म–तत्पल्लवनिष्पन्न धीउल्लिकारूपकमित्यर्थः, अथवा पोत्थ पुस्तक तच्चेह सम्पुटकरूप गृह्यते, तत्र कर्म तन्मध्ये वर्तिकालिखित रूपकमित्यर्थः, अथवा पोत्थ ताडपत्रादि तत्र कर्म–तच्छेदननिष्पन्न रूपकम्, लेप्यकर्म–लेप्यरूपकम्, ग्रन्थिम–कौशलातिशयाद्ग्रन्थिसमुदायनिष्पादितरूपकम्, वेष्टिम पुष्पवेष्टनक्रमेण निष्पन्नमानन्दपुरादिप्रतीतरूपम्, अथवा एक द्व्यादीनि वा वस्त्राणि वेष्टयन् कश्चिद्रूपकमुत्थापयति तद्वेष्टिमम्, पूरिम–भरिम पित्तलादिमयप्रतिमावत्, सङ्घातिम–बहुवस्त्रादिखण्डसङ्घातनिष्पन्न कञ्चुकवत्, अक्ष'–चन्दनको, वराटक'–कपर्दकः, अत्र वाचनान्तरेऽन्यान्यपि दन्तकर्मादिपदानि दृश्यन्ते तान्यप्युक्तानुसारतो भावनीयानि, वाशब्दाः पक्षान्तरसूचकाः, यथासम्भवमेवमन्यत्रापि एतेषु काष्ठकर्मादिष्वावश्यकक्रिया कुर्वन्त एकादिसाध्वादयः सद्भावस्थापनयाऽसद्भावस्थापनया वा स्थाप्यमानाः स्थापनावश्यकम्, तत्र काष्ठकर्मादिष्वाकारवती सद्भावस्थापना साध्वाकारस्य तत्र सद्भावात्, अक्षादिषु त्वनाकारवती असद्भावस्थापना साध्वाद्याकारस्य तत्रासद्भावादिति, निगमयन्नाह–'सेत' इत्यादि, तदेतत्स्थापनावश्यकमित्यर्थः । अत्र

नामस्थापनयोरभेदं पश्यन्निदमाह—'नामठ्ठवणाणं को पइविसेसो' त्ति, नामस्थापनयोः कः प्रतिविशेषो ? न कश्चिदित्यभिप्रायः, तथाह्यावश्यकादिभावार्थशून्ये गोपालदारकादौ द्रव्यमात्रे यथावश्यकादि नाम क्रियते, तत्स्थापनापि तथैव तच्छून्ये काष्ठकर्मादौ द्रव्यमात्रे क्रियते, अतो भावशून्ये द्रव्यमात्रे क्रियमाणत्वाविशेषान्नानयोः कश्चिद्विशेषः, अत्रोत्तरमाह—'नामं आवकहियं' इत्यादि, नाम यावत्कथिकं–स्वाश्रयद्रव्यस्याऽस्तित्वकथां यावदनुवर्त्तते, न पुनरन्तराप्युपरमते, स्थापना पुनरित्वरा–स्वल्पकालभाविनी वा स्यात् यावत्कथिका वा, स्वाश्रयद्रव्येऽवतिष्ठमानेऽपि काचिदन्तराऽपि निवर्त्तते, काचित्तु तत्सत्तां यावदवतिष्ठते इति भावः, तथाहि–नाम आवश्यकादिकं मेरुजम्बूद्वीपकलिङ्गमगधसुराष्ट्रादिकं वा यावत्स्वाश्रयो गोपालदारकदेहादिः शिलासमुच्चयादिर्वा समस्ति तावदवतिष्ठते इति तद्यावत्कथिकम्, स्थापना त्वावश्यकत्वेन योऽक्षः स्थापितः स क्षणान्तरे पुनरपि तथाविधप्रयोजनसम्भवे इन्द्रत्वेन स्थाप्यते पुनरपि च राजादित्वेनेत्यल्पकालीना, शाश्वतप्रतिमादिरूपा यावत्कथिका, तस्याश्चार्हदादिरूपेण सर्वदा तिष्ठतीति स्थापना इति व्युत्पत्तेः स्थापनात्वमवसेयम्, न तु स्थाप्यत इति स्थापना, शाश्वतत्वेन केनापि स्थाप्यमानत्वाभावादिति, तस्माद्भावशून्यद्रव्याधारसाम्येऽप्यस्त्यनयोः कालकृतो विशेषः। अत्राह—ननु यथा स्थापना काचिदल्पकालीना तथा नामापि किञ्चिदल्पकालीनमेव, गोपालदारकादौ विद्यमानेऽपि कदाचिदनेकनामपरावृत्तिदर्शनात्सत्यं, किन्तु प्रायो नाम यावत्कथिकमेव, यस्तु कश्चिदन्यथोपलम्भः सोऽल्पत्वान्नेह विवक्षित इत्यदोषः, उपलक्षणमात्रं चेदं कालभेदेनैतयोर्भेदकथनं, अपरस्यापि बहुप्रकारभेदस्य सम्भवात्, तथाहि–यथेन्द्रादिप्रतिमास्थापनायां कुण्डलाङ्गदादिभूषितः सन्निहितशचीवज्रादिराकार उपलभ्यते न तथा नामेन्द्रादौ, एवं यथा तत्स्थापनादर्शनाद्भावः समु-

ध्रसति नैवमिन्द्रादिनामश्रवणात्, यथा तत्स्थापनायां लोकस्योपयाचितेच्छापूजाप्रवृत्तिसमीहितलाभादयो दृश्यन्ते नैव नामेन्द्रादाविति, एवमन्यदपि वाच्यम् । इत्यनुयोगद्वारसूत्रहैमवृत्तौ १४८ प्रतौ ११ । १२ पत्रे ॥ १ ॥

केचिच्च श्रावकश्राविकाणां मुखवस्त्रिका निषेधयन्ति, अपरे च रजोहरणं भूमिप्रमार्जनमिति कृत्वा मुखाग्रे न स्थापनीयं किन्तु भूम्यामेव स्थापनीयम्, इत्यादि स्वस्वान्तःकल्पनाकवलितशुद्धधिषणाः स्वात्मना परेषां मुग्धबुद्धीनां चानन्तभवभ्रान्तिहेतवो भवन्ति, ततस्तदुपकाराय रजोहरणमुखवस्त्रिकादीनां सत्तासूचकाक्षराणि तेषां यथोचितव्यापारणाक्षराणि च लिख्यन्ते—

से किं त लोउत्तरियं भावावस्सयं जण्णं समणो वा समणी वा सावओ वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तत्तिव्वज्झवसाए तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए अन्नत्थ कत्थइ मणं अकुव्वमाणे [ उव्वत्ते जिणवयणधम्माणुरागरत्तमणे ] उभओ कालं आवस्सयं करेइ सेतं लोगुत्तरियं भावावस्सयं, सेतं नोआगमओ भावावस्सयं ॥ इति । वृत्तिर्यथा–' से किं तं लोउत्तरियं ' इत्यादि, अत्र निर्वचनम्–' लोउत्तरियं भावावस्सयं जण्णं ' इत्यादि, ' जण्णं ' ति णमिति वाक्यालङ्कारे, यदिदं श्रमणादयस्तच्चित्तादिविशेषणविशिष्टा उभयकालं प्रतिक्रमणाद्यावश्यकं कुर्वन्ति तल्लोकोत्तरिकं भावावश्यकमिति सण्टङ्कः, तत्र श्राम्यतीति श्रमणः–साधुः, श्रमणी–साध्वी, शृणोति साधुसमीपे जिनप्रणीतां सामाचारीमिति श्रावकः–श्रमणोपासकः, श्राविका–श्रमणोपासिका, वाशब्दाः समुच्चयार्थाः, तस्मिन्नेवावश्यके चित्तं–सामान्योपयोगरूपं यस्येति स तच्चित्तः, तस्मिन्नेव मनो–विशेषोपयोगरूपं यस्य स तन्मनाः, तत्रैव लेश्या–शुभपरिणामरूपा यस्येति स तल्लेश्यः,

तथा तदध्यवसितः—इहाध्यवसायोऽध्यवसितम्, ततश्च तच्चित्तादिभावयुक्तस्य सतस्तस्मिन्नेवावश्यकेऽध्यवसितं क्रियासम्पादनविषयमस्येति तदध्यवसितः, तथा तत्तीव्राध्यवसायः—तस्मिन्नेवावश्यके तीव्रं—प्रारम्भकालादारभ्य प्रतिक्षणं प्रकर्षयायि प्रयत्नविशेषलक्षणमध्यवसानं यस्य सः तथा, तथा तदर्थोपयुक्तस्तस्य—आवश्यकस्यार्थस्तदर्थस्तस्मिन्नुपयुक्तस्तदर्थोपयुक्तः प्रशस्ततरसंवेगविशुद्धयमानस्तस्मिन्नेव प्रतिसूत्रं प्रतिक्रियं चार्थेषूपयुक्त इत्यर्थः, तथा तदर्पितकरणः, करणानि—तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मिन्—आवश्यके यथोचितव्यापारनियोगेनार्पितानि नियुक्तानि येन स तथा, सम्यक् यथास्थानन्यस्तोपकरण इत्यर्थः, तथा तद्भावनाभावितस्तस्य—आवश्यकस्य भावना—अव्यवच्छिन्न—पूर्वपूर्वतरसंस्कारस्य पुनः पुनस्तदनुष्ठानरूपा तया भावितो-अङ्गाङ्गिभावेन परिणतावश्यकानुष्ठानपरिणामस्तद्भावनाभावितः, तदेवं यथोक्तप्रकारेण प्रस्तुतव्यतिरेकतोऽन्यत्र कुत्रापि मनोऽकुर्वन्नुपलक्षणत्वाद्वाचं कायं चान्यत्राकुर्वन्, एकार्थिकानि वा विशेषणान्येतानि प्रस्तुतोपयोगप्रकर्षप्रतिपादनपराणि, अमूनि च लिङ्गविपरिणामतः श्रमणीश्राविकयोरपि योज्यानि, तस्मात्तच्चित्तादिविशेषणविशिष्टाः श्रमणादय उभयकालं—उभयसन्ध्यं यदावश्यकं कुर्वन्ति तल्लोकोत्तरिकं भावमाश्रित्य भावश्चासावावश्यकं चेति वा भावावश्यकम्, अत्राप्यवश्यं करणादावश्यकत्वम्, तदुपयोगपरिणामस्य च सद्भावाद्भावत्वम्, मुखवस्त्रिकाप्रत्युपेक्षणरजोहरणव्यापारादिक्रियालक्षणदेशस्यानागमत्वान्नोआगमत्वं भावनीयम्। 'सेतं' इत्यादि निगमनम्। तदेवं स्वरूपत उक्तं भावावश्यकम्। इत्यनुयोगद्वारसूत्रहेमवृत्तौ १४८ प्रतौ २४ पत्रे ॥ २ ॥

अथ प्रमाणाङ्गुलस्वरूपं जिज्ञासया लिख्यते—

से किं त पमाणगुले ? पमाणगुले एगमेगस्स रण्णो चाउरंतचक्कवट्टिस्स अट्ठसोवण्णिए कागिणिरयणे छत्तले दुवालससिए अट्ठकण्णिए अहिगरणसठाणसठिए तस्स ण एगमेगा कोडी उस्सेहगुलविक्खभा त समणस्स भगवओ महावीरस्स अद्धगुल त सहस्सगुणिय पमाणगुल भवइ एएणगुलप्पमाणेण ॥ इति। वृत्तिर्यथा—उक्तमुत्सेधाङ्गुलम्, अथ प्रमाणाङ्गुल विवक्षुराह—'से किं त पमाणगुले' इत्यादि, सहस्रगुणितादुत्सेधाङ्गुलप्रमाणाज्जात प्रमाणाङ्गुलम्, अथवा परमप्रकर्षरूप प्रमाण प्राप्तमङ्गुल प्रमाणाङ्गुलम्, नातः पर बृहत्तरमङ्गुलमस्तीति भाव, यदिवा समस्तलोकव्यवहारराज्यादिस्थितिप्रणेतृत्वेन प्रमाणभूतोऽस्मिन्नवसर्पिणीकाले तावद्युगादिदेवो भरतो वा तस्याङ्गुल प्रमाणाङ्गुलम्, एतच्च काकिणीरत्नस्वरूपपरिज्ञानेन शिष्यव्युत्पत्तिलक्षण गुणाधिक्य पश्यस्तद्वारेण निरूपयितुमाह—' एगमेगस्स रण्णो ' इत्यादि, एकैकस्य राज्ञश्चतुरन्तचक्रवर्तिनोऽष्टसौवर्णिक काकिणीरत्न षट्तलादिधर्मोपेत प्रज्ञप्तम्, तस्यैकैका कोटिरुत्सेधाङ्गुलविष्कम्भा, तच्छ्रमणस्य भगवतो महावीरस्यार्द्धाङ्गुल, तत्सहस्रगुण प्रमाणाङ्गुल भवतीति समुदायार्थः। तत्रान्यान्यकालोत्पन्नानामपि चक्रिणां काकिणीरत्नतुल्यताप्रतिपादनार्थमेकैकग्रहणम्, निरुपचरितराजशब्दविषयज्ञापनार्थं राजग्रहणम्, दिक्त्रयभेदभिन्नसमुद्रत्रयहिमवत्पर्वतपर्यन्तसीमाचतुष्टयलक्षणा ये चत्वारोऽन्तास्तांश्चतुरोऽपि चक्रेण वर्त्तयति—पालयतीति चतुरन्तचक्रवर्ती तस्य—परिपूर्णषट्खण्डभरतभोक्तुरित्यर्थ, चत्वारि मधुरतृणफलान्येकः श्वेतसर्षप., षोडश श्वेतसर्षपा. एक धान्यमाषफलम्, द्वे धान्यमाषफले एका गुञ्जा, पञ्च गुञ्जा. एकः कर्ममाषकः, षोडश कर्ममाषका एक सुवर्णः एतैरष्टभि काकिणीरत्न निष्पद्यते। एतानि च मधुरतृणफलादीनि भरतचक्रवर्तिकालसम्भवीन्येव गृह्यन्ते, अन्यथा कालभेदेन तद्वैषम्यसम्भवे काकिणीरत्न सर्वचक्रिणां तुल्य न

स्यात्, तुल्यं चेष्यते तदिति, चत्वारि चतसृष्वपि दिक्षु द्वे ऊर्ध्वाध इत्येवं षट्तलानि यत्र तत्षट्तलम्, अथ उपरि पार्श्वतश्च प्रत्येकं चतसृणामस्रीणां भावाद्द्वादशास्रयः-कोट्यो यत्र तद्द्वादशास्रिकम्, कर्णिकाः-कोणास्तेषां चाध उपरि च प्रत्येकं चतुर्णां सद्भावादष्टकर्णिकम्, अधिकरणिः-सुवर्णकारोपकरणं तत्संस्थानेन संस्थितं-तत्सदृशाकारं समचतुरस्रमिति यावत्प्रज्ञप्तं-प्ररूपितम्, तस्य-काकिणीरत्नस्यैकैका कोटिरुत्सेधाङ्गुलप्रमाणविष्कम्भा द्वादशाप्यस्रय एकैकस्य उत्सेधाङ्गुलप्रमाणा भवन्तीत्यर्थः, अस्य समचतुरस्रत्वादायामो विष्कम्भश्च प्रत्येकमुत्सेधाङ्गुलप्रमाण इत्युक्तं भवति, यैव च कोटिरूर्ध्वीकृता आयाम प्रतिपद्यते सैव तिर्यक् व्यवस्थापिता विष्कम्भभाग् भवतीत्यायामविष्कम्भयोरेकतरनिर्णयेऽप्यपरनिश्चयः स्यादेवेति सूत्रे विष्कम्भस्यैव ग्रहणम्, तद्ग्रहणे चायामोऽपि गृहीत एव, समचतुरस्रत्वात्तस्येति, तदेवं सर्वत उत्सेधाङ्गुलप्रमाणमिदं सिद्धम्। यच्चान्यत्र 'चउरंगुलप्पमाणा सुवण्णवरकागिणी नेये'ति श्रूयते तन्मतान्तरं सम्भाव्यते, निश्चयं तु सर्ववेदिनो विदन्तीति। तदेकैककोटिगतमुत्सेधाङ्गुलं श्रमणस्य भगवतो महावीरस्यार्द्धाङ्गुलम्, कथमिदम्? उच्यते-श्रीमहावीरस्य सप्तहस्तप्रमाणत्वादेकैकस्य च हस्तस्य चतुर्विंशत्युत्सेधाङ्गुलमानत्वादष्टपष्ठ्यधिकशताङ्गुलमानो भगवानुत्सेधाङ्गुलेन सिद्धो भवति, स एव चात्माङ्गुलेन मतान्तरमाश्रित्य स्वहस्तेन सार्द्धहस्तत्रयमानत्वाच्चतुरशीत्यङ्गुलमानो गीयते, अतः सामर्थ्यादेकमुत्सेधाङ्गुलं श्रीमन्महावीरात्माङ्गुलापेक्षयाऽर्द्धाङ्गुलमेव भवति, येषां तु मतेन भगवानात्माङ्गुलेनाष्टोत्तरशताङ्गुलमानः स्वहस्तेन सार्द्धहस्तचतुष्टयमानत्वात्तन्मतेन भगवत एकस्मिन्नात्माङ्गुले एकमुत्सेधाङ्गुलं तस्य पञ्च नवभागा भवन्ति $1\frac{5}{9}$ अष्टपष्ठ्यधिकशतस्याष्टोत्तरशतेन भागापहारे एतावत एव भावात्, यन्मतेन तु भगवान् विंशत्य-

धिकमङ्गुलशत स्वहस्तेन पञ्चहस्तमानत्वात्तन्मतेन भगवत एकस्मिन्नात्माङ्गुल एकमुत्सेधाङ्गुलं तस्य च द्वौ पञ्चभागौ भवत $1\frac{2}{5}$ अष्टपञ्चयधिकशतस्य विंशत्यधिकशतेन भागे हृते इयत एव लाभात्। तदेवमिहाद्यमतमपेक्ष्यैकमुत्सेधाङ्गुलं भगवदात्माङ्गुलस्यार्द्धरूपतया प्रोक्तमित्यवसेयमिति। तदुच्छ्रयाङ्गुलं सहस्रगुणितं प्रमाणाङ्गुलं भवति, कथमिदमवसीयते? उच्यते-भरतश्चक्रवर्त्ती प्रमाणाङ्गुलेनात्माङ्गुलेन च किल विंशतिशतमङ्गुलानां भवति, भरतात्माङ्गुलस्य प्रमाणाङ्गुलस्य चैकरूपत्वात्, उत्सेधाङ्गुलेन तु पञ्चधनुःशतमानत्वात्, प्रतिधनुश्च षण्णवत्यङ्गुलसद्भावादष्टचत्वारिंशत्सहस्राण्यङ्गुलानां सम्पद्यते, अतः सामर्थ्यादेकस्मिन् प्रमाणाङ्गुले चत्वारिंशतान्युत्सेधाङ्गुलानां भवन्ति, विंशत्यधिकशतेनाष्टचत्वारिंशत्सहस्राणां च भागापहारे एतावतो लाभात्। यद्येवमुत्सेधाङ्गुलात्प्रमाणाङ्गुलं चतुःशतगुणमेव स्यात् कथं सहस्रगुणमुक्तम्? सत्यं, किन्तु प्रमाणाङ्गुलस्यार्द्धतृतीयोत्सेधाङ्गुलरूपं बाहल्यमस्ति, ततो यदा स्वकीयबाहल्येन युक्तं यथावस्थितमेवेदं चिन्त्यते तदोत्सेधाङ्गुलाच्चतुःशतगुणमेव भवति, यदा त्वर्द्धतृतीयोत्सेधाङ्गुललक्षणेन बाहल्येन शतचतुष्टयलक्षणं दैर्घ्यं गुण्यते तदाङ्गुलविष्कम्भा सहस्राङ्गुलदीर्घा प्रमाणाङ्गुलविषया सूचिर्जायते, इदमुक्तं भवति-अर्द्धतृतीयाङ्गुलविष्कम्भे प्रमाणाङ्गुले तिस्रः श्रेणयः कल्प्यन्ते, एका अङ्गुलविष्कम्भा शतचतुष्टयदीर्घा, द्वितीयाऽपि तावन्मानैव, तृतीयाऽपि दैर्घ्येण चतुःशतमानैव विष्कम्भे त्वर्द्धाङ्गुलम्, ततोऽस्यापि दैर्घ्याच्छतद्वयं गृहीत्वा विष्कम्भोऽङ्गुलप्रमाणः सम्पद्यते, तथा च सत्यङ्गुलशतद्वयदीर्घा अङ्गुलविष्कम्भा इयमपि सिद्धा, ततस्तिसृणामपि एतासामुपर्युपरि व्यवस्थापने उत्सेधाङ्गुलतोऽङ्गुलसहस्रदीर्घा अङ्गुलविष्कम्भा प्रमाणाङ्गुलस्य सूचिः सिद्धा भवति, तत इमां सूचिमधिकृत्योत्सेधाङ्गुलात्तत्सहस्रगुणमुक्तं वस्तुतस्तु चतुःशतगुणमेव, अत एव पृथ्वीपर्वतविमानान्यनेनैव

चतुःशतगुणेनार्द्धतृतीयाङ्गुललक्षणखविष्कम्भान्वितेनानीयन्ते, न तु सहस्रगुणया अङ्गुलविष्कम्भया सूच्येति, शेषं भावितार्थम्। इत्यनुयोगद्वारसूत्रवृत्तौ १४८ प्रतौ ६८ पत्रे ॥ ३ ॥

इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे अनुयोगद्वारविचारनामा दशमस्तरङ्गः ॥ १० ॥

कल्याणवल्लीजलदच्छटायै, प्रध्वस्तनिःशेषतमोघटायै। सुरासुरश्रेणिनिषेवितायै, नमोऽस्तु नित्यं श्रुतदेवतायै ॥ १ ॥

अथानेकशास्त्रान्तर्वर्त्तीनि मतान्तराणि लिख्यन्ते—

"मल्लिस्स णं अरहओ सत्तावन्नं मणपज्जवनाणीसते होत्था"। इति समवायाङ्गे। ज्ञाताधर्मकथाङ्गे तु—"अट्ठसया मणनाणीणं" ॥१॥ "सोलसदेवीसहस्सा वरनयणहियदइया" इति प्रश्नव्याकरणे ४ आश्रवे कृष्णस्य षोडश सहस्राः स्त्रीणाम्। ज्ञाताधर्मे तु—"रुप्पिणीपामोक्खाणं बत्तीसाए महिलासाहस्सीणं" ॥२॥ तथा श्रीजम्बूद्वीपप्रज्ञप्तिचतुर्दशे पत्रे—"पंचदस कुलगरा पण्णत्ता—सुमती १ पडिसुमती २ सीमंकरे ३ सीमंधरे ४ खेमंकरे ५ खेमंधरे ६ विमलवाहणे ७ चक्खुमं ८ जसमं ९ अभिचंदे १० चंदाभे ११ पसेणई १२ मरुदेवे १३ नाभी १४ उसभे १५" इति। स्थानाङ्गे च सावचूरिकप्रतौ १८१ पत्रे—समवायाङ्गसूत्रे च ७६ पत्रे—"पढमित्थविमलवाहण १, चक्खुम २ जसमं ३ चउत्थमभिचंदे ४। तत्तो पसेणईए ५, मरुदेवे चेव नाभी य ॥ १ ॥" इति सप्तैवेति ॥ ३ ॥ तथा "विजयवेजयंतजयंतअपराजियाणं भंते! देवाणं केवइयं कालं ठिती पण्णत्ता? गोयमा! जहन्नेणं बत्तीसं सागरोवमाइं, उक्कोसेणं तेत्तीसं सागरोवमाइं।" इति समवायाङ्गे ३२ समवाये। प्रज्ञा-

पनायां तु चतुर्थे पदे ७५ पत्रे–" विजयवेजयतजयतअपराजिएसु रा भंते ! देवाण केवइय कालं ठिती पण्णत्ता ? गोयमा ! जहन्नेण एकतीसं सागरोवमाइं उक्कोसेणं तेत्तीसं सागरोवमाइं " इति ॥ ४ ॥ समवायाङ्गसूत्रे ४६ पत्रे कृष्णजीवोऽममस्त्रयोदशस्तीर्थङ्करो भावीत्युक्तम्, अन्तकृत्सूत्रे तु–" इहेव जंबुद्दीवे दीवे भारहे वासे आगमिस्साए उस्सप्पिणीए पुण्डेसु जणवएसु सवदुवारे णगरे बारसमो अममो णाम अरहा भविस्सइ " इति ॥ ५ ॥ तथा ज्ञातानुसारेण द्रौपदी पञ्चमकल्पं गता । तथैव च श्रीहैमनेमिचरित्रे द्वादशे सर्गे–" आकर्ण्य तद्गुरुशुचो विमलाद्रिमीयुः, पांडोः सुता विदधिरेऽनशनं च तत्र । उत्केवला शिवमगुर्द्रुपदात्मजा तु, सा ब्रह्मलोकमगमत्परमर्द्धिधाम ॥ १ ॥ " एवमेव च श्रीशत्रुञ्जयमाहात्म्येऽपि–" पांडवानामनुप्रापुर्मुनिपञ्चशतानि च । सहस्रे द्वे शिवागारं, प्राप्तानन्तचतुष्टयम् ॥ १ ॥ द्रौपदी पञ्चमं कल्पमवाप्यानल्पपुण्यभृत् । अन्ये तु मुनयः केचिच्चिन्नं स्वर्गं च केचन ॥२॥ " इति । उत्तराध्ययनाद्वितीयाध्ययनचतुर्दशसहस्र्यां तु–" दोवई वि रायमईसगासे पव्वइअ काऊण अच्चुयकप्पं गया " इति ॥ ६ ॥ "पव्वइओ जो माया–सम्मत्तिउ वीरपायमूलंमि । सो अभयकुमा रस्सुणी, पत्तो विजयं वरविमाणं ॥ १ ॥ " इति श्रीऋषिमण्डलसूत्रे । हैमवीरचरित्रे तु द्वादशे सर्गे–" विविधाभिग्रहपूर्वं, पालयित्वा चिरं व्रतम् । मृत्वा सर्वार्थसिद्धेऽभूदभयः प्रवरः सुरः ॥ १ ॥ " इति ॥ ७ ॥ " श्रुत्वा तां देशनां भर्तुः, सम्यक्त्वं श्रेणिकोऽश्रयत् । श्रावकधर्मं त्वभयकुमाराद्याः प्रपेदिरे । ७६ । " इति श्रीहैमवीरचरित्रे ६ सर्गे । इत्यत्र श्रीवीराच्छ्रेणिकेन सम्यक्त्वं प्राप्तमित्युक्तम् । किंशोत्तराध्ययन ५८ गाथावचूर्णा तु " एवं थुणित्ताण स रायसीहो, अणगारसीहं परमाइ भत्तीए । सओरोहो सपरियणो सबधवो, धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥ " विमलेन विगतमिथ्यात्वमलेन चेतसो

॥ ८ ॥ “ओहिनाणसुए बुद्धे, सीससंघसमाउले । गामाणुगामं रीयंते, सावत्थि
पलवितः, इति। अत्र तु अनाथानगारादिति ॥ ८ ॥ “ओहिनाणसुए बुद्धे, ... राजप्रश्न्यां तु “जेणेव सावत्थी
नगरिमागए ॥ ३ ॥ ” इत्यत्र त्रयोविंशोत्तराध्ययनतृतीयगाथायां केशीगणधरस्त्रिज्ञानी । राजप्रश्न्यां तु “जेणेव सावत्थी
णगरी कोट्ठए चेइए केशीकुमारसमणे पंचहिं अणगारसएहिं संपरिवुडे चउनाणी । ” इत्यादि, अत्र तु चतुर्ज्ञानी ॥ ९ ॥
“चेडयकोणियजुज्झे, चुलसीछन्नवइलक्खमणुयाणं । रहमुसलंमि य नेया, महासिलाकंटए चेव ॥ १ ॥ वरुणो सोहम्मंमि य,
तम्मित्तो अ मणुसगईए । नवलक्खमच्छउअरे, सेसा पुण तिरियनरएसु ॥ २ ॥ ” तथा श्राद्धप्रतिक्रमणवृत्ता-
वपि-नवलक्षा मत्स्यगर्भे उत्पन्नाः । भगवतीसप्तमशतकनवमोद्देशके तु “तत्थ णं दससहस्सा उ एगाए मच्छियाए कुच्छिंसि
उववन्ना । ” इति ॥ १० ॥ “सत्तसु खित्तजवियणा, अन्नुन्नकया वि पहरणेहि विणा । पहरणकया वि पंचसु, तिसु परमाहम्मिय-
कया वि ॥ १ ॥ ” इति संघयणिसूत्रे । हैमत्रिषष्ठिशलाकापुरुषचरिते सप्तमपर्वणि तु “सिंहादिरूपैर्विकृतैस्तत्र शम्बूकरावणौ ।
लक्ष्मणेन समं क्रुद्धौ, युध्यमानौ ददर्श सः ॥ ४६ ॥ नैवं वो युध्यमानानां, दुःखं भावीति वादिनः । परमाधार्मिकाः क्रुद्धा,
अग्निकुण्डेषु तान्न्यधुः ॥ ४७ ॥ दह्यमानास्त्रयोऽप्युच्चैः, रटन्तो गलिताङ्गकाः । ततः कृष्ट्वा तप्ततैलकुम्भ्यां निदधिरे बलात् ॥ ४८ ॥ ”
अत्र चतुर्थ्यामपि परमाधार्मिककृता पीडोक्तेति ॥ ११ ॥ तथा “सहसारंतियदेवा, नारयनेहेण जंति तइयभुविं । निज्जंति
अच्चुयंता, अच्चुयदेवेण इयरसुरा ॥ १ ॥ ” इति पञ्चसङ्ग्रहे । हैमवीरचरित्रदशमसर्गे तु “एवमाकर्ण्य सीतेन्द्रो, रामचन्द्रं
प्रणम्य च । ययौ प्राक् स्नेहवशतो, दुःखभाग् यत्र लक्ष्मणः ॥ १ ॥ ” ॥ १२ ॥ “सोलसरोगायंका, सहिया स(अ)ह
चक्किणा चउत्थेण । वासगहस्सा सत्त उ, सामन्नधुरं उवगएणं ॥ १०६ ॥ ” इति मरणसमाधिप्रकीर्णके । ऋषिमण्डलसूत्रे तु

" कइ १ अभत्तसद्धा २, तिव्वा वियणा उ अच्छि ३ कुच्छीसु ४। कास ५ सास च ६ जर ७ अहियासइ सत्त वाससए ॥ १ ॥ " ॥ १३ ॥ भगवतीप्रान्ते " चुलसीति सयसहस्सा, पदाण पवरणाणदसीहिं । भावाभावमणंता, पण्णत्ता एत्थ पंचमगंमि "। नन्दीसूत्रे तु–" विवाहपन्नत्तीए दोलक्खा अट्ठासीइ पयसहस्साइ पयग्गेण संखेज्जा अक्खरा "। समवायाङ्गे तु " विवाहपन्नत्तीए चउरासीपयसहस्सा पयग्गेण पण्णत्ता " इति ॥ १४ ॥ " नवमो आणयइंदो, दसमो उण पाणयत्थदेविंदो। आरण इक्कारसमो, बारसमो अच्चुए इंदो ॥ ६३ ॥ एए बारस इंदा, कप्पवई कप्पसामिया भणिया। आणाईसरियत्त, तेण पर णत्थि देवाण ॥ ६४ ॥ " इति देवेन्द्रस्तवे द्वादशेन्द्राः प्रोक्ताः ॥ १५ ॥ " इच्चेइयाइ भंते ! चत्तारि भासज्जायाइ आउत्त भासमाणे किं आराहए विराहए ? गोयमा ! इच्चेइयाइ चत्तारि भासज्जायाइ आउत्त भासमाणे आराहए णो विराहए। " प्रज्ञापना १२ पदे सावचूरौ २६७ पत्रे। श्रीदशवैकालिके ७ अध्ययने तु " चउन्न खलु भासाण, परिसंखाय पन्नव। दोण्ह तु विणय सिक्खे, दो न भासिज्ज सव्वसो ॥१॥ " इति ॥१६॥ तह उस्सग्गोज्झाया, बारस वीसा समंगलं चत्ता। संबुद्धखामण तिअ, पण सत्त साहूण जहसख ॥ ३३ ॥ " इति प्रतिक्रमणविधिसामाचार्याम्। हारिभद्र्यावश्यकवृत्तौ तु वन्दनकनिर्युक्तिगत ' चत्तारि पडिक्कमणे ' इति। गाथाव्याख्यायां सम्बुद्धखामणाविषये " जहण्णेण वि तिन्नि देवसिए पक्खिए पंच अवस्स। चाउम्मासिए संवच्छरिए वि सत्त अवस्स " पाक्षिकसूत्रवृत्तौ प्रवचनसारोद्धारवृत्त्युक्तवृद्धसामाचार्यामप्येवमेवोक्तमिति ॥१७॥ " समण भगव महावीर तिक्खुत्तो आयाहिणपयाहिण करेति वदति नमसति २ त्ता एव वयासी–एस णं देवाणुप्पिया मेहे कुमारे अम्ह एगे पुत्ते इट्ठे कंते "। इति वृत्तिर्यथा–' एगे पुत्ते ' इति धारिण्यपेक्षया श्रेणिकस्य बहुपुत्रत्वात्। इति ज्ञाता–

प्रथमाध्ययने सावचूरौ । ४५ पत्रे । अनुत्तरोपपातिकसूत्रे तु " ता एवं खलु जंबू ! समणेणं जाव संपत्तेणं अणुत्तरोववातियदसाणं पढमस्स वग्गस्स पढमज्झयणस्स अयमट्ठे पण्णत्ते एवं सेसाण वि अट्ठण्हं भाणियव्वं । नवरं छ धारिणी सुता वेहल्लो वेहायसो " । इति ॥ १८ ॥ " असोगतरुपायवस्स अहे पासस्स केवलनाणं उप्पण्णं " । उत्तराध्ययन २३ अध्ययने चतुर्दशसहस्रीवृत्तौ २८८ पत्रे । कल्पसूत्रपार्श्वचरित्रयोस्तु " धायइ पायवस्स अहे उप्पण्णं केवलं णाणं " ॥ १९ ॥ ज्ञातायां मल्लिनाथस्य विंशतिशतानि अवधिज्ञानिनाम् समवायाङ्गे तु एकोनषष्ठिशतानि अवधिज्ञानिनामिति ॥ २० ॥ तथा ज्ञातायां अष्टशतानि मनःपर्यवज्ञानिनाम् समवायाङ्गे तु सप्तपञ्चाशच्छतानि ॥ २१ ॥ तथा कल्पसूत्रे वीरस्यायुर्द्वासप्ततिवर्षाणि । समवायाङ्गे तु वीरस्यायुर्द्वासप्ततिवर्षाणि साधिकानीति ॥२२॥ तथा " सम्बोऽप्येवं ददौ प्रज्ञप्तिप्रमुखा तयोः । अष्टचत्वारिंशद्विद्यासहस्रीं पाठसिद्धिदाम् ॥१७०॥ इति श्रीहैमऋषभचरित्रे तृतीयसर्गे । आवश्यकनिर्युक्तिहारिभद्रीवृत्तावपि " नमिविनमीणं जायण, नागिंदो विज्जदाण वेयड्ढे । उत्तरदाहिणसेढी " । अक्षरगमनिका—नमिविनमिनोर्याचना नागेन्द्रो भगवद्वन्दनायायातस्तेन विद्यादानमनुष्ठितं वैताढ्यपर्वते उत्तरश्रेणिदक्षिणश्रेण्योर्यथायोगं षष्टिपञ्चाशन्नगराणि निविष्टानीति गाथाऽक्षरार्थः । भावार्थः—कथानकादवसेयः । तच्चेदम्—" अण्णया धरणो णागराया भगवंतं वंदिउमागओ, इमेहि य विण्णवियं तओ सो ते तहा जायमाणे भणति—भगवं चत्तसंगो ण एयस्स अत्थि किंचि दायव्वं, मा एयं जाएह, अहं तुब्भं भगवओ भत्तीए देमि, सामिसेवा अफला मा भवउ त्ति काउं पढियसिद्धाणं गंधव्वपण्णगाणं अडयालीसं विज्जासहस्साइं गिन्हह, ताण इमाओ चत्तारि महाविज्जाओ तंजहा—गोरी १ गंधारी २ रोहिणी ३ पण्णत्ती । आवश्यकचूर्णावपि—" अडयालीसं विज्जासहस्साइं देमि । " अष्टचत्वारिंशद्विद्या-

सहस्राणि तयोरदात् । उपदेशमालाकर्णिकायामपि–" प्रज्ञप्तिमुख्या॰ प्रीतेन, फणीन्द्रेण तयोर्ददे । पाठसिद्धविद्याष्टचत्वारिंशत्सहस्र्यथ ॥ १ ॥ " उपदेशचिन्तामणिवृत्तौ तु त्रयोदशोपदेशे–" अवा॰ीद्धरणो नाहं, पथिक किं तु नागराट् । राज्यादिदाता याचेयां, वयुना यद्विलोक्यते ॥ २० ॥ त्रैलोक्य यच्छसि त्वं चेन्न कार्यं तदपि त्वया । यदि दास्यति तद्दाता, स्वाम्येव खलु नापर' ॥ २१ ॥ भक्तिस्थैर्यमिति ज्ञात्वाऽऽयातस्तस्वामिनो मुखे । तुष्टो भगवद्भक्त्यामेषोऽहं, साम्राज्य गृह्यतामिदम् ॥२२॥ इति प्रोच्य स वैताढ्याधिपत्य प्रददे तयोः । अष्टचत्वपदसहस्राणि, गौढविद्याश्च निश्रुता ॥ २३ ॥ " शत्रुञ्जयमाहात्म्यतृतीयसर्गे तु–" नेतावहे न भरत, प्रतिज्ञायेति तौ तत । असेवितां विभु पार्श्वद्वये कृष्टासिधारिणौ ॥ ५८० ॥ पातालचिवुरन्येद्युर्धरणेन्द्रः परीचणात् । अत्यन्त तातपादेषु, तावज्ञासीत्सुभक्तिकौ ॥ ५८१ ॥ विद्या षोडशसहस्राण्यदाद्वैताढ्यपर्वते । दक्षिणोत्तरश्रेण्योश्च, राज्य ताभ्यां मुदा सह ॥ ५८२ ॥" अत्र केचिद्विद्यानामष्टचत्वारिंशत्सहस्राणि, केचित् षोडश सहस्राणि, केचिद्धरणेन्द्रेण स्वय विद्या॰ प्रदत्ता , केचिच्च भगवन्मुखेऽवतीर्येति मतद्वयमवसेयम् ॥ २३ ॥ २४ ॥ हरिभद्रसूरिकृतदशवैकालिकवृत्तौ हैमचरित्रे नवपदप्रकरणवृत्तौ च चक्रिणः सप्तम्यामेव गच्छन्तीत्युक्तम् । भगवतीद्वादशशतकनवमोद्देशकाभिप्रायेण तु सप्तस्वपि नरकेषु गच्छन्तीति ॥ २५ ॥ तथा पद्मचरित्रे सीता जनकराजपुत्री गीयते । वसुदेवहिंडि १ खण्डे तु मन्दोदरीरावणयो' ॥ २६ ॥ हेमाचार्यकृतनेमिचरित्रशत्रुञ्जयमाहात्म्यशीलतरङ्गिण्यादिग्रन्थेषु द्रौपद्याः सुकुमालिकाभवे अष्टमासिकी सलेखना सौधर्मदेवलोकगमन च । ज्ञातायां तु अर्द्धमासिकी सलेखना ईशानदेवलोकगमन च ॥ २७ ॥ कल्पे वीरस्य दीक्षापर्यायः ४२ वर्षाणि । समवायाङ्गे तु साधिकानि ॥ २८ ॥ तथा " तावदावसथद्वारे, राजसूनोरुपायने । केनाचिच्चक्रिरे कुम्भाः,

नवेक्षुरससम्भृताः ॥२६१॥ श्रेयांसो जातिस्मरणाद्भिक्षादोषोज्झितं रसम् । मत्वा कल्प्यममुं स्वामिन् !, गृहाणेत्यभ्यधात् प्रभुम् ॥२६२॥ प्रभुणाऽप्यञ्जलीकृत्य, पाणिपात्रे पुरोधृते । स रसं कलशश्रेण्याश्चिक्षेपेक्षुमिवोद्भवम् ॥२६३॥ " इत्यमरकविकृतपद्मानन्दकाव्ये त्रयोदशे सर्गे । हैमऋषभचरित्रेऽपि–"अत्रान्तरे कुमारस्य, प्राभृते केनचिन्मुदा । नवेक्षुरससम्पूर्णाः, ढौकयाञ्चक्रिरे घटाः ॥९०॥ ततो विज्ञातनिर्दोषभिक्षादानविधिः स तु । गृह्यतां कल्पनीयोऽयं, रस इत्यवदद्विभुम् ॥ ९१ ॥ प्रभुणाऽप्यञ्जलीकृत्य, पाणिपात्रमधारयन् । उत्क्षिप्योत्क्षिप्य सोऽपीक्षुरसकुम्भानलोठयत् ॥९२॥ " आवश्यकचूर्णौ तु–" सयं चेव खोयरसघडगं गहाय दव्वसुद्धेणं दायगसुद्धेणं पडिग्गाहसुद्धेणं तिविहेणं तिगरणसुद्धेणं दाणेणं पडिलाभेस्सामि त्ति " ॥ २९ ॥ चत्तारि पंच जोयणसयाइं गन्धो य मणुअलोअस्स । उड्ढं वच्चइ जेणं, न हु देवा तेण आवंति" । इति सङ्ग्रहण्याम् । उपदेशमालाकर्णिकावृत्तौ तु " ऊर्ध्वगत्या शतान्यष्टौ, सहस्रमपि कर्हिचित् । मर्त्यानां याति दुर्गन्धस्तेनेहायान्ति नामराः ॥ ४१ ॥ " ॥ ३० ॥ अनन्तनाथस्येह चतुःपञ्चाशद्गणा गणधराश्चोक्ताः । आवश्यके तु पञ्चाशदुक्तास्तदिदं मतान्तरमिति समवायाङ्गवृत्तौ ॥ विमलस्येह षट्पञ्चाशद्गणा गणधराश्चोक्ताः । आवश्यके तु सप्तपञ्चाशत्तदिदं मतान्तरमित्यपि समवायाङ्गवृत्तौ ॥३१॥ " अणुत्तरोववातियदेवा णं भंते ! केवतियं खेत्तं ओहिणा जाणंति ? पासंति ? गोयमा ! संभिण्णलोगनालिं ओहिणा जाणंति पासंति " इति । वृत्तिर्यथा–' संभिण्णलोगनालिं ' इति परिपूर्णचतुर्दशरज्ज्वात्मिकां लोकनाडीम् । इति प्रज्ञापना ३३ पदे सावचूरौ ४८४ पत्रे ॥ सङ्ग्रहण्यां तु " छट्ठिं छग्गेविज्जा, सत्तमियरे अणुत्तरसुराओ । किंचूणलोगनालिं, पासंति अणुत्तरा देवा ॥१॥ " ॥ ३२ ॥ तथा " छव्वरिसो पव्वइओ, निग्गंथो रोइऊण जिणवयणं । सिद्धं विहूअरयमलं, अइमुत्तरिसिं नमंसामि ।" इति

श्रीऋषिमडले। अस्यावचूर्णौ तु श्रीवीरान्तिके प्रव्रज्याष्टवार्षिकोऽतिमुक्तकर्षि शिवं प्राप्तः। लघुवृत्तौ तु चतुर्वर्षवया अपि प्रवया इव व्रतस्वीकारादिति ॥ ३३ ॥ आवश्यकलघुवृत्तौ तिलकाचार्येण चतुर्विंशतिजिनप्रतिमा भरतः स्वयं प्रतिष्ठितवान्, इति प्रतिपादितमस्ति तत्स्वमतिकल्पितमेव, आवश्यकचूर्णौ आवश्यकबृहद्वृत्तौ च तथाऽदर्शनात्। प्रत्युत शत्रुञ्जयमाहात्म्ये षष्ठे सर्गे भरतेन यतिभिः प्रतिष्ठा कारितेति वर्त्तते। यथा–' एवं सिंहनिषद्याख्यं, प्रासादं विधिवन्नृपः। कारयाथ यतिश्रेष्ठैः, प्रत्यतिष्ठपदुत्सवात् ॥ १ ॥ ततः शुचिः श्वेतवासाः, प्रासादान्तर्विवेश सः। कृत्वा नैषेधिकीं चक्री, त्रिः प्रदक्षिणयंश्च तम् ॥ २ ॥" इत्यादि। तथा पञ्चमसर्गेऽपि " ततोऽर्हद्भक्तिभरितो, भरतो गणधारिभिः। तत्रोपहारैर्विविधैः, प्रतिष्ठामप्यचीकरत् ॥ १ ॥" तथैव च श्रीहैमऋषभचरित्रेऽपि–" इति चैत्यं विनिर्माप्य, प्रतिष्ठाप्य च चक्रभृत्। श्वेतांशुकधरस्तत्राविशन्मेघ इवोडुपं ॥ १ ॥" ॥ ३४ ॥ " अरिट्ठनेमिस्स अंते धम्मं सोऊण पव्वइओ, गओ य भगवया सद्धिं, थिज्जाइयस्स अपत्तिगं जायं, कालेण पुण भगवया सद्धिं बारवइमागओ, मसाणे य पडिमं ठिओ, दिट्ठो य धिज्जाइएण, तओ कुविएण कुडयगे, मत्थए दाऊण अंगाराण से भरिओ तस्स य सम्मं अहियासेमाणस्स केवलं समुप्पण्णं " इति आवश्यकबृहद्वृत्तौ १०७ पत्रे। ऋषिमण्डलपञ्चत्रिंशत्तमगाथायां तु " वंदामि नेमिसीसं, मयाणिगाहिएगराइवरपडिमं। सोमिलकयउवसग्गं, गयसुकुमालं सिवं पत्तं ॥ ३५ ॥" " तद्भावमतिविशुद्धं, ज्ञात्वा श्रीधर्मघोषसूरीन्द्राः। सम्प्राप्तास्तस्य पटा–वासे चरणाचरणचतुराः ॥ ९ ॥ स च तेषां घृतममितं, निःशेषैर्दूषणैः परित्यक्तम्। प्रतिलाभयति प्रमदो–त्पन्नसमग्राङ्गरोमाञ्चः ॥ १० ॥" इति श्रीऋषिमण्डलाष्टादशसहस्र्यां वृत्तौ प्रथमगाथायाम्। हैमऋषभचरित्रे तु " अस्यानुपदमेवाथ, साधुद्वितयमागमत्। तदर्ह

चान्नपानादि, दैवादैत्तन्न किञ्चन ॥ ३३ ॥ इतस्ततोऽन्वेपयंश्च, सार्थवाहः स्वयं ततः । ईक्षाञ्चक्रे घृतं स्त्यानं, निजाशयमि-
वामलम् ॥ ३४ ॥ " इति ॥ ३६ ॥ तथा वसुदेवहिण्डौ पुष्पमालावृत्तौ च वसुदेवपूर्वभवे चारित्रपर्यायः ५५००० वर्षाणि ।
हैमनेमिचरित्रे तु १२००० वर्षाणि ॥ ३७ ॥ तथा वसुदेवहिण्डौ वसुदेवपूर्वभवमातुलस्य कन्यात्रयम् । हैमनेमिचरित्रे तु
कन्यासप्तकमिति ॥ ३८ ॥ नेमिचरित्रे वन्दारुवृत्तौ च द्वारिकायां नेमिनाथे सति चतुर्मासके वन्दनाय नागतः कृष्णः । भव-
भावनावृत्तौ तु " धम्मत्थं मोत्तूण " इत्याद्यक्षरैर्धर्मार्थं विना नियमो गृहीतोऽस्तीति ॥ ३९ ॥ तथा यदा किल नेमिः प्रव्रजित-
स्तदा रथनेमिज्येष्ठभ्राता राजीमतीमुपचरति, सा मामिच्छेत् इति, सा भगवती निर्विण्णकामभोगा अन्यदा तदभिप्रायं
ज्ञात्वा मधुघृतसंयुता पेया पीता, तस्मिन्नागते तया मदनफलाघ्राणेन वान्ता । उक्तं च–' धिगत्थु ते जसोकामी '
इत्यादि । इति गच्छाचारप्रकीर्णकवृत्तौ । तथैव च तिलकाचार्यकृतदशवैकालिकवृत्तावपि " गृही चतुर्वर्षशतीं, छद्मस्थो
वत्सरं स्थितः । पञ्चवर्षशतीमासीद्रथनेमिस्तु केवली ॥ १८५ ॥ राजीमत्या अपि तथा, कौमारं छद्मवासितम् । केवलित्वं च
सर्वोऽपि, पर्यायो रथनेमिवत् ॥ १८६ ॥ नेमेर्वर्षशतेनाग्रे, ययौ राजीमती शिवम् । यद्रक्तो मामसुचन्नेमिः, सिद्धिं तां किल
वीक्षितुम् ॥ १८७ ॥ माहेन्द्रेऽगाच्छिवा देवी, समुद्रविजयोऽपि च । दशार्हा अपरेऽप्यष्टौ, स्वर्गलक्ष्मीभुजोऽभवत् ॥१८८॥"
नेमेस्तु त्रीणि शतानि गृहस्थपर्याय इत्यत्रापि नेमितो रथनेमिज्येष्ठभ्रातैव । नेमिचरित्रे तु–" इतश्च नेमिरनुजो, रथनेमिः
स्मरातुरः । जज्ञे राजीमतीं पश्यन्निन्द्रियाणां वशंवदः ॥२५८॥ ४० ॥ तथा असुरादयो यावद्वनस्पतिकायिका अनन्तरमुद्धृता-
स्तीर्थं न लभन्ते, अन्तःक्रियां पुनः कुर्युः । इति प्रज्ञापना २० पदवृत्तौ । वसुदेवचरिते तु नागकुमारेभ्योऽप्युद्धृतोऽनन्तरमैरवत-

क्षेत्रेऽस्यामवसर्पिण्या चतुर्विंशतितमस्तीर्थंकर उपदर्शितः, तदत्र तत्त्व केवलिनो विदन्तीति ॥४१॥ एव भूयांसि अन्यान्यपि मतान्तराणि शास्त्रे दृश्यन्ते, तेन धर्मार्थिना कुत्रापि कदाग्रहो न कार्य. । पुरातनैर्महापुरुषैर्बहुश्रुतैर्यदि किमपि नाहत्यनिर्णीत तर्हि आधुनिकैर्मन्दप्रज्ञै किमिव निर्णेतु शक्यम् ?, ततो यदा यो ग्रन्थो वाच्यते तदा तद्ग्रन्थस्थमुच्यते, इति जगद्गुरुश्रीहीरविजयसूरीणामनुशिष्टिरिति ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितभूपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे मध्यभागे मतान्तरसमुच्चयनामा आवर्त्तः समाप्तः ॥

मिथ्यात्वविषविसस्थूलनरनिकरविकारसदगदङ्कारम् । विधिना श्रीजिनवचन ध्येय धीमद्भिरुरुरचनम् ॥ १ ॥

अथ श्रीमूलसूत्रविचारा लिख्यन्ते—तत्र तावदावश्यकविचाराः, तत्र च प्रथम युक्तिरसिकहृदयप्रमोदाय युक्तिशाली इन्द्रियविषयविचारो लिख्यते—

पुट्ठ सुणेइ सद्द, रूव पुण पासई अपुट्ठ तु । गध रस च फास च बद्धपुट्ठ वियागरे ॥ ६ ॥ वृत्तिर्यथा—ननु व्यञ्जनावग्रहप्ररूपणाद्वारेणैव तथा श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयता प्राक् प्रतिपादिता, तत. किमर्थमेष पुन' प्रयास इति ? उच्यते—तत्र प्रक्रमे गाथाव्याख्यानद्वारेण प्रतिपादिता, सम्प्रति तु सूत्रतः प्रतिपाद्यत इत्यदोष , श्रोत्रेन्द्रिय कर्तृ, शब्द कर्मतापन्न, शृणोति—गृह्णाति परिच्छिनत्तीति भावः, स्पृष्ट तनौ वायुवदालिङ्गितमात्रम् , किमुक्त भवति ? शब्दद्रव्याणि सकललोकव्यापीनि सूक्ष्माण्यत एव द्रव्येन्द्रियस्यान्तरपि मनाक् प्रविशन्ति, तदन्यद्रव्यवासनस्वभावानि च, श्रोत्रेन्द्रिय शेषेन्द्रियग-

णापेक्षया प्रायः पटुतरं ततः स्पृष्टमात्रमेव शब्दद्रव्यसमूहं गृह्णाति, एतेन यदाहुः सुगतमतानुसारिणः श्रोत्रमप्यप्राप्तकारि, तथा च तद्ग्रन्थः—'चक्षुःश्रोत्रमनोऽप्राप्यकारी'ति ते प्रतिक्षिप्ता द्रष्टव्याः, तथा हि—अप्राप्यकारि तत्प्रतिपत्तुं शक्यते यस्य विषयकृतानुग्रहोपघाताभावः, यथा चक्षुर्मनसी, श्रोत्रस्य च शब्दकृत उपघातो दृश्यते, सद्योजातबालस्य समीपे महाप्रयत्न-ताडितझल्लरीझात्कारश्रवणतः, यद्वा विद्युत्प्रपाते तत्प्रत्यासन्नदेशवर्त्तिनां निर्घोषश्रवणतो बधिरीभावदर्शनात्। शब्दपरमाणवो हि उत्पत्तिदेशादारभ्य जलतरङ्गन्यायेन प्रसरमभिगृह्णानाः श्रोत्रेन्द्रियमागच्छन्ति, ततः सम्भवत्युपघातः। ननु यदि श्रोत्रे-न्द्रियं प्राप्तमेव शब्दं गृह्णाति नाप्राप्तं तर्हि यथा गन्धादौ गृह्यमाणे न तत्र दूरासन्नादितया भेदप्रतीतिः, एवं शब्देऽपि न स्यात्, प्राप्तो हि विषयः परिच्छिद्यमानः सर्वोऽपि सन्निहित एव, तत्कथं दूरासन्नादिभेदप्रतीतिर्भवतुमर्हति?। अथ च प्रतीयते शब्दो दूरासन्नादितया, तथा च लोके वक्तारः श्रूयते कस्यापि दूरे शब्द इति। अन्यच्च यदि प्राप्तः शब्दो गृह्यते श्रोत्रेन्द्रि-येण तर्हि चाण्डालोक्तोऽपि शब्दः श्रोत्रेन्द्रियसंस्पृष्टो गृह्यते, इति श्रोत्रस्य चाण्डालस्पर्शदोषः, तन्न श्रेयसी श्रोत्रस्य प्राप्त-कारिता, तदेतन्महामोहमलीमसमानसभाषितम्। यतो यद्यपि शब्दः प्राप्तो गृह्यते श्रोत्रेन्द्रियेण तथाऽपि यत उत्थितः शब्द-स्तस्य दूरासन्नत्वे शब्देऽपि स्वान्यवैचित्र्यसम्भवाद्दूरासन्नादिभेदप्रतीतिरुल्लसिष्यति, तथा हि—दूरादागतः शब्दः क्षीणशक्ति-कत्वात्खिन्न इव लक्ष्यते अस्पष्टरूपो वा, ततो लोके व्यवहारो दूरे शब्दः श्रूयते इति, अस्य वाक्यस्यायं भावार्थः—दूरादागतः शब्दः श्रूयते, स्यादेतदेवमतिप्रसङ्गः प्राप्नोति, तथा हि—एतदपि वक्तुं शक्यते दूरे रूपमुपलभ्यते, किमुक्तं भवति? दूरादागतं रूपमुपलभ्यते, ततश्चक्षुरपि प्राप्यकारीति प्राप्नोति न चैतदिष्यते तस्मान्न तत्समीचीनमिति तदयुक्तं, यत

इह चक्षुषो रूपकृतानुग्रहोपघातौ नोपलभ्येते, श्रोत्रेन्द्रियस्य तु शब्दकृतोपघात उपलम्भगोचरोऽस्ति, यथोक्तं प्राक्, ततो नातिप्रसङ्गोपादानं युक्तिमत्। अन्यच्च प्रत्यासन्नोऽपि जनः पवनस्य प्रतिकूलमवतिष्ठमानः शब्दं न शृणोति, पवनवर्त्मनि पुनरवतिष्ठमानो दूरदेशस्थितोऽपि शृणोति, तथा च लोके वक्तारो न वयं प्रत्यासन्ना अपि त्वदीयं शब्दं शृणुमः पवनस्य प्रतिकूलमवस्थानात्, यदि पुनरप्राप्तमेव शब्दं रूपमिव जना अश्रोष्यन् तर्हि पवनस्य प्रातिकूल्येऽप्यवतिष्ठमाना रूपमिव शब्दं यथावस्थितं परिच्छिन्द्युः न च परिच्छिन्दन्ति, तस्मात्प्राप्ता एव शब्दपरमाणवः श्रोत्रेन्द्रियेण परिगृह्यन्ते इत्यवश्यमभ्युपगन्तव्यम्, अन्यथा क्रमग्रहणानुपपत्तेः। तथा हि—यद्यप्राप्ता एव शब्दा गृह्यन्ते तर्हि तेषां योग्यदेशावस्थितानां समीपस्थैर्दूरस्थैश्च ग्रहणमेककालं भवेत् यथा चक्षुषा योग्यदेशावस्थितानां घटपटादीनाम्, क्रमेण च ग्रहणमनुभूयते पूर्वं समीपस्थैरिति। यदपि चोक्तं चाण्डालस्पर्शदोष इति तदपि चेतनाविकलपुरुषभाषितमिवासमीचीनम्, स्पर्शास्पर्शव्यवस्था हि लोककाल्पनिकी, न पारमार्थिकी। तथा हि—यामेव भुवमग्रे चाण्डालः स्पृशन् याति तामेव पृष्ठतः श्रोत्रियोऽपि, तथा यामेव नावमारोहति चाण्डालस्तामेवारोहति श्रोत्रियोऽपि, तथा स एव मारुतश्चाण्डालं स्पृष्ट्वा श्रोत्रियमपि स्पृशति, न च तत्र लोके स्पर्शदोषव्यवस्था, तथा शब्दपुद्गलस्पर्शेऽपि न भवतीति न कश्चिद्दोषः। अन्यच्च यदा केतकीदलनिचयं शतपत्रादिपुष्पनिचयं वा शिरसि निबद्ध्य वपुषि वा मृगमदचन्दनाद्यवलेपनमारचय्य विपणिवीथीमागत्य चाण्डालोऽवतिष्ठते तदा तद्गतकेतकीदलादिगन्धपुद्गला श्रोत्रियादिनासिकास्वपि प्रविशन्ति, ततस्तत्रापि चाण्डालस्पर्शदोषः प्राप्नोतीति तद्दोषभयान्नासिकेन्द्रियमप्राप्यकारि प्रतिपत्तव्यम्, न चैतद्भवतोऽप्यागमे प्रतिपाद्यते ततो बालिशजल्पितमिति कृतं प्रसङ्गेन। केचित्

पुनः श्रोत्रेन्द्रियस्य प्राप्यकारिताभ्युपगच्छन्तः शब्दस्याम्बरगुणत्वं प्रतिपन्नाः तदश्लीलमाकाशगुणतायां शब्दस्यामूर्त्तत्वप्रसक्तेः, यो हि यद्गुणः स तत्समानधर्मा यथा ज्ञानमात्मनः, तथा हि–अमूर्त्त आत्मा ततस्तद्गुणो ज्ञानमप्यमूर्त्तमेव, एवं शब्दोऽपि यद्याकाशगुणस्तर्हि आकाशस्यामूर्त्तत्वाच्छब्दस्यापि तद्गुणत्वेनामूर्त्तता भवेत् न चासौ युक्तिसङ्गता तल्लक्षणायोगात्, मूर्त्तिविरहो ह्यमूर्त्तता, न च शब्दानां मूर्त्तिविरहः स्पर्शवत्त्वात्। तथा हि–स्पर्शवन्तः शब्दास्तत्सम्पर्के उपघातदर्शनाल्लोष्टवत्, न चायमसिद्धो हेतुः, यतो दृश्यते सद्योजातबालकानां कर्णदेशाभ्यर्णगाढास्फालितझल्लरीझात्कारश्रवणतः श्रवणस्फोटः, न चेत्थमुपघातकृत्त्वमस्पर्शवत्त्वे सम्भवति यथा हि विहायसः, ततो विपक्षे गमनासम्भवान्नैकान्तिकोऽपि. अतश्च स्पर्शवन्तः शब्दाः, तैरभिघाते गिरिगह्वरभित्यादिषु शब्दोत्थानाल्लोष्टवत्, अयमपि हेतुरुभयोरपि सिद्धः। तथा हि–श्रूयन्ते तीव्रप्रयत्नोच्चारितशब्दाभिघाते गिरिगह्वरादिषु प्रतिशब्दाः प्रतिदिक्, ततः स्पर्शवत्त्वान्मूर्त्ता एव शब्दाः, 'रूपस्पर्शादिसन्निवेशो मूर्त्ति' रिति वचनात्, ततः कथमिवाकाशगुणत्वं शब्दानामुपपत्तिमत्। अपि च तदाकाशमेकमनेकं वा, यद्येकं तर्हि योजनलक्षादपि श्रूयेत् आकाशस्यैकत्वेन शब्दस्य तद्गुणतया दूरासन्नादिभेदाभावात्, अथानेकमेवं सति वदनदेशे एव स विद्यते इति कथं भिन्नदेशवर्त्तिभिः श्रूयते, वदनदेशाकाशगुणतया तस्य श्रोत्रेन्द्रियाकाशसम्बन्धाभावात्। अथ च श्रोत्रेन्द्रियाकाशसम्बद्धतया तच्छ्रवणमभ्युपगम्यते तन्न श्रेयानाकाशगुणत्वाभ्युपगमः। नन्वाकाशगुणत्वमन्तरेण शब्दस्यावस्थानमेव नोपपद्यते, अवश्यं हि पदार्थेन स्थितिमता भवितव्यं तत्र रूपस्पर्शरसगन्धानां पृथिव्यादिमहाभूतचतुष्टयमाश्रयः शब्दस्य त्वाकाशमिति तदयुक्तम्, एवं सति पृथिव्यादीनामप्याकाशाश्रितत्वेनाकाशगुणत्वप्रसक्तेः। अथ नाश्रयणमात्रं

तद्गुणत्वनिबन्धनं किन्तु समवायः, स चास्ति शब्दस्याकाशे न तु पृथिव्यादीनामिति । ननु कोऽयं समवायो नाम एकलोलीभावेनावस्थानम्, यथा पृथिव्यादे रूपादिभिरिति चेत् ? न तर्हि शब्दस्याकाशगुणत्वं, आकाशेन सहास्यैकलोलीभावेनाप्रतिपत्तेः । अथाकाशे उपलभ्यमानत्वात्तद्गुणता शब्दस्य तर्हि तूलकादेरप्याकाशे उपलभ्यमानत्वात्तद्गुणता प्राप्नोति, अथ तूलकादे· परमार्थतः पृथिव्यादिस्थानमाकाशे तूपलम्भो वायुना सञ्चार्यमाणत्वात्, यद्येवं तर्हि शब्दस्यापि परमार्थत स्थानं श्रोत्रादि, यत्पुनराकाशेऽवस्थानं तद्वायुना सञ्चार्यमाणत्वात् । तथा हि-यतो यतो वायु· सञ्चरति ततस्ततः शब्दोऽपि गच्छति, वातप्रतिकूलं शब्दस्याश्रवणात् । उक्तं च प्रज्ञाकरगुप्तेन-" यथा वा प्रेर्यते तूलमाकाशे मातरिश्वना तथा शब्दोऽपि किं वायो, प्रतीप· कोऽपि शब्दवित् ॥" तन्नाकाशगुणः शब्द·, किन्तु पुद्गलमय इति । तथा रूप्यत इति रूपम् तद्रूपं पुनः पश्यति-गृह्णात्युपलभ्यत इति यावत् । अस्पृष्ट-अनालिङ्गितं गन्धादिवन्न सम्बद्धमित्यर्थः । तुशब्द एवकारार्थे स चावधारणे, रूपं पुन पश्यत्यस्पृष्टमेव, चक्षुषोऽप्राप्यकारित्वात्, एतच्च प्रागेव भावितम् । पुनः शब्दो विशेषणार्थः, स चैतद्विशिनष्टि अस्पृष्टमपि योग्यदेशावस्थितं न पुनरयोग्यदेशावस्थितममरलोकादि । गन्ध्यते आघ्रायत इति गन्धस्तम्, 'रस' आस्वादने, रस्यतेऽनेनेति रसस्तञ्च, स्पृश्यत इति स्पर्शस्तञ्च, चशब्दौ पूरणार्थौ । बद्धस्पृष्टमिति बद्ध-आश्लिष्टं तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थ, स्पृष्टं पूर्ववत्, प्राकृतशैल्या चेत्थमुपन्यासो 'बद्धपुट्ठ' इति । परमार्थतस्तु स्पृष्टं च तद्बद्धं च स्पृष्टबद्धमिति द्रष्टव्यम् । आह-यद्बद्धं गन्धादि तत्स्पृष्टं भवत्येव, अस्पृष्टस्य सम्बन्धायोगात्, तत्र स्पृष्टशब्दोच्चारणं गतार्थत्वादनर्थकमिति नैष दोष, शास्त्रारम्भस्य सर्वश्रोतृसाधारणत्वात् । त्रिविधा हि श्रोतार-केचिदुद्घटितज्ञा केचिन्मध्यमबुद्धयः तथाऽन्ये

प्रपञ्चितज्ञाः, तत्र प्रपञ्चितानामनुग्रहाय गम्यमानस्याप्यभिधानमदोपायेति । प्रकृतभावार्थस्त्वयम्–गन्धद्रव्याणि स्वल्पानि स्थूलानि तदन्यवासनकानि घ्राणादीनि चेन्द्रियाणि श्रोत्रेन्द्रियापेक्षया अपटूनि, ततो घ्राणेन्द्रियादिगणो गन्धादि आलिङ्गितानन्तरमात्मप्रदेशैरात्मीकृतं गृह्णाति नान्यथेति, एवं व्यागृणीयात् प्रतिपादयेत् प्रज्ञापकः स्वशिष्येभ्यः । एतदेव व्याख्यानं भाष्यकारोऽप्याह–पुट्ठं रेणुं व तणुंमि, बद्धमप्पीकयं पएसेहिं । छिकाइं चिय गिण्हेइ, सद्दन्नाइ जं ताइं ॥ १ ॥ बहुसुहुमभावगाइं, जं पडुयरं च सोयविन्नाणं । गंधादियदव्वाइं, विवरीयाइं जतो ताइं ॥ २ ॥ फरिसाणंतरमत्तप्पएसमीसीकयाइ घिप्पंति । पडुयरविन्नाणाइं, ज च न घाणाइ करणाइं ॥ ३ ॥

नन्विदमुक्तं योग्यदेशावस्थितमेव रूपं पश्यति नायोग्यदेशावस्थितम्, तत्र कियान् चक्षुषो (श्रोत्रादीनां) विषयः ?, कियतो देशादागतं श्रोत्रादि शब्दादिकं गृह्णाति ? उच्यते—श्रोत्रं तावत् शब्दं जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रदेशात् उत्कर्षतस्तु द्वादशभ्यो योजनेभ्यः, चक्षुरिन्द्रियमपि जघन्यतोऽङ्गुलसङ्ख्येयभागावस्थितं पश्यति उत्कर्षतस्तु सातिरेकयोजनशतसहस्रव्यवस्थितम्, घ्राणरसनस्पर्शनानि तु जघन्येनाङ्गुलासङ्ख्येयभागमात्राद्देशादागतं गन्धादि गृह्णन्ति उत्कर्षतस्तु नवभ्यो योजनेभ्यः।

नन्वङ्गुलं त्रिधा भवति तद्यथा–आत्माङ्गुलं उच्छ्रयाङ्गुलं प्रमाणाङ्गुलं च । तत्र–जेणं जया मणूसा, तेसिं जं होइ माणरूवं तु । तं भणिगमिहायंगुलमणिययमाणं पुण इमं तु ॥ १ ॥ इत्येवं रूपमात्माङ्गुलम् । परमाणू तसरेणू, रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो, अट्ठगुणविवड्ढिया कमसो ॥ २ ॥ इत्यादिरूपसमुच्छ्रयाङ्गुलम् । उस्सेहंगुलमेगं, हवइ पमाणंगुलं सहस्सगुणं । तं चेव दुगुणियं, खलु वीरस्सायंगुलं भणियं ॥ ३ ॥ इत्येवं लक्षणं प्रमाणाङ्गुलम् । तत्रा-

त्माङ्गुलेन प्रमीयते तत्तत्काले वापीकूपादिक वस्तु, उच्छ्रयाङ्गुलेन नरतिर्यग्देवनैरयिकशरीराणि, प्रमाणाङ्गुलेन नगपृथिवी विमानानि । उक्त च—" आयगुलेण वत्थु, उस्सेहपमाणतो मिणसु देह । नगपुढविविमाणाइ, मिणसु पमाणगुलेण तु ॥ १ ॥ तत्रेदमिन्द्रियविषयपरिमाण किमात्माङ्गुलेन प्रतिपत्तव्यमाहोस्विदुच्छ्रयाङ्गुलेन ? उच्यते—आत्माङ्गुलेन, तथा चाह—चक्षुरिन्द्रियविषयपरिमाणचिन्तायां भाष्यकृत्—अप्पत्तकारि नयण, मणो य नयणस्स विसयपरिमाण । आयगुलेण लक्ख, अइरित्त जोअणाइ तु ॥ २ ॥ ननु देहप्रमाणमुच्छ्रयाङ्गुलेन देहाश्रितानि चेन्द्रियाणि, ततस्तेषां विषयपरिमाणमप्युच्छ्रयाङ्गुलेन वक्तुमुचितम्, कथमुच्यते आत्माङ्गुलेन ?, नैष दोष , यद्यपि हि नाम देहाश्रितानीन्द्रियाणि तथाऽपि तेषां विषयपरिमाणमात्माङ्गुलेन देहान्यत्वाद्विषयपरिमाणस्य, तथा चामुमेवार्थमाक्षेपपुरस्सर भाष्यकृदाह—ननु भणियमुस्सयगुलपमाणतो जीवदेहमाणाइ । देहपमाण त चिय, न उ इदियविसयपरिमाण ॥ अत्र ' देहपमाण त चिय ' इति यत्तत् उच्छ्रयाङ्गुलमेयत्वेनोक्त तद्देहप्रमाणमात्रमेव, न त्विन्द्रियविषयपरिमाणम्, तस्यात्माङ्गुलप्रमेयत्वात् । अथ यदि विषयपरिमाणमिन्द्रियाणामुच्छ्रयाङ्गुलेन स्यात्ततः को दोष आपद्येत ? उच्यते—पञ्चधनु शतादिमनुष्याणा विषयव्यवहारव्यवच्छेद' । तथा हि—यद्भरतस्यात्माङ्गुल तत्किल प्रमाणाङ्गुलम् , तच्च प्रमाणाङ्गुलमुच्छ्रयाङ्गुलसहस्रेण भवति । ' उस्सेहगुलमेग, हवइ पमाणगुल सहस्सगुण ' इति वचनात्, ततो भरतसगरादिचक्रवर्त्तिनां या अयोध्यादयो नगर्यो ये च स्कन्धावारा आत्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते प्रसिद्धास्ते उच्छ्रयाङ्गुलप्रमित्या अनेकानि योजनसहस्राणि स्युः, तथा च सति तत्रा युधशालादिषु ताडितभेर्यादिशब्दश्रवण न सर्वेषामापद्येत " बारसहि जोअणेहिं, सोय अहिगिण्हए सद " इति वचनात्,

अथ च समस्तनगरव्यापी समस्तस्कन्धावारव्यापी च विजयढक्कादिशब्द आगमे प्रतिपाद्यते, तत एवमागमे प्रसिद्धः पञ्चधनुःशतादि ( प्रमाणानां ) मनुष्याणां विषयव्यवहारो व्यवच्छेदं मा आपादित्यात्माङ्गुलेनेन्द्रियविषयपरिमाणमवसातव्यम्, नोच्छ्रयाङ्गुलेन । तथा चाह भाष्यकृत्–जं तेण पंचधणुसयनरादिविसयववहार वोच्छेओ । पावइ सहस्सगुणियं, जेण पमाणंगुलं तत्तो ॥ १ ॥ अत्र तस्मादात्माङ्गुलेनैवेन्द्रियाणां विषयपरिमाणं नोच्छ्रयाङ्गुलेनेति, यदप्युक्तं प्राक् देहाश्रितानीन्द्रियाणि इति तेषां विषयपरिमाणमुच्छ्रयाङ्गुलेनेति तदप्ययुक्तं, इन्द्रियाणामपि केषाञ्चित्पृथुत्वस्यात्माङ्गुलेन मीयमानत्वाभ्युपगमात्, अन्यथा त्रिगव्यूतादिमनुष्याणां रसाद्यभ्यवहारव्यवच्छेद प्रसक्तेः, तथा हि—त्रिगव्यूतादीनां मनुष्याणां षड्गव्यूतादीनां हस्त्यादीनां (च) स्वशरीरानुसारितया अतिविशालानि मुखानि जिह्वाश्च, ततो यद्युच्छ्रयाङ्गुलेन तेषां क्षुरप्राकारतयोक्तस्याभ्यन्तर-निर्वृत्त्यात्मकस्य जिह्वेन्द्रियस्याङ्गुलपृथक्त्वलक्षणो विस्तारः परिगृह्यते तदाऽत्यल्पतया न तत्सर्वां जिह्वां व्याप्नुयात्, सर्व-व्यापित्वाभावे च योऽसौ बाहुल्येन सर्वात्मनाऽपि जिह्वया रसावेदनलक्षणः प्रतिप्राणिप्रसिद्धो व्यवहारः स व्यवच्छेदं यायात् । एवं घ्राणादिविषयोऽपि यथायोगं गन्धादिव्यवहारव्यवच्छेदो भावनीयः, तस्मादात्माङ्गुलेन जिह्वादीनां पृथुत्वमव-सातव्यम्, नोच्छ्रयाङ्गुलेन । आह च भाष्यकृत्—इंदियमाणेवि तयं भयणिज्जं जं तिगाउयाईणं । जिब्भिंदियाइमाणं, संववहारे विरुज्झेज्जा ॥ १ ॥ अस्याक्षरगमनिका—तदुच्छ्रयाङ्गुलमिन्द्रियमानेऽप्यास्तामिन्द्रियविषयपरिमाणचिन्तायामित्यपि शब्दार्थः भजनीयं–विकल्पनीयं, क्वापि गृह्यते क्वापि न गृह्यते इत्यर्थः । किमुक्तं भवति ? स्पर्शनेन्द्रियपृथुत्वपरिमाणचि-न्तायां ग्राह्यमन्येन्द्रियपृथुत्वपरिमाणचिंतायां तु न ग्राह्यम्, तेषामात्माङ्गुलेन परिमाणकरणादिति । कथमेतदवसेयमिति

चेत् ? तत आह–यत् यस्मात्सर्वेषामपीन्द्रियाणामुच्छ्रयाङ्गुलेन परिमाणकरणे त्रिगव्यूतानामादिशब्दाद्विगव्यूतादिपरिग्रहः, निर्देन्द्रियादिमान सूत्रोक्त सव्यवहारे विरुध्येत । यथा च विरुध्येत तथाऽनन्तरमेव भावित, तस्मात्सर्वमिन्द्रियविषयपरिमाणमात्माङ्गुलेनैवेति स्थितम् । ननु भवत्वात्माङ्गुलेन विषयपरिमाण तथाऽप्युक्तस्वरूप चक्षुरिन्द्रियविषयपरिमाण न घटते, अधिकस्यापि तद्विषयपरिमाणस्यागमान्तरे प्रतिपादनात् । तथा हि—पुष्करवरार्द्धे मानुषोत्तरपर्वतसमीपे मनुष्या कर्कसङ्क्रान्तौ प्रमाणाङ्गुलनिष्पन्नै' सातिरेकैकविंशतियोजनलक्षैर्व्यवस्थितमादित्यमवलोकमानाः प्रतिपाद्यन्ते शास्त्रान्तरे, तथा च तद्ग्रन्थः—" इगवीस खलु लक्खा, चउवीस चेव तह सहस्साइ । तह पचसया भणिया, सत्ततीसा य अइरित्ता ॥१॥ इइ नयणविसयमाण, पुक्खरदीवड्ढवासिमणुयाण । पुव्वेण य अवरेण य, पिहिं पिहिं होइ मणुयाण ॥ २॥" ततः कथमुक्तस्वरूप नयनविषयपरिमाणमात्माङ्गुलेनापि घटते प्रमाणाङ्गुलेनापि व्यभिचारात् । उक्त च—" लक्खेहिं एक्कवीसाइ, साइरेगेहिं पुक्खरद्धमि । उदए पेच्छति नरा, सूर उक्कोसए दिवसे ॥ १ ॥ नयणिंदियस्स तम्हा, विसयपमाण जहा सुए भणिय । आउस्सेहपमाण–गुलेण इक्केण वि न जुत्त ॥२॥" सत्यमेतत् केवलमिद विषयपरिमाण प्रकाश्यविषय द्रष्टव्य न तु प्रकाशकविषयम् । ततः प्रकाशकेऽधिकतरमपि विषयपरिमाण न विरुध्यते इति न कश्चिद्विरोधः । कथमेतदवसीयते ? इति चेत् उच्यते—पूर्वसूरिकृतव्याख्यानात्, सकलमपि हि कालिकश्रुत पूर्वसूरिकृतव्याख्यानानुसारेणैव व्याख्यानयन्ति महाधिय., न यथाऽक्षरसन्निवेशमात्रम् । पूर्वगतसूत्रार्थसङ्ग्रहपरतया कालिकश्रुतस्य क्वचित्सङ्क्षिप्तस्याप्यर्थस्य महता विस्तरेण, क्वचिद्विस्तरवतोऽप्यतिसङ्क्षेपेणाभिधाने अर्वाक्तनै· स्वल्पमतिभिर्यथावस्थितार्थतया ज्ञातुमशक्यत्वात् । अत एवोक्तमिदमन्यत्र–" ज जह भणिय सुत्ते, तहेव जइ त

वियालणा नत्थि । किं कालिकाणुयोगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥ १ ॥ " तस्मात्पूर्वेक्षरिकृतव्याख्यानान्नाधिकृतग्रन्थविरोधः । आह च भाष्यकृत्—सुत्ताभिप्पाओऽयं, पयासणिज्जे तयं नउ पयासे। वक्खाणाउ विसेसो, न हि संदेहादिलक्खणया ॥१॥ अथोक्तप्रमाणविषयमुल्लङ्घ्य कस्माच्छ्रोत्रादि शब्दादिकं न गृह्णाति ? उच्यते—सामर्थ्याभावात्, उत्कर्षतोऽपि श्रोत्रादीनामेतावत्येव शक्तिः । यद्द्वादशादिभ्य एव योजनेभ्य आगतान् शब्दादीन् गृह्णाति, न परतः । चक्षुरपि सातिरेकयोजनलक्षात्तद्व्यवस्थितं, न परतोऽपीति । तथा द्वादशभ्यो नवभ्यश्च योजनेभ्यः परतः समागतानां शब्दादिद्रव्याणां तथाविधपरिणामाभावाच्च, परतो हि समागताः शब्दपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रादिज्ञानं नोत्पादयितुमीशाः । आह च भाष्यकृत्—बारसहिंतो सोत्तं, सेसाणि उ नवहि जोअणेहिंतो । गेण्हंति पत्तमत्थं, एत्तो परतो न गेण्हंति ॥ १ ॥ इत्यावश्यकमलयगिरिवृत्तौ ४३५ प्रतौ २३ । २४ । २५ पत्रे ॥ १ ॥

अथोद्वृतानुद्वृतेषु तिर्यग्नरामरेषु कियन्ति सामायिकानि भवन्तीति विचारो लिख्यते—

तिरिएसु अणुव्वट्टे, तिगं चउक्कं सिया य उव्वट्टे । मणुएसु अणुव्वट्टे, चउरो तिदुगं तु उव्वट्टे ॥ ४४ ॥ व्याख्या—तिर्यक्षु गर्भव्युत्क्रान्तिकेषु संज्ञिष्वनुद्वृतः सन् त्रिकमाद्यं त्रिसामायिकमधिकृत्य प्रतिपत्ता प्रतिपन्नश्च भवतीत्यध्याहारः, 'चउक्कं सिया य उव्वट्टे' उद्वृतस्तु मनुष्येष्वायातः स्याच्चतुष्कं स्यात्त्रिकं स्याद्द्विकमधिकृत्योभयथाऽपि भवतीति । 'मणुएसु अणुव्वट्टे चउरो तिदुगं तु उव्वट्टे' मनुष्येष्वनुद्वृतः सन् चत्वारि प्रतिपद्यते प्राक्प्रतिपन्नश्च भवतीति, त्रीणि द्विकं तुशब्दो

विशेषणे उद्धृतस्तिर्यग्नरामरेष्वायातस्त्रीणि द्विक चाधिकृत्योभयथाऽपि भावीति गाथार्थः । देवेसु अणुव्वट्टे, दुग चउक्क सिया य उव्वट्टे । उव्वट्टमाणओ पुण, सव्वो वि न किंचि पडिवज्जे ॥४५॥ व्याख्या—देवेष्वनुद्धृतः सन् द्विकमाद्यसामायिकद्वयमाश्रित्योभयथा भवतीति क्रिया । ' चउक्क सिया य उव्वट्टे ' इति पूर्ववत्, उद्वर्त्तमानक पुनरपान्तरालगतौ सर्वोऽप्यमरादि न किञ्चित्प्रतिपद्यते, प्राक्प्रतिपन्नस्तु द्वयोर्भवतीति गाथार्थः । इत्यावश्यकमलयगिरिवृत्तौ ४३५ प्रतौ ३३६ पत्रे ॥ ७ ॥

अथ सम्यक्त्वादिसामायिकचतुष्कविचारो लिख्यते—प्रथम सामायिकचतुष्कलाभद्वारमाह—

अब्भुट्ठाणे विणए, परक्कमे साहुसेवणाए य । सम्मद्दसणलंभो, विरयाविरईअ विरईए ॥ १ ॥ अभ्युत्थाने सति सम्यग्दर्शनलाभो भवतीति क्रिया, तथा विनये—अञ्जलिप्रग्रहादिरूपे, तथा पराक्रमे कषायजये, तथा साधुसाध्वीसेवायाम्, तथा विरताविरते—देशविरतेर्विरते—सर्वविरतेर्लाभः ॥१॥ तच्चतुष्कमित्थ लब्ध सत् कियन्त काल जघन्यत उत्कर्षतश्च भवति ? इति स्थितिद्वार प्रतिपादयन्नाह—सम्मत्तस्स सुअस्स य, छावट्ठीसागरोवमाइ ठिई । सेसाण पुव्वकोडी, देसूणा होइ उक्कोसा ॥ २ ॥ सम्यक्त्वस्य श्रुतस्य च लब्धिमङ्गीकृत्य सम्यक्त्वसामायिकश्रुतसामायिकयोरुत्कृष्टा स्थितिः षट्षष्टिः सागरोपमाणि किञ्चिदधिकानि ॥ २ ॥ कथ इति चेत् ? उच्यते— दो वारे विजयाइसु, गयस्स तिन्निच्चुए य छावट्ठी । नरजम्मपुव्वकोडी, पुहुत्तमुक्कोसतो अहिअ ॥ ३ ॥ देशविरतिसर्वविरतिसामायिकयोरुत्कृष्टा स्थितिर्देशोना पूर्वकोटी ससमासाधिकवर्षाष्टकोना पूर्वकोटीति यावत् । जघन्यतस्त्वाद्यसामायिकत्रयस्य स्थितिरन्तर्मुहूर्त्तम्, सर्वविरतिसामायिकस्यैकः समयः, चारित्रपरिणामारम्भ-

रामयानन्तरमेव कस्याप्यायुष्कक्षयसम्भवात्, देशविरतिपरिणामस्त्वन्तर्मौहूर्त्तिकः, एवं द्विविधत्रिविधादिभङ्गबहुलप्राणातिपातादिनिवृत्तिरूपत्वात्, सर्वजीवापेक्षया तु सर्वाणि सर्वदा इति । ३ । अथैकस्मिन् समये सामायिकचतुष्कस्य प्रतिपद्यमानकान् प्रतिपादयन्नाह—सम्मत्तदेसविरया, पलिअस्स असंखभागमेत्ताओ । सेढीअसंखभागो, सुए सहस्सग्गसो विरई ॥ ४ ॥ उत्कर्षत एकस्मिन् विवक्षितसमये सम्यक्त्वं देशविरतिं च प्रतिपद्यमानाः प्राणिनः क्षेत्रपल्योपमासङ्ख्येयभागमात्राः प्राप्यन्ते, किन्तु देशविरतिसामायिकप्रतिपत्तृभ्यः सम्यक्त्वप्रतिपत्तारोऽसङ्ख्येयगुणाः प्रतिपत्तव्याः, तथोत्कर्षत एकस्मिन् समये श्रुते सामान्यश्रुते अक्षरात्मके प्रतिपत्तारोऽसङ्ख्येयाः घनीकृतलोकैकश्रेण्यसङ्ख्येयभागमात्रा—लभ्यन्ते । तथा सर्वविरतिप्रतिपत्तार उत्कर्षत एकस्मिन् समये सहस्राग्रशो ज्ञेयाः । तथा जघन्यतश्चतुर्णामपि सामायिकानां प्रतिपत्तार एको द्वौ चेति गाथार्थः । ४ । सम्प्रति प्राक्प्रतिपन्नान् प्रतिपतितांश्च प्रतिपादयन्नाह—सम्मत्तदेसविरया, पडिवन्ना संपई असंखिज्जा । संखिज्जा य चरित्ते, तीसु वि पडिया अणंतगुणा ॥ ५ ॥ सम्यग्दृष्टयो देशविरताश्च प्राक् प्रतिपन्नाः सम्प्रति—विवक्षिते वर्त्तमानसमये उत्कर्षतो जघन्यतश्चासङ्ख्येयाः प्राप्यन्ते इति शेषः । किन्तु जघन्यपदादुत्कृष्टपदे विशेषाधिकाः । एते च प्रत्येकं प्रतिपद्यमानकेभ्योऽसङ्ख्येयगुणाः । 'संखिज्जा य चरित्ते' त्ति चारित्रे प्राक्प्रतिपन्ना सङ्ख्येयाः, एतेऽपि स्वस्थाने प्रतिपद्यमानकेभ्यो पूर्वप्रतिपन्नेभ्यश्च चरणपतिता अनन्तगुणाः, तेभ्यो देशविरतिपातिता असङ्ख्येयगुणाः, तेभ्योऽपि सम्यक्त्वप्रतिपतिता असङ्ख्येयगुणाः । तदेवमत्र श्रुतवर्जसामायिकत्रयपूर्वप्रतिपन्नाः, प्रतिपतिताश्चोक्ताः । ५ । अथ श्रुतस्य तानाह—सुअपडिवन्ना

सपइ, पयरस्स असखभागमेत्ताश्रो । सेसा समारत्था, सुअपरिवडिया हु ते सव्वे ॥ ६ ॥ सम्यगिमथ्यारूपस्य सामान्येनाक्षरात्मकस्य श्रुतस्य ये पूर्वप्रतिपन्नास्ते सम्प्रति—वर्त्तमानसमये प्रतरस्यासङ्ख्येयभागमात्रा प्राप्यन्ते । तथा श्रुतप्रतिपन्नमानकेभ्यस्तु ये शेपा ससारस्था जीवा भापालब्धिरहिताः पृथिव्यादय इत्यर्थः, ते सर्वेऽपि व्यावहारिकराश्यनुगता भापालब्धि प्राप्य प्रतिपतितत्वात् श्रुतप्रतिपतिता मन्तव्या, ते च सम्यक्त्वप्रतिपतितेभ्योऽनन्तगुणा. ॥ ६ ॥ अधुनान्तरद्वारमाह— सकृदवाप्तमपगत पुन सम्यक्त्वादि कियत्कालेनावाप्यते तत्राक्षरात्मकाविशिष्टश्रुतस्यान्तर जघन्यतोऽन्तर्मुहूर्त्तम्, उत्कृष्टत्वाह— कालमणत च सुए, अद्धापरियट्टओ य देसूणे । आसायणबहुलाण, उक्कोस अतर होइ ॥ ७ ॥ एकजीव प्रति कालोऽनन्त एतान्तर श्रुतेऽक्षरात्मके उत्कर्षतो भवतीति योग. । केपा ? आशातनाबहुलानां इति । साम्प्रतमविरहितद्वारमाह—अथ कियन्त काल अविरहेण एको द्व्यादयो वा सामायिक प्रतिपद्यन्ते ? इत्याह—सम्मसुअगारीण, आवलिअअसखभागमेत्ताओ । अट्ठसमया चरित्ते, सव्वे वि जहन्नदो समया ॥ ८ ॥ सम्यक्त्वश्रुतदेशविरतिसामायिकानां नैरन्तर्येण प्रतिपत्तिकाल आवलिकासङ्ख्येयभागमात्रा. समया', तथा अष्टौ समयाश्चारित्रे निरन्तर प्रतिपत्तिकालः, सर्वेपां जघन्योऽविरहितप्रतिपत्तिकालो द्वौ समयाविति गाथार्थः । अथ विरहकालद्वार प्रदर्श्यते—सुअसम्म सत्तय खलु, विरयाविरईअ होइ बारसग । विरए य पन्नरसग, विरहिअकालो अहोरत्ता ॥ ९ ॥ श्रुतसम्यक्त्वयोरुत्कृष्ट' प्रतिपत्तिविरहकालः सप्तक—अहोरात्रसप्तकम्, ततः परमवश्य कश्चित् कश्चित् प्रतिपद्यते, जघन्यतस्त्वेक समय इति । देशविरतेरुत्कृष्टः प्रतिपत्तिविरहकाल अहोरात्रद्वादशकम्, जघन्यतस्तु त्रय समया इति । सर्वविरतेरहोरात्रपञ्चदशकम्, जघन्यतस्तु समयत्रयमेवेति गाथार्थः । साम्प्रत

भवद्वारमाह–कियतो भवानेकजीवः सामायिकचतुष्टयं प्रतिपद्यते ? इति दर्शयन्नाह–सम्मत्तदेसविरया, पलिअस्सासंखभागमेत्ताओ । अट्ठभवा य चरित्ते, अणंतकालं च सुअसमए ॥ १० ॥ सम्यक्त्ववन्तो देशविरतिमन्तश्च स्वं स्वं सामायिकं क्षेत्रपल्योपमासङ्ख्येयभागमात्रान् भवान् यावल्लभन्ते, इदमत्र हृदयम्–एकजीव उत्कर्षतः सम्यक्त्वं देशविरतिं चासङ्ख्येयान् भवान् यावल्लभत इत्यर्थः, जघन्यतस्त्वेको भवः । तथोत्कर्षत एकजीवः सर्वविरतिं अष्टौ भवान् यावत्प्राप्नोति, ततः सिद्ध्यतीति । जघन्यतस्त्वेक एव । तथोत्कर्षत एक जीवः सामान्यश्रुतसामायिकमनन्तान् भवान् यावल्लभते, जघन्यतस्त्वेक भवमेव मरुदेव्यावच्चेति ॥ १० ॥ साम्प्रतमाकर्षद्वारमाह–आकर्षणमाकर्षः प्रथमतया ग्रहणं, मुक्तस्य वा ग्रहणमित्यर्थः । तिण्ह सहस्सपुहुत्तं, सयपुहुत्तं च होइ विरईए । एगभवे आगरिसा, एवइया हुंति नायव्वा ॥ ११ ॥ आद्यसामायिकत्रयाणामुत्कर्षत एकभवे सहस्रपृथक्त्वमाकर्षानेकजीवः करोति । सर्वविरतेः शतपृथक्त्वमाकर्षानेकभवे करोति । जघन्यतस्त्वेकमेवेति गाथार्थः ॥ ११ ॥ नानाभवाकर्षानाह–तिण्ह सहस्समसंखा, सहसपुहुत्तं च होइ विरईए । नाणाभवआगरिसा, एवइया होंति नायव्वा ॥ १२ ॥ आद्यत्रयाणां सहस्राण्यसङ्ख्येयानि, सर्वविरतेः सहस्रपृथक्त्वं च, एतावन्तो नानाभवेष्वाकर्षाः । इयं भावना–त्रयाणां ह्येकभवे सहस्रपृथक्त्वमाकर्षाणामुक्तम्, भवाश्च पल्योपमासङ्ख्येयभागसमयतुल्याः, ततश्च सहस्रपृथक्त्वं, तैर्गुणितं सहस्राण्यसङ्ख्येयानीति । सर्वविरतेरेकभवे शतपृथक्त्वमाकर्षाणामुक्तम्, भवाश्चाष्टौ शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं भवतीत्यवयवार्थः ॥ १२ ॥ अधुना क्षेत्रस्पर्शनाद्वारमाह–सम्मत्तचरणसहिआ, सव्वं लोअं फुसइ निरवसेसं । सत्त य चउदसभाए, पंच य सुअदेसविरईए ॥ १३ ॥ सम्यक्त्वचरणयुक्ताः प्राणिन उत्कृष्टतः सर्वं लोकं स्पृशन्ति, एते च केवलिसमुद्धातावस्थायामिति ।

जघन्यतस्त्वसङ्ख्येयभागमिति । तथा श्रुतसामायिकसहिता सप्तचतुर्दशभागान् स्पृशन्ति अनुत्तरेष्विलिकागत्या समुत्पद्यमानश्चशब्दात्पञ्च तमःप्रभायामिति । देशविरतिसहिता पञ्चचतुर्दशभागान् स्पृशन्ति अच्युते उत्पद्यमानाः, चशब्दाद्द्वयादींश्च । अन्यत्रेति अधस्तु ते न गच्छन्त्येव त परिणामापरित्यज्येत्यर्थः ॥ १३ ॥ साम्प्रत भावस्पर्शनोच्यते–श्रुतादिसामायिक कियद्भिः स्पृष्टम् ? इत्याह–सव्वजीवेहिं सुअं, सम्मचरित्ताइ सव्वसिद्धेहिं । भागेहि असंखिज्जेहि, फासिया देसविरई उ ॥ १४ ॥ सर्वजीवै साव्यवहारराश्यन्तर्गतै सामान्यश्रुत स्पृष्टम् । तथा सर्वसिद्धै सम्यक्त्वचारित्रे स्पृष्टे तदनुभवमन्तरेण सिद्धत्वानुपपत्ते', तथा सिद्धभागैरसङ्ख्येयैः स्पृष्टा देशविरतिः । इदमत्र हृदयम्—सर्वसिद्धानां बुद्ध्या असङ्ख्येयभागीकृता असङ्ख्येयभागैरेकभागोनैर्देशविरतिः स्पृष्टा, असङ्ख्येयभागेन तु न स्पृष्टा, यथा मरुदेवीस्वामिन्येति गाथार्थः ॥ १४ ॥ इत्यावश्यकमलयगिरिवृत्तौ ४३५ प्रतौ ३४२ । ३४३ पत्रे ॥ ३ ॥

अथ श्रीदशवैकालिकविचारा यथा—

अज्ञातपरम्परा' केचन धर्मलाभ न वदन्ति तदज्ञानम्, अवग्रहयाचनेऽर्थाद्धर्मलाभस्यायातत्वात् । तथा हि—

माणीपावारपिहिय, अप्पणा नावपगुरे । कवाड नो पणुल्लिज्जा, उग्गह से अजाइया ॥१८॥ वृत्तिर्यथा–शाणी–अतसीवल्कलना पटी, प्रावार –प्रतीत कम्बलाद्युपलक्षणमेतत्, एवमादिभि' विहित–स्थगित गृहमिति वाक्यशेषः । आत्मना –स्वय नापवृणुयात्–नोद्घाटयेत् । अलौकिकत्वेन तदन्तर्गतभुजिक्रियादिकारिणां प्रद्वेषप्रसङ्गात् । तथा कपाट–द्वारस्थगन न प्रेरयेत्–नोद्घाटयेत्, पूर्वोक्तदोषप्रसङ्गात्, किमविशेषेण ? न इत्याह–अवग्रहमयाचित्वा, आगाढप्रयोजनेऽननुज्ञाप्यावग्रह–

विधिना धर्मलाभमकृत्वा ॥ १८ ॥ इति श्रीदशवैकालिकपिण्डैषणाध्ययनप्रथमोद्देशके ११४ पत्रे ॥ ४ ॥

गृहस्था हि मुधादायिनः प्रशस्याः साधवश्च मुधाजीविनः प्रशस्याः । उक्तोऽर्थश्च दृष्टान्तद्वारा सुखाधिगम्यो भवतीति सदृष्टान्तं मुधादायिमुधाजीविस्वरूपं लिख्यते—

दुल्लहा उ मुहादाई, मुहाजीवी वि दुल्लहा । मुहादाई-मुहाजीवी, दोऽवि गच्छंति सुग्गइं ॥ १०० ॥ इति । वृत्तिर्यथा—दुर्लभा एव मुधादातारः, तथाविधभागवतवत्, मुधाजीविनोऽपि दुर्लभाः, तथाविधक्षुल्लकवत् । अमीषां फलमाह-मुधादातारो मुधाजीविनश्च द्वावप्येतौ गच्छतः सुगतिं-सिद्धिगतिं कदाचिदनन्तरमेव कदाचिद्देवलोकसुमानुष्यत्वप्रत्यागमनपरम्परया, ब्रवीमीति पूर्ववत् । अत्र भागवतोदाहरणम्—कश्चित् परिव्राजकः कञ्चनापि भक्तिमन्तं भागवतमवादीत्-यदि मदीयोदन्तमुद्वहसि ततोऽहं तव गृहे वर्षासमयं निर्वाहयामि, तेनोक्तम्-यदि मदीयां तप्तिं न करोषि, तेनोक्तम्-एवं करिष्ये, ततः प्रदत्तस्तेन तस्मै समाश्रयः । न क्षुषं चकार भोजनादिस्तस्य गृहाधिपतिः । अतिक्रान्ते कियत्यपि काले एकदा प्राप्तच्छिद्रैश्चोरैस्तस्य भागवतस्य प्रधानोऽश्वः प्रमादेन रक्षकाणामपहृतः । प्रभातं वर्त्तते, इति न शक्तास्ते तमश्वं निर्वोढुम्, ततोऽतिगहने तं ( मुक्त्वा ) तेऽन्यत्रोपाययुः, अत्रान्तरे प्रातरेव स्नातुं परिव्राजकस्तडागमुपाजगाम, दृष्टश्च तेन सरःसमीपवर्त्तिन्यां जाल्यामसौ तुरगः प्रत्यभिज्ञातश्च । अये ! सोऽयमश्वो योऽस्माकमुपकारिणो भागवतस्य तस्करैरपहृतः । तेन गत्वा स्वमावासमग्रे गृहपतिपुरुषाणामुक्तं यथा-मम स्नातुं सरसीं गतस्य जाल्यां धौतवासो विस्मृतं ततश्चाकथि । ततस्तैः पुमान् प्रहितः, तेन च तत्र गतेन दृष्टोऽसौ वाजी समानीतश्च कथितो गृहपतये । ततस्तेन समचिन्ति- अये ! व्याजेन व्रतिना ममोपकारः कृतः,

तत्कथमह निर्वाणदानफलं विहाय प्रत्युपकारेण दानप्रवृत्तिं विदधामीति सम्प्रधार्य गदितोऽसौ परिव्राजकः-भद्र ! व्रज त्वमिदानीम्, न कृतोपकारिणे भवते दानं विधास्यामि, यस्मादुपकारिणि विहितं दानं निष्फलमुपजायते, इत्येष मुधादायीति । मुधाजीविन्युदाहरणमुच्यते-कश्चिन्नरपतिरनित्यतां विलोक्य प्रियाणामपि पुत्रकलत्रपौत्रादीनामुपजातवैराग्यो धर्माधर्मपरीक्षां चक्रे । "को वा अणिविद्ध भुञ्जइ" ततस्तं परीक्षयामीति सम्प्रधार्य पुरुषानादिदेश-यथा राजा मोदकान् प्रयच्छति समागत्य गृह्यताम् । इति समाकर्ण्योद्घोषणामुपाजग्मुः कार्पटिकप्रभृतयोऽर्थिजनाः । पृष्टाश्च ते भूभुजा-केन भवन्तो जीवथ ? तत्रैकेनोक्तम्-अहं वाग्मुखेन, अपरेण गदितम्-अहं पादाभ्याम्, अपरेणोक्तम्-अहं हस्ताभ्याम्, अन्येन निवेदितम्-अहं लोकानुग्रहेण, क्षुल्लकसाधुनोक्तम्-अहं मुधिकयेति । ततस्तान्नरपतिः पुनर्जगाद-कथमिव ? इति ततः प्रथमो जगाद-अहं तावत्कथको जनानां विस्तार्य रामायणादिकथां कथयामि, तेन मुखेन जीवामीति । द्वितीय प्राह-अहं लेखवाहको घटिकामध्ये योजनं लङ्घयामि, तेन पादाभ्यां जीवामीति । तृतीयः प्राह-अहं हि लेखकोऽस्तो हस्ताभ्यां जीवामि । भिक्षुणोक्तम्-अहं प्रव्रजितः, अतो लोकानामनुग्रहेण । क्षुल्लकसाधुनोक्तम्-प्रव्रजितो जन्मजरामरणरोगशोकाद्युपद्रवशतोपद्रुतं, दारिद्र्यदौर्भाग्यकलङ्कपातकलुषितं, इष्टवियोगानिष्टसंयोगदुःखजनितव्यसनशतनिलयं, क्षुधापिपासाशीतोष्णक्लेशसहस्रसङ्कुलं, दैन्यचिन्ताजरादिभिः क्षणमप्यमुक्तसमीपं संसारं विलोक्य ततो निर्विण्णः प्रतिपद्यामुं शरीरमानसानेकदुःखजलधिविलङ्घनसेतुं, सौभाग्यसौजन्यौदार्योपकारकारणप्रतिनिष्ठं, ज्ञानविज्ञानजनकं, विजितसमस्तराजन्यचक्रराज्यसम्पादकं, स्वर्गावाससम्पादितगुणाशयसन्दोहं, मोक्षफलदायकं जैनं धर्मम् । ततो मुधिकया यथोपलब्धेनाहारजातेन जीवामीति निशम्य तत्रापितं, अहो !

एष धर्मः सर्वदुःखप्रमोक्षप्रसाधक इति निश्चित्य विशेषेणाचार्यसमीपे धर्ममाकर्ण्य प्रतिबुद्धो राज्ये सुतं संस्थाप्य प्रव्रज्यामसौ नरपतिरग्रहीत् । एष मुधाजीवी । इति दशवैकालिकपञ्चमाध्ययने प्रथमोद्देशके ॥ ५ ॥

ननु प्रस्तरघटितायां प्रतिमायां किं वन्दनपूजनादिविधिना, किं वा दर्शनेन ? मैवं अरे भद्रमुख ! भगवतोऽयमाकारः, एतद्दर्शनाच्च भगवत्स्मरणम्, ततश्च पुण्योत्पत्तिर्युक्तैव यथा–चित्रलिखितकान्तकान्तावलोकनात्कामाध्यवसायोत्पत्तेस्तन्निषिद्धं, तथेदं पुण्यहेतुत्वादादृतमपि । चित्रवशावलोकननिषेधश्चायम्—

चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकियं । भक्खरं पिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ ५९ ॥ इति । वृत्तिर्यथा–चित्रभित्तिं–चित्रगतां स्त्रियं न निध्यायेत्–नालोकयेत्, नारीं वा सचेतनां स्वलङ्कृतां, उपलक्षणादनलङ्कृतां न निरीक्षेत् । कथञ्चिद्दर्शनयोगेऽपि भास्करमिव सूर्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत्–द्राग् निवर्त्तयेत् । इति श्रीदशवैकालिकाष्टमाचारप्रणिधानाध्ययने १५७ पत्रे ॥ ६ ॥

पुनरपि दण्डकाक्षराणि लिख्यन्ते—

से भिक्खू वा भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा से कीडं वा पयंगं वा कुंथुं वा पिपीलियं वा हत्थंसि वा पायंसि वा बाहुंसि वा ऊरुंसि वा उदरंसि वा सीसंसि वा वत्थंसि वा पडिग्गहंसि वा कंबलंसि वा पायपुंछणंसि वा रयहरणंसि वा गोच्छगंसि वा उडगंसि वा दंडगंसि वा पीढगंसि वा फलगंसि वा सेज्जंसि वा संथारगंसि वा अन्नयरंसि वा तहप्पगारे उवगरणजाए तओ संजयामेव पडिलेहिय

मेहुण पि य । इति श्रीमहानिशीथद्वितीयाध्ययने १३ पत्रे ॥ २ ॥

अथ केचिदुपधानोद्वहन न स्वीकुर्वते तेऽवश्य बहुलससारिणो वेद्याः ।

जे केइ अणुवहाणेण सुपसत्थ नाण अहीयति अज्झावयति वा अहीयते इ वा अज्झावयते इ वा समणुजाणति तेण महापावकम्मे महती सुपसन्थनाणस्सासायण पकुव्वति, से भयव ! जइ एव ता किं पचमगलस्स ण उवहाण कायव्व ? गोयमा ! पढम नाण तओ दया । इति श्रीमहानिशीथतृतीयाध्ययने पञ्चदशे पत्रे ॥ ३ ॥

अथातिस्फुटानि प्रतिमार्चनाचराणि लिख्यन्ते—

भावच्चणमुग्गविहारिया य दव्वचण तु जिणपूया पढमा जइण दोन्निवि गिहीण पढम चिय पसत्था । इति महानिशीथतृतीयाध्ययने १६ पत्रे ॥ ४ ॥

केचिच्चाज्ञानिनो वराका' श्रीजिनोक्ताक्षरमात्रमप्यश्रद्दधानोऽनन्तसंसारीति विदन्तोऽप्यवश्यभाविभावानामप्रतीकार्यत्वेन कर्मगतेरचिन्त्यत्वेन सकलागमप्रधान श्रीमहानिशीथाभिधान शास्त्रमेव न मन्यते किं कुर्मस्तान् प्रति, न चाशङ्कनीयम्, इद हि कलिकालबलात्कचित्कचित्त्रुटितमभूदिति श्रूयते, ततोऽस्य सयोजनावसरे कैश्चिदशिष्टैरन्य यत्किञ्चित्क्षिप्त भविष्यतीति । यत इद श्रीहरिभद्रसूरिभिः सर्वसमत्या लिखित श्रीवृद्धवादिसूरिश्रीसिद्धसेनदिवाकरश्रीजिनदासगणिक्षमाश्रमणादिभिर्महापुरुषैर्युगप्रधानैः पूर्वगतश्रुतधारिभिर्भूयोभि' सभूयेद बहुमत चेत्यत्रैव लिखितमस्ति । तथा हि—

एय तु ज पचमगलमहासुअक्खधस्स वक्खाण त महया पबधेण अणतगमपज्जवेहिं सुत्तस्स अप्पियभूयाहिं निज्जुत्तिभास-

चुर्णीहिं जहेव अणंतनाणदंसणधरेहिं तित्थयरेहिं वक्खाणियं तहेव समासओ वक्खाणिज्जंतं आसि । अह अन्नया कालपरिहाणिदोसेणं ताओ निज्जुत्तिभासचुन्नीओ वुच्छिन्नाओ, इओ य वच्चंतेणं कालसमएणं महिड्ढिपत्ते पयाणुसारीवइरसामीनाम दुवालसंगसुयहरे समुप्पन्ने, तेण य पंचमंगलमहासुयक्खंधस्स उद्धारो मूलसुत्तस्स मज्झे लिहिओ, मूलसुत्तं पुण सुत्तत्ताए गणहरेहिं अत्थत्ताए अरिहंतेहिं भगवंतेहिं धम्मतित्थयरेहिं तिलोगमहिएहिं वीरजिणंदेहिं पन्नवियं, एस वुड्ढसंपदायो एत्थ य जत्थ जत्थ पएणाणुलग्गं सुत्तालवगं न संपज्जइ तत्थ तत्थ सुयहरेहिं कुलिहियदोसो न दायव्वोत्ति, किं तु जो सो एयस्स अचिंतचिंतामणिकप्पभूयस्स महानिसीहसुयक्खंधस्स पुव्वायरिसो आसि तहिं चेव खंडाखंडीए उद्देहियाएहिं हेऊहिं बहवे पत्तगा परिसडिया तहावि अच्चंतसुहुमत्थाइसयंति इमं महानिसीहसुयक्खंधं कसिणपवयणस्स परमसारभूयं परं तत्तं महत्थंति कलिऊण पवयणवच्छल्लत्तणेणं बहुभव्वसत्तोवयारियंति काउं तहा य आयहियट्ठाए आयरियहरियभद्देणं जं तत्थायरिसे दिट्ठं तं सव्वसम्मत्तीए साहिऊण लिहियंति, अन्नेहिंवि सिद्धसेणदिवायरवुड्ढवाइजक्खसेणदेवगुत्तजसवद्धणखमासमणसीसरविगुत्तणेमिचंदजिणदासगणिखमगसव्वरिसिपमुहेहिं जुगप्पहाणसुअहरेहिं बहुमन्नियमिणंति । इति श्रीमहानिशीथतृतीयाध्ययने २१ पत्रे ॥ ५ ॥

यो निरुपधानः श्रुतमधीते स यादृशो भवति तल्लिख्यते—

अविणओवहाणेणं चेव पंचमंगलाइं सुअनाणं अहिज्जेज्जा अज्झावेज्जा अज्झावयमाणस्स वा अणुमन्नियमाणेज्जा से णं पियधम्मे ण भवेज्जा दढधम्मे ण भवेज्जा, भत्तिजुत्ते हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थुभए हीलिज्जा जाव णं गुरुं

हीलिज्जा गुरु आसाएज्जा अतीताणागए वट्टमाणे तित्थयरे आसाएज्जा आयरियउवज्झायसाहुणो जण आसाएज्जा सुयणाणारिहंतसिद्धसाहू तस्स णं सुदीहकालं अणंतसंसारसागरमाहिंडेमाणस्स तासु तासु असंवुडवियडासु चुलसीलक्खपरिसंखासु सिउसिणमिस्सजोणीसु परियडइ इति । इति महानिशीथतृतीयाध्ययने २२ पत्रे ॥ ६ ॥

केचिच्च सामयिकपौषधादि कृत्वाऽनन्तरमीर्यापथिकीं प्रतिक्रामन्ति परं तत्कल्पितं ज्ञेयमत्र त्वेवमुक्तमस्ति तद्यथा—

अणाउलचित्ते असुहकम्मक्खवणट्ठा किंचि आयहिय चिइवंदणाई अणुट्ठेज्जा तया तयट्ठे चेव उवउत्ते से भवेज्जा, जया णं से तयत्थे उवउत्ते भवेज्जा तया णं तस्स परमेगग्गचित्तसमाही हवेज्जा तया चेव सव्वजगजीवपाणभूयसत्ताणं जहिट्ठफलसंपत्ती भवेज्जा, तो गोयमा णं अपडिक्कंताए इरियावहियाए न कप्पई चेव काउं किंचि चिइवंदणसज्झायाइयं फलासायममिकंखगाणं एएणं अट्ठेणं गोयमा ! एवं वुच्चइ । इति श्रीमहानिशीथतृतीयाध्ययने २२ पत्रे ॥ ७ ॥

अथ प्रश्नांशपदमूलभूतवर्द्धमानविद्यासत्तासूचकगन्धचूर्णसत्तासूचकजिनप्रतिमासत्तासूचकमालारोपणविधिसत्तासूचकाक्षराणि लिख्यन्ते—

चउत्थभत्तेणं साहिज्जइ एयाए विज्जाए सव्वगओ नित्थारगपारगो होइ, उवट्ठावणाए वा गणिस्स अणुन्नाए वा सत्तवारा परिजवेयव्वा नित्थारगपारगो होइ, उवट्ठावणाए वा अभिमंतिज्जइ आराहगो भवइ विग्घविणायगा उवसमं ति, सूरो संगामे पविसंतो अपराजिओ भवइ, कप्पसम्मत्तीए मंगलवाहिणी खेमवाहिणी भवइ, तहा साहुसाहुणीसमणोवासगसड्ढियासेससाहम्मियजणचउव्विहेणावि समणसंघेण नित्थारगपारगो भवेज्जा, धन्नो संपुन्नलक्खणो सि तुमं ति उच्चारेमाणेण

गंधमुट्ठीओ घेतव्वाओ, तओ जगगुरूणं जिणिंदाणं पूएगदेसाओ गंधड्ढामिलाणसेयमल्लदामं गहाय सहत्थेणोभयक्खंधेसु- मारोवयमाणेणं गुरुणा णीसंदेहमेवं भाणियव्वं जहा भो भो जम्मंतरसंचियगुरुपुन्नपब्भारसुलद्धसुविढत्तसुसहलमणुयजम्मे देवाणुप्पिया ठइयं च णरयतिरियगइदारं तुज्झ त्ति । इति श्रीमहानिशीथतृतीयाध्ययने २३ पत्रे ॥ ८ ॥

यो हि सावद्यानवद्यभाषाविशेषं न जानीते तस्य वक्तुमपि नानुज्ञा किं पुनर्व्याख्यानादि कर्त्तुम् । तथा हि—

जिब्भकुसीले से णं अणेगहा तं जहा–तित्तकडुकसायमहुराइं लवणाइं रसाइं आसायंते अदिट्ठासुयाइं इहपरलोगोभयवि- रुद्धाइं सदोसाइं मयारजयारुच्चारणाइं अयसब्भक्खाणासंताभिओगाइं वा भणंति, असमयन्नू धम्मदेसणापवत्तणेणं य जिब्भा- कुसीले णेए, से भयवं ! भासाए विभासियाए कुसीलत्तं भवति ? गोयमा ! भवति, से भयवं ! जइ एवं ता धम्मदेसणं न कायव्वं ? गोयमा ! सावज्जणवज्जाणं, वयणाणं जो न याणइ विसेसं । वुत्तुंपि तस्स न खमं, किमंग पुण देसणं काउं ॥१॥ इति श्रीमहानिशीथतृतीयाध्ययने २४ पत्रे ॥ ६ ॥

अथ केचन मिथ्यात्विकृतं तपोऽनुष्ठानादिकं सर्वं व्यर्थं, प्रत्युत कर्मबन्धकारणं, इत्यादि वदन्ति, परं किं कुर्वन्तु ते वराका अनाघ्रातसिद्धान्तगन्धाः, आघ्रातसिद्धान्तगन्धा वा, कर्मैकवशगा भूरितरभवभ्रमणभवितव्यतया परिभूयमाना यत्कि- ञ्चिद्वदन्तु, परं सिद्धान्ते त्वेवम्—

तओ भणियं नाइलेणं जहा मा वच्छ ! तुमं एतेणं परिओसमुवयासु जहा अहयं असइवारेणं परिमुसिओ, अकामनि- जराएवि किंचि कम्मक्खयं भवइ किं पुण जं बालतवेणं, ता एते बालतवस्सिणो दट्ठव्वा जओ णं किंचि उस्सुत्तं मग्गयारित्त-

मेएरिसं पदीसइ इत्यादि । इति श्रीमहानिशीथचतुर्थाध्ययने २८ पत्रे ॥ १० ॥

तथा ये आचारादिश्रुतोक्तमन्यथाऽनुतिष्ठन्ति ते यादृशा भवन्ति तल्लिख्यते—

तेण सद्धेण हरिवंसतिलयमरगयच्छविणो बावीसइम धम्मतित्थयरअरिट्ठनेमिनामस्स सयासे वद्धवचियाए गणेण आयारंग अणंतगमपज्जवेहिं पन्नविज्जमाणं समवधारियं, तत्थ य छत्तीसआयारे पन्नविज्जंति तेसिं च णं जे केई साहू वा साहुणि वा अन्नयरमायारमइक्कमेज्जा से णं गारत्थीहिं उवमेय, अहन्नहा समणुट्ठेज्जा वायरेज्जा पन्नविज्जा वा तओ णं अणंतसंसारी भवेज्जा । इति श्रीमहानिशीथचतुर्थाध्ययने ३१ पत्रे ॥ ११ ॥

यश्च कर्णेऽनिचितकर्पासतूलः शेते, तस्य प्रायश्चित्तमित्यक्षराणि लिख्यन्ते—

अकएणं कन्नविवरेसु कप्पासगरूवेणं तुयट्टइ संथारंमि ठायज्जा एएसु पत्तेगं उवट्ठावणं । इति श्रीमहानिशीथसप्तमाध्ययने ६२ पत्रे ॥ १२ ॥

केचिच्च चतुर्दशीं विहाय पौर्णमास्यामुपवासादिकं कुर्वते तदनागमिकम् । यतः—

संते बलवीरियपुरिसक्कारपरक्कमे अट्ठमिचउद्दसीनाणपंचमीपज्जोसवणचाउम्मासिए चउत्थट्ठमछट्ठेण करेज्जा । इति श्रीमहानिशीथसप्तमाध्ययने ६१ पत्रे ॥ १३ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितपुण्यरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे अपरतटे श्रीमहानिशीथविचारनामा द्वितीयस्तरङ्गः ॥ २ ॥

॥ यद्वदनकन्दरोदरसमुत्थितः श्रुतमृगाधिराजयुवा । व्यापादयति भवद्विपमुन्मत्तं स जयताद्गणभृत् ॥ १ ॥

अथ श्रीदशाश्रुतस्कन्धविचारा यथा–तत्र च श्रावकप्रतिमास्वरूपं लिख्यते—

से किं तं किरियावादीयावि भवति तंजहा–आहियवादी आहियपन्ने आहियदिट्ठी सम्मावादी णियावादी अत्थि परलोगवादी अत्थि इह लोए अत्थि परलोगे अत्थि माता अत्थि पिता अत्थि अरहंता अत्थि चक्कवट्टी अत्थि बलदेवा अत्थि वासुदेवा अत्थि सुकडदुक्कडाणं फलवित्तिविसेसे सुचिण्णा कम्मा सुचिण्णफला भवंति दुचिण्णा कम्मा दुचिण्णफला भवंति सफले कल्लाणपावए पच्चायंति जीवा अत्थि णिरया अत्थि देवा अत्थि सिद्धा से एवं वादी एवं पन्ने एवं दिट्ठी छंदरागमतिणिविट्ठेयावि भवति से भवति महिच्छे जाव उत्तरगामिए नेरइए सुक्कपक्खिए आगमेस्साणं सुलभबोधिएयावि भवति, से तं किरियावादी, सव्वधम्मरुईयावि भवइ, तस्स णं बहूणि सीलव्वयगुणविरमणपच्चक्खाणपोसहोववासाइं णो सम्मं पट्ठविताइं भवंति पढमा उवासगपडिमा १ । अहावरा दोच्चा उवासगपडिमा सव्वधम्मरुईयावि भवति, तस्स णं बहूणि सीलव्वय जाव पट्ठविताइं भवंति से णं सामाइयं देसावगासियं णो सम्मं अणुपालित्ता भवति दोच्चा उवासगपडिमा २ । अहावरा तच्चा उवासगपडिमा सव्वधम्मरुईयावि भवइ तस्स णं बहूइं सील जाव सम्मं पट्ठविताइं भवंति सेणं सामाइयं देसावगासियं सम्मं अणुपालइत्ता भवति से णं चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु पडिपुण्णं पोसहं णो सम्मं अणुपालेत्ता भवति, तच्चा उवासगपडिमा ३ । सव्वधम्मरुईयावि भवइ तस्स णं बहूइं सीलव्वयजाव सम्मं पट्ठवियाइं भवंति से णं सामाइयदेसावगासियं सम्मं अणुपालइत्ता भवति से णं चाउद्दसट्ठम जाव अणुपालइत्ता भवति से णं एगराइयं उवासगपडिमं

णो सम्म अणुपालइत्ता भवति, चउत्था उवासगपडिमा ४। अहावरा पचमा उवासगपडिमा सव्वधम्मरुईयावि भवति जाव से ण एगरातिय उवासगपडिम सम्म अणुपालइत्ता भवति से ण असिणाणए वियडभोई मउलियडे दियाबभयारी रत्ति परिमाणकडे से ण एतारूवेण विहारेण विहरणमाणे जहन्नेण एगाह वा दुयाह वा तियाह वा उक्कोसेण पच मासे विहरेज्जा, पचमा उवासगपडिमा ५। अहावरा छट्ठा उवासगपडिमा सव्वधम्मरुईयावि भवति जाव से ण एगरातिय उवासगपडिम सम्म अणुपालइत्ता भवति से ण असिणाणवियडभोई मउलियडे रातोवराय बभयारी सचित्ताहारे से अपरिण्णाते भवति से ण एतारूवेण विहारेण विहरमाणे जाव एगाह वा दुयाह वा तियाह वा उक्कोसेण छम्मासे विहरेज्जा, छट्ठा उवासगपडिमा ६। अहावरा सत्तमा उवासगपडिमा सव्वधम्मरुईयावि भवति जाव रायोवराय बभयारी सचित्ताहारे से परिण्णाते भवति से ण एतारूवेणं विहारेण विहरमाणे जाव एगाह वा दुयाह वा तियाह वा उक्कोसेण सत्तमासे विहरेज्जा, सत्तमा उवासगपडिमा ७। अहावरा अट्ठमा उवासगपडिमा सव्वधम्मरुईयावि भवति जाव रातोवरात बभयारी भवति सचिताहारे से परिण्णाते भवति आरभे से परिण्णाते भवति पेस्सा से अपरिण्णाते भवति से ण एतारूवेण विहारेण विहरमाणे जाव एगाह वा दुयाह वा तियाह वा उक्कोसेण अट्ठमासे विहरेज्जा, अट्ठमा उवासगपडिमा ८। अहावरा णवमा उवासगपडिमा सव्वधम्मरुईयावि भवइ जाव आरभे से परिण्णाते भवति पेस्सा से परिण्णाता भवति उद्दिट्ठभत्ते से अपरिण्णाते भवति से ण एतारूवेण विहारेण विहरमाणे जाव एगाह वा दुयाह वा तियाह वा उक्कोसेण णवमासे विहरेज्जा, णवमा उवासगपडिमा ९। अहावरा दसमा उवासगपडिमा सव्वधम्मरुईयावि भवति पेस्सा से परिण्णाता भवति उद्दिट्ठभत्ते से परिण्णाते भवति से ण खुरमुडे

छिहलिधारए वा तस्स णं आभट्ठस्स समाणस्स कप्पंति दुवे भासाओ भासितए तं जहा जाणं जाणं अजाणं ना णो जाणं एतारूवेणं विहारेणं विहरमाणे जहन्नेणं एगाहं ना दुयाहं वा तियाहं वा उक्कोसेणं दसमासे विहरेज्जा, दसमा उवासगपडिमा १० । अहावरा एक्कारसमा उवासगपडिमा सव्वधम्मरुईयावि भवइ जाव उद्दिट्ठभत्ते से परिणाते भवति सेणं खुरमुंडे वा लुत्तसिरए वा गहितायारभंडगणेवत्थे जारिसे समणाणं णिग्गंथाणं धम्मे पणते तं सम्मं काएणं फासेमाणे पालेमाणे पुरतो जुगमायाए पेहमाणे दट्ठूण तसे पाणे उद्धट्टु पायं रीएज्जा साहट्टु पायं रीएज्जा वा तिरिच्छं वा पायं कट्टु रीएज्जा संति परकमे संजतामेव परकमेज्जा णो उज्जुयं गच्छेज्जा केवलं से णाए पेज्जबंधणे अव्वोच्छिणे भवति एवं से कप्पति णायाणुवित्तिए, एत्थ णं तस्स पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे कप्पइ से चाउलोदणे पडिग्गहित्तए णो से कप्पति भिलिंगसूवे पडिग्गहित्तए, तत्थ णं तस्स पुव्वाउत्ते भिलिंगसूवे पच्छाउते चाउलोदणे कप्पति से भिलिंगसूवे पडिग्गहित्तए णो कप्पति चाउलोदणे पडिग्गहित्तए, तत्थ णं पुव्वागमणेणं दोवि पुव्वाउत्ताइं कप्पंति दोवि पडिग्गहित्तए, तस्स पुव्वागमणेणं दोवि पच्छाउत्ताइं णो से कप्पंति दोवि पडिग्गहित्तए, जे से तत्थ पुव्वागमणेणं पुव्वाउत्ते से कप्पति पडिग्गहित्तए, जे से तत्थ पुव्वागमणेणं पच्छाउत्ते णो से कप्पइ पडिग्गहित्तए । तस्स णं गाहावतिकुलं पिंडवायपडियाए अणुप्पविट्ठस्स कप्पति एवं वदित्तए समणोवासगस्स पडिमापडिवण्णस्स भिक्खं दलयह, तं चेतारूवेणं विहारेणं विहरमाणं केइ पासित्ता वदेज्जा—के आउसो तुमेसि वत्तव्वे सिया समणोवासए पडिमापडिवण्णए अहमंसीति वत्तव्वं सिया, से णं एतारूवेणं विहारेणं विहरमाणे जाव एगाहं वा दुयाहं वा तियाहं वा

उक्कोसेणं एक्कारसमासे विहरेज्जा, एक्कारसमा उवासगपडिमा ११। एताओ थेरेहिं भगवंतेहिं एक्कारसउवासगपडिमाओ पण्णत्ताओ त्तिबेमि। छट्ठा दसा सम्मत्ता॥ अथैतच्चूर्णिर्यथा—किरियावादीवि भवति आहियवादी एव चेव अत्थित्तेण माणियव्वं जाव से य भवति महिच्छे जहा अकिरियावादिस्स णवर उत्तरगामिए सुक्कपक्खिए आगमिस्सेण सुलभबोहीए यावि भवति सव्वधम्मरुई यावि भवति, धर्मः-स्वभाव इत्यनर्थान्तरम्, जीवाजीवयोः यस्य द्रव्यस्य गतिस्थित्यवगाहनादि अहवा सर्वधर्मा आज्ञाग्राह्या हेतुग्राह्याश्च, ते रोचते-सद्दहति दसप्पगारो वा खमादिसमणधम्मो तस्स य बहूणि सीलव्वय० सील-सामाइय देसावगासिय पोसहोववासो अतिहिसविभागो य, वयाणि पचाणुव्वयाणि, 'गुण' त्ति तिण्णि गुणव्वयाणि, पोसहो चउव्विहो आहारपोसहो, सरीरसक्कारपोसहो. अव्वावारपोसहो, बंभचेरपोसहो। 'णो सम्म पट्ठवियाइं' णो सम्यक् पडिमेधो 'णो सम्म' यथोक्त 'पट्ठवियाइं' ति प्रस्थापितानि आत्मनि यथा प्रतिमा प्रस्थापिता देवकुले प्रतिपत्ति प्रतिमानां वा 'पडिमा दसणसावगो' त्ति पढमा पडिमा १। अहावरा दोचा-अथेत्यानन्तर्ये अपरा-अन्या सामाइय देसावगासिय 'णो सम्म' यथोक्त ण सक्केति काएण तिविहेणावि करणेन काएण दुयरा अणुपालिज्जति तेण कायग्रहणं, दोचा पडिमा २। चतुर्दशी अट्ठमी उद्दिट्ठा-अमावासा पडिपुण्णं आहारादि ४ तचा पडिमा ३। यद्दिवस उववासो तद्दिवस रत्तिं पडिमं पडिवज्जति त ण सक्केति चउत्था पडिमा ४। पडिमपि अणुपालेति असिणाणते य ण्हाहिति पचमासे वियडभोजी-प्रकाशभोजी दिवसतो भुजति न रात्रौ पचवि मासे मउलिकडो-साउगस्स दोवि अंचलाओ हेट्ठा करेति कच्छं ण बधति जाव पडिमा पचमासिया ण समप्पेति तावदिवसो बंभयारी रत्तिं परिमाणं करेति दो तिण्णि य,

पोसहिओ रत्तिंपि बंभचारी 'से' त्ति णिद्देसे जो हेट्ठा भणितो इहगुलक्खणेण एतारूवेण अह दिवसो कहं एगाहं स तं पडिवण्णो कालगतो य संजमं वा गेण्हेज्जा एतेणेगाहं वा दुयाहं वा इयरहा संपुण्णा पंचमासा अणुपालेयव्वा एवं जहा भणिया 'एस'त्ति पंचमासिया अहासुत्ता-जहासुत्ते भणिया कप्पेति-मज्जाया यथातथ्यो मग्गो १ णाणादी २ जहामग्गो ण विराहिज्जति सम्मं अट्टदुहट्टाणि ण चिंतेति स्पृष्टा-फासिता पालिता-रक्खिता सोभिता-ण भग्गा तीरिता-अंतं नीता किट्टिता-कीर्त्तिता आयरियाणं कहिता आराधिता ण विराहिता आणा-सुअं तदुपदेसेण अणेहिं पालितं पालेइ अणुपालेइ भवति होति पंचमा ५। रातोवरातंति रत्तिंदिया य रत्तीए उचरमो दिवसे सचित्तं उदगं कंदादि वा अपरिणाता अपच्चक्खाता आहारेति अपोसहितो, छट्ठा पडिमा ६। आरंभकरणे कारावणे वा णिउज्जति जं से कम्मं तं करेति सयं परेणवि कारवेति अणुमोयति अ पोसहितो पोसहिए अणुमोयति केवलं सचित्तं णाहारेति उदगफलादि, सत्तमा पडिमा ७। आरंभं सयं ण करेति किसिवाणिज्जादि पेस्सा-भयगा तेहिं करावेति अट्ठमा पडिमा ८। णवमासियाए अप्पणा परेणावि ण करेतिवि ण कारवेतिवि। जं पुण तं णिमित्तं कोइ उवक्खडेति तं भुंजइ नवमा पडिमा ९। दसमाए उद्दिट्ठभत्तंपि न भुंजति स गिहे चेव अच्छाति तहिं अच्छंतो खुरमुंडतो छिगलिं वा धारेमाणो छिगली चडो जहा परिव्वायगाणं, आभट्ठो एक्कसिं समाभट्ठो पुणो पुणो परियाभट्ठो वा, तेण किंचिद्दव्वजातं णिक्खतगं तं च से पुत्तादी ण जाणति सामातितो वा से ताहे पुच्छति कहिं कयंतं दवियं जति ण कहेति अंतराइयदोसा अचियत्तं न तेसिं संकादि वा तेसिं णूणं एअं णिण्हितुकामो खइयं चणेण तम्हा जति जाणति तो कहेति अह ण याणति तो भणति अहंपि ण याणामि एयातो दोभासातो

दसमा पडिमा १० । एकारसमीए गिहातो णिक्खमति से णं खुरमुंडए वा लुत्तसिरजो लोओ कतो । सिरे जायंते शिरजा केशा इत्यर्थः । गहियारभंडग साहुलिंग रयोहरणपात्रादिविभासा णेवत्थ साहुरूवसरिस तेसिं जे इमे समणधम्मे तारिस धम्म अणुपालेमाणे विहरति इरियासमिए उवउत्ता पुरतो युगमात्र आदाय गृहीत्वा रीयति-विहरति दट्ठूण चक्खुसा तसा-बेइदियादिपाणा किं तेसिं मज्झेण जति नेत्युच्यते-तदट्ठु उक्खिविचा साहट्टु साहरित्ता व्यतिरिच्यन्ते रित्थ करेति सतित्ति जति अण्णो मग्गो विज्जति सजयाए जयणाए उवउत्ता इरियासमितीए परकमेज्जा अविज्जमाणे वा तेणेव जयणाए गच्छति । अहवा सति परकमे सते उट्ठाणकम्मबलविरियपरकमे परिहारेण गच्छति जयणाए उवउत्तो इरियासमितीए अण्णो वा सपरकमो पथो णत्थि तेणा वा सावताणि वा सीहादीणि वा सव्व तेण चत्त केवलाति तदेवेगेण सणातगा मावादि पेज्जवधण-राग इत्यर्थः । ताहे णायविहिं एति तस्स ण तत्थागमणेण पुव्वाउत्ते विभासा सो भिक्ख हिंडतो ण धम्मलाभेति तस्स ण गाहा- वति एव वदति समणोवासगस्स पडिमा-कठा एतारूवेण-एतप्पगारेणं रूवसद्दो लक्खणत्थो केवित्ति इत्थी वा पुरिसो वा पासित्ता पेक्खित्ता कस्त्व ? किं व्रती वा ? ब्रवीति-समणोह किं वतित्ति ज भणह पडिमापडिवण्णोहमिति उपप्रदर्शने ।

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितधर्मरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरेऽपरतटे दशाश्रुतविचारनामा तृतीयस्तरङ्गः ॥ ३ ॥

यद्वदनपद्मकोशादुदित सिद्धान्तमारुतः सुरभिः । कविचञ्चरीकचक्र, प्रीणयति स तीर्थकृज्जयति ॥ १ ॥

अथ श्रीबृहत्कल्पविचारा यथा—

तत्र च केचन 'सुसाणि सुन्नागारे वा' इत्यादीन्यन्यानि वा कपाटनिषेधाक्षराणि दर्शयन्तः सकपाटवेश्मस्थायिन इमे मुनय एव न भवन्तीत्यादि ब्रुवाणा आचार्योपाध्यायादिमहापुरुषाशातनया संसारं पल्लवयंति, कपाटनिषेधश्च जिनकल्पिकाश्रितः स्थविरकल्पिके योजयन्तीति नयनौषधं श्रवणयोः क्षिपन्तीति । स्थविरकाल्पिकानां प्रत्युताकपाटोपाश्रयावस्थाने दोषा इत्यक्षराणि लिख्यन्ते—

कप्पइ निग्गंथाणं अवंगुयदुवारिए उवस्सए वत्थए । कल्पते निर्ग्रन्थानामपावृत्तद्वारे-उद्घाटद्वारे उपाश्रये वस्तुमिति सूत्रार्थः । अथ भाष्यविस्तरः-निग्गंथदारपिहणे, लहुओ मासो उ दोसु आणाई । अइगमणे निग्गमणे, संघट्टणमाइ पलिमंथो ॥ १ ॥ निर्ग्रन्था यदि द्वारपिधानं कुर्वन्ति तदा लघुको मासः प्रायश्चित्तम्, आज्ञादयश्च दोषाः, विराधना त्वियम्—कोऽपि साधुरतिगमनं-प्रवेशं करोति, अन्येन च साधुना द्वारपिधानाय कपाटं प्रेरितं तेन च तस्य शिरस्यभिघाते परितापादिका ग्लानारोपणा, एवं निर्गमनं कुर्वतोऽपि केनचिद्बहिःस्थितेन पश्चान्मुखं कपाटे प्रेरिते शीर्षं भिद्यते तथा त्रसजन्तूनां सङ्घट्टनमादिशब्दात्परितापनमपद्रावणं वा द्वारे पिधीयमाने अपाव्रियमाणे वा भवेत्, परिमन्थश्च-सूत्रार्थव्याघातो भूयो भूयः पिदधतामपावृण्वतां च भवति । एतामेव निर्युक्तिगाथां व्याख्यानयति—घरकोइलिया सप्पे, संचाराई य हुंति हेट्ठुवरिं । ढंकितवंगुरिंते, अभिघातो नितइंताणं ॥२॥ द्वारस्याधस्तादुपरि च गृहकोकिला वा सर्पो वा सञ्चारिमा वा कीटिकाकुन्थुकंसारिकादयो जीवा भवेयुः, आदिशब्दात्कोलिकादयो वा संपातिमसत्वाः, ततो द्वारं ढंकयतामपावृण्वतां च-उद्घाटयतां 'नितइंताणं' ति निर्गच्छन्तां प्रविशतां वा गृहकोकिलादिप्राण्यभिघातो भवेत् । सर्पवृश्चिकादिभिर्वा साधूनामेवाभिघातो भवेत् । द्वितीयपदे

द्वार पिदध्यादपि कथम् ? इत्याह—सिय कारणे पिहिज्जा, जिणजाणग गच्छि इच्छिमो नाउ । आगाढकारणमि उ, कप्पइ जयणाइ उवएस ॥ ३ ॥ स्यात्–कदाचित् कारणे पुष्टालवने पिदध्यादपि द्वारम् । जिना'–जिनकल्पिका ज्ञायका'–तस्य कारणस्य सम्यग्वेत्तार पर द्वार न पिदधति । शिष्य' प्राह–गच्छे गच्छवासिनां इच्छामो वय विधिं ज्ञातुम्, सूरिराह–आगाढ प्रत्यनीकस्तेनादिरूप यत्कारण तत्र यतनया वक्ष्यमाणलक्षणया गच्छवासिनां द्वार स्थगयितुं–पिधातु कल्पते । एष निर्युक्ति-गाथासमासार्थ' । अथैनामेव विवृणोति—जाणति जिणा कज्ज, पत्तेवि उ त न ते निसेवति । थेरावि उ जाणती, अणागय केइ पत्त तु ॥ ४ ॥ जिनाः जिनकल्पिका अधितसातिशयश्रुतास्तत्कार्यमनागतमेव जानन्ति येन द्वार पिधीयते तच्च प्रत्यनीकस्तेनादिक वक्ष्यमाणलक्षण तस्मिंश्च प्राप्तेऽपि तत् द्वारपिधान ते भगवन्तो न निषेवन्ते, निरपवादानुष्ठानपरत्वात् । स्थविरा अपि स्थविरकल्पिका' अपि सातिशयश्रुतज्ञानाद्युपयोगबलेन केचिदनागतमेव जानन्ति, केचित्तु निरतिशया प्राप्तमेव तत्कार्यं जानन्ते, ज्ञात्वा च यतनया तत्परिहरन्ति । अहवा जिणप्पमाणा कारणसेवी अदोसव होइ । थेरावि जाणग चिय, कारणजयणाइ सेवता ॥ ५ ॥ अथवा ' जिणजाणग ' त्ति पदमन्यथा व्याख्यानयति—जिनः–तीर्थङ्करस्तस्य प्रामाण्यात्कारणाद्द्वारपिधानसेवी अदोषवान् भवति, कुत इत्याह–' थेरावि ' इत्यादि, जिनानां हि भगवतामियमाज्ञा कारणे यतनया द्वारपिधान सेवमाना. स्थविरकल्पिका अपि ज्ञायका एव सम्यग्विधिज्ञा एव । आह–किं तत्कारण ? येन द्वार पिधीयते उच्यते–पडिणीयतेणसावयउब्भामगगोणसाणएऽणप्पज्झे । सीय च दुरधियास, दीहा पक्खी व सागरिए ॥ (६ ॥) उद्घाटिते द्वारे प्रत्यनीकः प्रविश्य हनन–अपद्रावण वा कुर्यात् । स्तेना उपधिस्तेनाः

शरीरस्तेना वा प्रविशेयुः एवं श्वापदाः–सिंहव्याघ्रादयः उद्भ्रामकाः–पारदारिकाः गौः–बलीवर्दः श्वानः प्रतीतः एते वा द्वारमुद्घाटं दृष्ट्वा प्रविशेयुः तथा 'अणप्पज्झे' ति अनात्मवशः–क्षिप्तचित्तादि द्वारेऽपिहिते निर्गच्छेत् शीतं वा दुरधिसहं हिमकणानुपक्तं निपतेत् दीर्घा वा–सर्पाः पक्षिणो वा काककपोतप्रभृतयः प्रविशेयुः सागारिको वा कश्चित् प्रतिश्रयमुद्घाटद्वारं दृष्ट्वा तत्र प्रविश्य शयीत विश्रामं वा गृह्णीयात् ॥ एक्केक्कंमि उ ठाणे, चउरो मासा हवंति उग्घाया ॥ आणाइणो य दोसा, विराहणा संजमायाए ॥ ( ७॥ ) द्वारमस्थगयतामनन्तरोक्ते एकैकस्मिन् प्रत्यनीकप्रवेशादौ स्थाने यदि द्वारं न स्थगयंति तदा चत्वारो मासा उद्घाताः–लघवः प्रायश्चित्तं भवन्ति, आज्ञादयश्चात्र दोषाः, विराधना च संयमात्मविषया भावनीया। यदुक्तं चत्वारो मासा उद्घाता इति तदेतद्बाहुल्यमङ्गीकृत्य द्रष्टव्यम्। अतोऽपवादयन्नाह—अहिसावयपच्चत्थिसु, गुरुगा सेसेसु हुंति चउलहुगा। तेणे गुरुगा लहुगा, आणाइविराहणा दुविहा ॥ ( ८। ) अहिषु श्वापदेषु च प्रत्यर्थिषु च प्रत्यनीकेषु द्वारमस्थगयतां प्रत्येकं चत्वारो गुरुकाः। शेषेषूद्भ्रामकादिषु सागारिकान्तेषु चतुर्लघुकाः। स्तेनेषु गुरुका लघुकाश्च भवन्ति, तत्र शरीरस्तेनेषु चतुर्गुरुकाः, उपधिस्तेनेषु चतुर्लघुकाः आज्ञादयश्च दोषाः। विराधना द्विविधा–संयमविराधना, आत्मविराधना च, तत्र संयमविराधना स्तेनैरुपधावपहृते तृणग्रहणमग्निसेवां वा कुर्वन्ति। सागारिकादयो वा तप्तायोगोलकल्पाः प्रविष्टाः सन्तो निपदनशयनादि कुर्वाणा बहूनां प्राणिजातीयानामुपमर्दनं कुर्युः। आत्मविराधना तु प्रत्यनीकादिषु स्फुटैवेति ॥ आह–ज्ञातमस्माभिर्द्वारापिधानकारणं, परं काऽत्र यतना ? इति नाद्याऽपि वयं जानीमः, उच्यते–उवओगं हिट्ठुवरिं, काऊण ठवितवंगुरंते य। पेहा जत्थ न सुज्झइ, पमाज्जिउं तत्थ सारिंति ॥ ( ९॥ ) श्रोत्रादिभिरिन्द्रियैरधस्तादुपरि चोपयोगं कृत्वा द्वारं स्थगयन्ति

वाऽपावृण्वन्ति वा। यत्र चान्धकारे प्रेक्षा–चक्षुषा निरीक्षण न शुद्ध्यति तत्र रजोहरणेन दारुदण्डेन वा रजन्यां प्रमृज्य सारयन्ति द्वार स्थगयन्तीत्यर्थः। उपलक्षणत्वादुद्घाटयन्तीत्यपि द्रष्टव्यम्। इति बृहत्कल्पसूत्रवृत्तौ द्वितीयखण्डे विंशे पत्रे ॥ १ ॥

साध्वीनां तु वसतौ कपाटमवश्यमपेक्षित, सर्वथा च तदभावे विधिः कर्त्तव्य' स लिख्यते—

द्वितीयपदमाह–अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए। दव्वस्स य असईए ताओवि अपच्छिमा पिंडी ॥ (१॥) अध्वनो निर्गतादय सयत्यस्त्रिकृत्वस्त्रीन् वारान् वसतिं मार्गयित्वा असत्यलभ्यमाने गुप्तद्वार उपाश्रये अपावृतद्वारेऽपि वसन्ति। तत्र च यदि कपाटमवाप्यते तत सुन्दरमेव, अथ न प्राप्यते, अतो द्रव्यस्य कपाटस्यासति कटकादिकमभ्यानीय पिधातव्य यावदपाश्चिमा सर्वान्तिमा यतना। 'ताओवि पिंडी' त्ति ताः सर्वा अपि पिंडीभूय परस्पर करबन्ध कृत्वा दण्डकव्यग्रहस्तास्तिष्ठन्तीति। एतामेव निर्युक्तिगाथां व्याचष्टे—असत्तो य कवाड, कडियदडचिलिमिलियाहिंकिटिया। पिंडी भवति सभए, काऊण ओन्नकरबन्ध ॥ (२॥) कपाटयुक्तस्य द्वारस्याभावे अन्यतोऽपि कपाट याचित्वा द्वार पिधातव्यम्, अथ याच्यमानमपि तन्न लब्ध, ततो वंशकटो याचितव्य', तस्यालाभे कटिका'–कटकशाखा, तासामप्राप्तौ दण्डकैरितरश्चीना चिलिमिलिका क्रियते, तावता दण्डकानामभावे वस्त्रचिलिमिलिका बध्यते, बहिर्द्वारमूले किटिकाः–स्थविराः क्रियन्ते। अथ कोऽपि तासामभिद्रवण करोति, ततस्तादृशे सभये सोपसर्गे सति अन्योन्यकरबन्ध कृत्वा पिंडीभवन्ति। कथ पुन' ? इत्यत आह–अतो हवति तरुणी, सह दंडेहि ते य तालिंति। अह तत्थ होंति वसभा, वारिंति गिहीव तो होउ ॥ (३॥) अन्तर्मध्ये तरुण्यो गृहीतदण्डकहस्तास्तिष्ठन्ति, बहिस्तु स्थविराः, तास्तरुण्योऽपि शब्द–बृहद्ध्वनिबोल कुर्वन्ति, येन भूयान्

लोको मिलति । तांश्च स्तेनान् मैथुनार्थिन उपद्रवतो दंडकैः प्रताडयन्ति । अथ तत्र वृषभाः सन्निहिता भवन्ति । ततस्ते गृहिण इव भूत्वा तान् वारयन्ति । इति श्री बृहत्कल्पसूत्रवृत्तौ द्वितीयखंडे २७ पत्रे ॥ २ ॥

ज्ञानदर्शनादिकं कश्चिद्गुणं प्रेक्ष्य पार्श्वस्थादिपुरुषवन्दनेऽपि न दोष इत्यभिप्रायो लिख्यते—

दंसणनाणचरित्तं, तवविणयं जत्थ जत्तियं जाणे। जिणपन्नत्तं भत्तीइ, पूअए तं तहिं भावं ॥ १ ॥ दर्शनं च निःशङ्कितादिगुणोपेतं सम्यक्त्वम्, ज्ञानं चाचारादिश्रुतम्, चारित्रं च मूलोत्तरगुणानुपालनात्मकम्, दर्शनज्ञानचारित्रं द्वन्द्वैकवद्भावः, एवं तपश्चानशनादि, विनयश्चाभ्युत्थानादिस्तपोविनयं, एतद्दर्शनादि यत्र पार्श्वस्थादौ पुरुषे यावद्यत्परिणामं स्वल्पं बहु वा जानीयात्तत्र तमेव भावं जिनप्रज्ञप्तं स्वचेतसि व्यवस्थाप्य तावत्यैव भक्त्या कृतिकर्मादिलक्षणया पूजयेत्। इति बृहत्कल्पवृत्तौ तृतीयखंडैकादशपत्रे ॥ ३ ॥

एतेनैव च ये पार्श्वस्थं सर्वथाऽचारित्रिणं मन्यन्ते तेऽपि परास्ता द्रष्टव्याः।

केनचित्कारणबलेन परैः सह संवासे समापन्ने येन सह स्थेयं, यद्वा कर्त्तव्यं तल्लिख्यते—

पच्छन्नअसति निण्हव, बोडिय भिरकु य असोय सोआय। पउरदवचडुगाई, गरहा य सअंतरं एको ॥१॥ प्रच्छन्नस्य कंटकचिलिमिलिकयोश्चाभावे निह्नवेषु तिष्ठन्ति। तदभावे बोटिकेषु, तदप्राप्तौ भिक्षुकेषु। एतेष्वपि पूर्वमशौचवादिषु, ततः शौचवादिषु, ततः शौचवादिषु च स्थिता आचमनादिषु क्रियासु प्रचुरद्रव्येण कार्यं कुर्वन्ति। चड्डकं कमढकं तत्र भुञ्जते। आदिशब्दादपरेणापि येन ते शौचवादिनो जुगुप्सां न कुर्वन्ति, तस्य परिग्रहः। एवं प्रवचनस्य गर्हा परिहृता भवति । सान्तरं

चोपविष्टा भुञ्जते । ' एको ' त्ति । एक' क्षुल्लकादि कमढकानां कल्प करोति । इति श्रीबृहत्कल्पतृतीयखण्डे २४ पत्रे ॥४॥

कदाचिदज्ञानात्स्त्यानर्द्धिनिद्रावति दीक्षिते सति यो विधि. स लिख्यते—

केसवअद्धबल पण्णवेंति मुअ लिंग णत्थि तुह चरण । णेच्छसस हरइ सघो, णवि एक्को मा पदोस तु ॥ १ ॥ केशवो-वासुदेवस्तस्य बलादर्द्धबल स्त्यानर्द्धिमतो भवतीति तीर्थकृदादयः प्रज्ञापयन्ति, एतच्च प्रथमसहननमङ्गीकृत्योक्तम्, इदानीं पुनः सामान्यलोकबलाद्विगुण त्रिगुण चतुर्गुण वा बल भवतीति मन्तव्यम् । यत एवमतः स प्रज्ञापनीयः सौम्य ! मुञ्च लिङ्ग नास्ति तव चरण-चारित्रम्, यद्येव गुरुणा सानुनय भणितो मुञ्चति ततः शोभनमथ न मुञ्चति ततो मोक्तुमनिच्छतः, तत सकाशात्सङ्घ समुदितः ' से ' तस्य लिङ्ग हरति-उद्दालयति, न पुनरेक. । कुत' ? इत्याह—मा तस्यैकस्योपरि प्रद्वेष गच्छेत्, प्रद्विष्टश्च व्यापादनमपि कुर्यात् । लिङ्गापहारनियमार्थमिदमाह—अवि केवलमुप्पाडे, ण य लिङ्ग देइ अणतिसेसी से । देसवय दसण वा, गिण्ह अणिच्छे पलायन्ति ॥ २ ॥ अपि.-सम्भावने, स चैतत्सम्भावयति । यद्यपि तेनैव भवग्रहणेन केवलमुत्पादयति तथाऽपि 'से' तस्य स्त्यानर्द्धिमतो लिङ्गमनतिशयी न ददाति, यः पुनरतिशयज्ञानी स जानाति न भूय एतस्य स्त्यानर्द्धिनिद्रोदयो भविष्यति ततो लिङ्ग ददाति इतरथा न ददाति, लिङ्गापहारे पुनः क्रियमाणेऽप्यमुपदेशो दीयते, देशव्रतानि-स्थूलप्राणातिपातविरमणादीनि गृहाण, तानि चेत्प्रतिपत्तु न समर्थस्ततो दर्शन-सम्यक्त्व गृहाण । अथैवमप्यनुनीयमानो यदि लिङ्ग मोक्तु नेच्छति तदा रात्रौ त सुप्त मुक्त्वा पलायन्ते-देशान्तर गच्छन्ति । इति श्रीबृहत्कल्पभाष्यवृत्तौ तृतीयखण्डे ४० पत्रे ॥ ५ ॥

यः सेनापति १ मन्त्रि २ पुरोहित ३ श्रेष्ठि ४ सार्थवाहसहितो राज्यं भुङ्क्ते, तस्य पिंडो वर्जनीयः। अन्यत्र तु भजना। इति श्रीबृहत्कल्पचतुर्थखंडे १५३ पत्रे ॥ ६ ॥

इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे अपरतटे श्रीबृहत्कल्पविचारनामा चतुर्थस्तरङ्गः ॥४॥

पीयूषपुद्गलाः खलु, निखिलाः परिणामिताः श्रुतत्वेन। गणिपुङ्गवेन तदिदं, मधुरं तदलभ्यमपि लोके ॥ १ ॥

अथ श्रीव्यवहारविचारा यथा–तत्र च केचिन्नीचकुलपिण्डनिषेधविषये प्रज्ञाप्यमाना वदन्ति–न ह्येते छिम्पकादयो नीचाः, किं तु ते म्लेच्छधिग्जात्यादयः, परं तन्न किञ्चित्, एतेऽपि तथैव। यथा—

लोगुत्तरपरिहारो, दुविहो परिभोग धरणे य। अत्रैवं व्युत्पत्तिः—परिहरणं परिहारः, 'लोगुत्तरवज्जं इत्तरिए' 'वज्जं' वर्ज्यम्, तद्द्विधा–'लोग' त्ति लौकिकं, 'उत्तर' त्ति लोकोत्तरम्, लौकिकं द्विधा-इत्वरं यावत्कथिकं च, तत्रेत्वरं यत्सूतकमृतकादि तथा लोके सूतकादि दशदिवसान् यावद्वर्ज्यते च इति, यावत्काथिकं च वरुडछिम्पकचर्मकारडोम्बादि, एते हि यावज्जीवं शिष्टैः सम्भोगादिना वर्ज्यन्ते। लोकोत्तरमपि वर्ज्यं द्विधा-इत्वरं यावत्कथिकं च, तत्रेत्वरं 'दाणे अभिगमसड्ढे' इत्यादि। यावत्कथिकं 'अट्ठारस पुरिसेसु, वीसं इत्थीसु दस नपुंसेसु' इत्यादि। इति श्रीव्यवहारभाष्यवृत्तौ प्रथमोद्देशे 'कंटगमादी दव्वे' इत्येतद्गाथायां ६५६ प्रतौ ५८ पत्रे ॥ १ ॥

अथ येषु द्रव्यक्षेत्रकालभावेषु येन विधिनाऽऽलोचना प्राह्या तन्निरूप्यते—तत्र यदुक्तमधस्तात् 'अवराहे दिवसतो

पसत्थमि ' तदिदानीं व्याख्यानयति—

दव्वादिचउरभिग्गह, पसत्थमपसत्थ ते दुहेक्केका । अपसत्थे वज्जेउ, पसत्थएहिं तु आलोए ॥ १ ॥ अपराधालोचनायां दीयमानाया विधिर्वक्तव्यः, तत्र यदुक्तमधस्तात् द्रव्यादयो द्रव्यक्षेत्रकालभावाश्चत्वारश्चतुःसङ्ख्याका अपेक्षणीया भवन्ति। तथा ' अभिग्गह 'त्ति दिशामभिग्रहः कर्त्तव्य' । ते च द्रव्यादयो दिशश्चैकैके प्रत्येक द्विधा द्विप्रकारा , तद्यथा—प्रशस्ता' अप्रशस्ताश्च, तत्राप्रशस्तान् द्रव्यादीन् अप्रशस्तांश्च दिशो वर्जयित्वा प्रशस्तैर्द्रव्यादिभिर्दिग्विशेषैश्च, किमुक्त भवति ? प्रशस्तेपु द्रव्यादिपु प्रशस्ताश्च दिशोऽभिगृह्यालोचयेत्—आलोचना दद्यात् ॥ तत्राप्रशस्तद्रव्यादिप्रतिपादनार्थमाह—भग्गघरे कुड्डेसु अ, रासीसु य जे दुमा य अमणुण्णा । तत्थ न आलोएज्जा, तप्पडिवक्खे दिसा तिन्नि॥ (२ ॥) यत्र स्तम्भकुम्भकुड्यादीनामन्यतमत्किमपि पतित तद् भग्नगृह तत्र, तथा ' कुड्डेसु 'त्ति कुड्यग्रहणात् कुड्यमात्राविशेषे । तत्र पाठान्तरम्—' रुद्देसु य 'त्ति, तत्र रुद्रेपु-रुद्रगृहेपु, तथा राशिपु-अमनोज्ञतिलमापकोद्रवादिधान्यराशिपु, ये च द्रुमा अमनोज्ञा —निष्पत्रकटकीप्रभृतयोऽमनोज्ञाः, तत्र तेष्वप्याश्रयभूतेपु, उपलक्षणमेतत् अप्रशस्तासु तिथिपु, अप्रशस्तेपु च सन्ध्यागतादिपु नक्षत्रेपु अप्रशस्ताश्च याम्यादीर्दिशोऽभिगृह्य नालोचयेत् , किं तु तत्प्रतिपक्षे प्रशस्तद्रव्यादिरूपे आलोचयेत्। + +

\+ + + + + + +

तथा प्रशस्ताश्च तिस्रो दिश' पूर्वामुत्तरां चरन्तीं चाऽभिगृह्य आलोचयेत् । इदानीममनोज्ञधान्यराश्यादिपु द्रव्यादित्वयोजनामाह—अमणुण्णधण्णरासी, अमणुण्णदुमा य होंति दव्वंमि । भग्गघररुद्दऊसर, पवा य दड्ढाइ खित्तंमि ॥ ( ३ ॥)

अमनोज्ञधान्यराशयोऽमनोज्ञद्रुमाश्च भवन्ति द्रव्ये द्रष्टव्याः, भग्नगृहं–प्रागुक्तस्वरूपम् । ' रुद्द 'त्ति रुद्रगृहं ' ऊसर 'त्ति उषरं–यत्र तृणादिकं नोद्गच्छति, छिन्नटङ्का–तटीप्रपातः, भृगुप्रपातादिकं वा, दग्धं–दवदग्धं, आदिशब्दाद्विद्युद्दग्धादिपरिग्रहः । इत्यादि सर्वं चैत्रं द्रष्टव्यम्, तत्र यत् ' अमणुण्णदुमा य होंति दव्वंमि ' इत्युक्तं तदेतद्व्याख्यानयति—निप्पत्तकंटइल्ले, विज्जुहते खारकडुयदड्ढे य । अयतउयतंबसीसग, दव्वे धण्णा य अमणुण्णा ॥ ( ४॥ ) निष्पत्राः–स्वभावतः पत्ररहिताः करीरादयः, कंटकिनो–बदरीबब्बूलप्रभृतयः, विद्युद्धता–विद्युत्प्रपातभग्नाः, क्षाररसा–मोरडप्रभृतयः, कटुकाः–कटुकरसा रोहिणीकुटजनिम्बादयः, दग्धा–दवदग्धाः, एतान् द्रुमान् अमनोज्ञान् जानीहीति वाक्यशेषः । न केवलममनोज्ञा धान्यराशयोऽमनोज्ञा द्रुमाश्च द्रव्ये वर्जनीयाः, किं तु अयस्त्रपुताम्रसीसकराशयो द्रव्ये वर्जनीयाः । ' अमणुन्नधन्नरासी 'त्ति व्याख्यानयति—अमनोज्ञानि धान्यानि पुनः चशब्दः पुनरर्थे अमनोज्ञधान्यराशयः । सम्प्रति कालतो ये दिवसा वर्जनीयास्तानेवाह—पडिकुट्ठेल्लगदिवसे, वज्जेज्जा अट्ठमिं च नवमिं च । छट्ठिं च चउत्थिं, बारसिं च दोण्हंपि पक्खाणं ॥ ( ५॥ ) इह इल्लप्रत्ययः प्राकृते स्वार्थे, प्रतिकुष्टा एव प्रतिकुष्टेल्लकाः, ते च ते दिवसाश्च प्रतिकुष्टेल्लकदिवसाः—प्रतिषिद्धा दिवसास्तान् वर्जयेत्, तानेव नामत आह—द्वयोरपि शुक्लकृष्णरूपयोः पक्षयोरष्टमीं नवमीं षष्ठीं चतुर्थीं द्वादशीं च, एता हि तिथयः शुभप्रयोजनेषु सर्वेष्वपि स्वभावत एव प्रतिकूलास्ततो वर्जनीयाः, इदं कालतोऽप्रशस्तं वर्ज्यम् । सन्ध्यागतादिनक्षत्रं तदेवाह—संज्झागयं १ रविगयं, २ विड्डेरं ३ सग्गहं ४ विलंबिं ५ च । राहुहयं ६ गहभिन्नं ७, वज्जेज्जा सत्तनक्खत्ते ॥ ६ ॥ सन्ध्यागतं नाम यत्र नक्षत्रे सूर्योऽनन्तरं स्थास्यति तत् आदित्यपृष्टस्थितम्, अन्ये पुना राहुर्यस्मिन्नुदिते सूर्य उदेति तत् सन्ध्यागतम्, अपरे त्वेवं

ब्रुवते यत्र रविस्तिष्ठति तस्माच्चतुर्दश पञ्चदश वा नक्षत्र सन्ध्यागतम्, रविगत यत्र रविस्तिष्ठति, पूर्वद्वारिके नक्षत्रे पूर्वदिशा-गन्तव्ये यदा अपरया दिशा गच्छति तदा तद्विद्वार–विगतद्वारमित्यर्थः, यत्क्रूरग्रहेणाक्रान्त तत्सग्रहम्, विलम्बि–यत्सूर्येण परिभुज्य मुक्तम्, अन्ये त्वाहु —सूर्यस्य पृष्टतोऽग्रतो वाऽनन्तर नक्षत्र सन्ध्यागतम्, यत्पुन ग्रहगतान्नक्षत्रात्पृष्टतस्तृतीय तद्विलम्बि इति । राहुहत यत्र सूर्यस्य चन्द्रस्य वा ग्रहणम्, यस्य मध्येन ग्रहोऽगमत् तद्ग्रहभिन्नम्, एतानि सप्तनक्षत्राणि चन्द्रयोगयुक्तानि वर्जयेत् । यत एतेष्विमे दोषाः—सञ्झागयमि कलहो, होइ कुभत्त विलम्बिनक्खत्ते । विड्डेरे परविजयो, आइच्चगए अनिव्वाणी ॥७॥ ज सग्गहमि कीरइ, नक्खत्ते तत्थ वुग्गहो होइ । राहुहयमि अ मरण, गहभिन्ने सोणिउग्गालो ॥८॥ सन्ध्यागते नक्षत्रे शुभेषु प्रयोजनेषु प्रारभ्यमाणेषु कलहो–राटिर्भवति, विलम्बिनक्षत्रे कुभक्तम्, विद्वारे परेषां शत्रूणां विजय, आदित्यगते–रविगते अनिर्वाणि'–असुखम्, सग्रहे पुनर्नक्षत्रे यत्क्रियते तत्र व्युद्ग्रह'–सङ्ग्रामो भवति, राहुहते मरणम्, ग्रहभिन्ने शोणितोद्गार —शोणितविनिर्गम', एवभूतेष्वप्रशस्तद्रव्यक्षेत्रकालभावेषु नालोचयेत्, किं तु प्रशस्तेषु । तत्र प्रशस्ते द्रव्ये शाल्यादिप्रशस्तधान्यराशिषु मणिकनकमौक्तिकवज्रवैडूर्यपद्मरागादिराशिषु च । प्रशस्त क्षेत्र साक्षादाह—तण्डिवक्खे खेत्ते, उच्छुवणे सालिचेइयघरे वा । गभीरसाणुणाए, पयाहिणावत्त उदए य ॥ ६ ॥ तस्य प्रागुक्तस्याप्रशस्तस्य क्षेत्रस्य प्रतिपक्षे प्रशस्ते क्षेत्रे इक्षुवने, उपलक्षणमेतत्, आरामे वा पत्रपुष्पफलोपेते ' सालि 'त्ति, वनशब्दोऽत्रापि सम्बध्यते, शालिवने चैत्यगृहे वा, वाशब्दो विकल्पने तथा गम्भीरे गम्भीर नाम भग्नत्वादिदोषवर्जितम्, शेषजनेन च प्रायेणा-लक्षणीयमध्यभाग स्थान गम्भीरमिति वचनात्, सानुनादे यत्रोच्चारिते शब्दे प्रतिशब्द समन्तादुत्तिष्ठति तत्सानुनादम्,

प्रदक्षिणावर्त्तमुदकं यत्र नद्यां पद्मसरसि वा तत्प्रदक्षिणावर्त्तोदकं तस्मिन् वा चशब्दो वाशब्दार्थः क्वचिद्वाशब्दस्यैव पाठः, प्रदक्षिणावर्त्तमुदकं यत्र नद्यां पद्मसरसि वा तत्प्रदक्षिणावर्त्तोदकं तस्मिन् वा चरंतिया जाव नवपुव्वी ॥ १० ॥ प्रशस्तं कालमाह–उत्तदिणसेसकाले, उच्चट्ठाणा गहा य भावंमि । पुव्वदिसउत्तरा वा, चरंतिया जाव नवपुव्वी ॥ १० ॥ उक्तानि यानि दिनानि अष्टम्यादीनि, तेभ्यो ये शेषा द्वितीयादयो दिवसास्ते स च कालश्च उक्तदिनशेषकालस्तस्मिन् प्रशस्ते व्यतिपातादिदोषवर्जिते, उपलक्षणमेतत्, प्रशस्ते च करणे प्रशस्ते मुहूर्त्ते, एतत् कालतः प्रशस्तमुक्तम्, भावतः प्रशस्तमाह—उच्चैःस्थानं येषां ते उच्चैःस्थाना ग्रहा भावे भावविषये प्रशस्तम्, किमुक्तं भवति ? भावत उच्चैःस्थानगतेषु ग्रहेषु, तत्र ग्रहाणामुच्चैःस्थानमेवम्—सूर्यस्य मेष उच्चैःस्थानम्, सोमस्य वृषः, मङ्गलस्य मकरः, बुधस्य कन्या, बृहस्पतेः कर्कटः, शुक्रस्य मीनः, शनेश्च तुला, सर्वेषामपि च ग्रहाणामात्मीयादुच्चैःस्थानाद्यत्सप्तमस्थानं तन्नीचैःस्थानम् । अथवा भावतः प्रशस्ता ये सोमग्रहा बुधशुक्रबृहस्पतिशशिनः, एतेषां सम्बन्धिषु राशिषु, एतैरवलोकितेषु च लग्नेषु आलोचयेत् । तथा तिस्रो दिशः प्रशस्ता ग्राह्याः, तद्यथा–पूर्वा उत्तरा चरंती, चरन्ती नाम यस्यां स भगवानर्हन् विहरति, सामान्यतः केवलज्ञानी, मनःपर्यायज्ञानी, अवधिज्ञानी, चतुर्दशपूर्वी, त्रयोदशपूर्वी यावन्न-वपूर्वी, यदिवा यो यस्मिन् युगप्रधानः आचार्यः स वा यया विहरति, एतासां तिसृणामन्यतमस्या दिशोऽभिमुखं आलो चनार्होऽवतिष्ठते । तस्येयं सामाचारी–निसज्जऽसति पडिहारिय, किइकम्मं काउ पंजलुकुडुओ । बहुपडिसेवरिसासु य, अणुण्णवेउं निसिज्जगतो ॥ ११ ॥ आत्मीयकल्पैरपरिभुक्तै राचार्यस्य निषद्यां करोति, असति–आत्मीयकल्पानामभावेऽन्यस्य सक्तान् प्रातिहारिकान् कल्पान् गृहीत्वा करोति, कृत्वा च यद्याचार्यः पूर्वाभिमुखो निषीदति तत आलोचको दक्षिणत

उत्तराभिमुखोऽवतिष्ठते, यद्याचार्य उत्तराभिमुखो निषण्णस्तत आलोचको वामपार्श्वे पूर्वाभिमुखस्तिष्ठति, चरन्तीं वा दिश प्रत्यभिमुखो भवति, ततः कृतिकर्म–द्वादशावर्त्तवन्दनक कृत्वा प्रबद्धोऽञ्जलिर्येन स प्रबद्धाञ्जलिः उत्सर्गेत उत्कुटुकास्थितः सम्यालोचयेत्, यदि पुनर्बहुप्रतिसेवितमस्तीति चिरेणालोचना परिसमाप्तिं यास्यति तावन्त च कालमुत्कुटुकः स्थातु न शक्नोति, यदिवा अर्शोरोगयत उत्कुटुकस्य सतोऽर्शांसि क्षोभमुपयान्ति, ततो बहुप्रतिसेवी अर्शःसु च सत्सु गुरुमनुज्ञाप्य निपद्यायामौपग्रहिकपादप्रोञ्छने वा अन्यस्मिन् वा यथार्हे आसने स्थित आलोचयति । किं पुनस्तदालोचनीयमुच्यते–चतुर्विध द्रव्यादि, तथा चाह—चेयणमचित्तदव्व, जणवयमद्धाण होति खित्तमि । दिणनिसि सुभिक्खदुब्भिक्खकाले भावमि हिट्ठियरे ॥ १२ ॥ द्रव्यतश्चेतन–सचित्तमुपलक्षणमेतत्, मिश्र वा, अचित्त–अचेतन वा, अकल्पिक यत्प्रतिसेवित, क्षेत्रतो जनपदे अध्वनि वा, कालतो दिने निशि वा यदिवा सुभिक्षे दुर्भिक्षे वा भावे 'हिट्ठियरे' सप्तमी तृतीयार्थे हृष्टेन इतरेण वा ग्लानेन सता यतनयाऽयतनया वा दर्पतः कल्पतो वा, तदालोचयति । कथम् ? इत्याह—जह बालो जपतो, कज्जमकज्ज च उज्जुअ भणइ । त तह आलोएज्जा, मायामयविप्पमुक्को उ ॥ १३ ॥ यथा बालो मातुः पितुर्वा पुरतो जल्पन् कार्यमकार्य च ऋजुक–अकुटिल भणति तथा आलोचकोऽपि मायामदविप्रमुक्तः सन् तदालोचनीय यथा ऋजुकभावेनालोचयेत् । आलोचना याश्चेमे गुणाः—लहुयाल्हादीजणण, अप्पपरनियत्ति अज्जव सोही । दुक्करकरण विणओ, निस्सल्लत्त च सोहिगुणा ॥ १४ ॥ लघोर्भावो लघुता, यथा भारवाही अपहृतभारो लघुर्भवति तथा आलोचकोऽप्युद्धृतशल्यो लघुर्भवति इति लघुता, तथा-ह्लादन, ह्लादिरोणादिक इप्रत्ययः प्रह्लत्तिस्तस्य जनन उत्पत्तिर्ह्लादिजनन प्रमोदोत्पाद इति यावत्, तथा ह्यतीचारघर्मोपतप्तस्य

चित्तस्य मलयगिरिपवनसम्पर्केणेवालोचनाप्रदानेनातीचारघर्मापगमो भवति संविग्नानां महामुनीनां परमः प्रमोद इति, तथा 'अप्पपरनियत्ति' आलोचनाप्रदानतः स्वयमात्मनो दोषेभ्यो निवृतिः कृता, तं च दृष्ट्वाऽप्यन्ये आलोचनाभिमुखा भवन्तीत्यन्येषामपि दोषेभ्यो निवर्त्तनमिति, तथा यदतीचारजातं प्रतिसेवितं तत्परस्मै प्रकटयतामात्मन आर्जवं सम्यग्विभावितं भवति, आर्जवं नामामायाविता, तथा अतीचारपङ्कमलिनस्यात्मनश्चरणस्य वा प्रायश्चित्तजलेनातीचारपङ्कप्रक्षालनतो निर्मलताशोधिः, तथा दुष्करकरणं–दुष्करकारिता तथा हि—यत्प्रतिसेवनं तन्न दुष्करं, अनादिभवाभ्यस्तत्वात्, यत्पुनरालोचयति तद्दुष्करं, प्रबलमोक्षानुयायिवीर्योल्लासविशेषेणैव तस्य कर्तुं शक्यत्वात् तथा 'विणउ' त्ति आलोचयता चारित्रविनयः सम्यगुपपादितो भवति। 'निस्सल्लत्तं' ति सशल्य आत्मा निःशल्यः कृतो भवतीति निःशल्यता, एते शोधिगुणाः–आलोचनागुणाः, आलोचनाशोधिरित्यनर्थान्तरत्वम्। अथ कस्य समीपे आलोचना दातव्या? उच्यते—आगमव्यवहारिणः श्रुतव्यवहारिणो वा। तथा चाह—आगमसुअववहारी, आगमओ छव्विहो उ ववहारो। केवलिमणोहिचोद्दसदसनवपुव्वी उ नायव्वो ॥ १५ ॥ 'आगमसुयववहारी' त्ति व्यवहारिशब्दः प्रत्येकमभिसम्बध्यते आलोचनार्हो द्विविधः, तद्यथा—आगमव्यवहारी श्रुतव्यवहारी च, तत्रागमतो व्यवहारी षड्विधः, तद्यथा—केवली–केवलज्ञानी, 'मणोहि' त्ति पदैकदेशे पदसमुदायोपचारान्मनःपर्यायज्ञानी अवधिज्ञानी च, 'चोद्दसदसनवपुव्वी' त्ति पूर्वशब्दः प्रत्येकमभिसम्बध्यते चतुर्दशपूर्वी दशपूर्वी नवपूर्वी च ज्ञातव्याः, एते च आगमव्यवहारिणः–प्रत्यक्षज्ञानिन उच्यन्ते चतुर्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात्। तथा हि–येन यथा योऽतिचारः, कृतस्तं तथा सर्वमेते

जानन्तीति । पम्हुट्ठे पडिसारण, अप्पडिवज्जतय न खलु सारे । जइ पडिवज्जइ सारे, दुविहातियारपि पच्चक्खी ॥ १६ ॥ प्रत्यक्षी–प्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थ द्विविधमपि मूलगुणविषयमुत्तरगुणविषय चातिचारमालोचयतो यत्किमपि आलोचनीयम् । ' पम्हुट्ठे ' त्ति विस्मृत भवति ततस्तस्मिन् विस्मृते प्रतिसारण करोति, यथाऽमुक तवालोचनीय विस्मृतमिति तदप्यालोचयति, केवल यदि केवलज्ञानादिबलेनैतज्जानाति यथैष भणित सन् शुद्धभावत्वात्सम्यक् प्रतिपद्यते । ' वर्त्तमानसामीप्ये वर्त्तमानवद्वा ' इति वचनतो भविष्यति वर्त्तमानाभिधानात्प्रतिपत्स्यते इति तदा स्मारयति, यदि पुनरेतदव गच्छति यथैष भणितोऽपि सन्न सम्यग् प्रतिपत्स्यते इति, तदा तमप्रतिपद्यमान–अप्रतिपत्स्यमान न खलु नैव सारयति, निष्फलत्वात् । अमूढलक्षो हि भगवानागमव्यवहारी, अत एव दत्तायामप्यालोचनायां यद्यालोचकः सम्यगावृत्तो ज्ञातस्ततस्तस्मै प्रायश्चित्त प्रयच्छति अथ न प्रत्यावृत्त–स्ततो न प्रयच्छतीति । श्रुतव्यवहारिण• प्राह–कप्पपकप्पी उ सुए आलोयावेंति ते उ तिक्खुत्तो । सरिसत्थमपलिउंची, विसरिसपरिणामतो कुंची ॥ १७ ॥ कल्पग्रहणेन दशाश्रुतस्कन्धकल्प व्यवहारा गृहीताः प्रकल्पग्रहणेन निशीथः कल्पश्च प्रकल्पश्च कल्पप्रकल्प तदेषामस्तीति कल्पप्रकल्पिन , दशाकल्पव्यवहारादिसूत्रार्थधरा , तुशब्दत्वात् महाकल्पश्रुतमहानिशीथनिर्युक्तिनिशीथपीठिकाधराश्च श्रुते श्रुतव्यवहारिण' प्रोच्यन्ते । तथाऽऽलोचक त्रिःकृत्वस्त्रीन् वारानालोचापयन्ति, ते ह्येक द्वौ वा वारावालोचिते अनेन प्रतिकुञ्चनयाऽऽलोचितमप्रतिकुञ्चनया वेति विशेष नावबुध्यते, ततस्त्रीन् वारानालोचापयन्ति । कथम् ? इति चेत् , उच्यते–प्रथमवेलायां निद्रायमाण इव शृणोति, ततो ब्रूते निद्राप्रमाद गतवानहमिति न किमप्यश्रौषमतो भूयोऽप्यालोचय, द्वितीयवारमालोचिते भणति न सुष्ठु मयाऽवधा-

रितमनुपयोगभावादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशार्थमालोचितं ततो ज्ञातव्यमेषोऽप्रतिकुञ्चोऽमायावी, अथ विसदृशं तर्हि ज्ञातव्यमेष परिणामतः कुञ्ची कुटिलो मायावी, अथैकं द्वौ वा वारावालोचनादापनेन मायावी किं नोपलभ्यते येन त्रीन् वारानित्युक्तं उच्यते—उपलभ्यते परं स्फुटतरोपलब्धिनिमित्तं त्रीन् वारानालोचाप्यते, तस्यापि च प्रत्ययो भवति यथाऽहं विसदृशभणनेन मायावी लक्षितः ततो मायानिष्पन्नं मासगुरुप्रायश्चित्तं पूर्वं दातव्यं तदनन्तरमपराधनिमित्तं प्रायश्चित्तमिति। अत्रैवार्थे दृष्टान्तमाह—तिन्नि उ वारा जह दंडियस्स, पलिउंचियंमि अस्सुवमा। सुद्धस्स होइ मासो, पलिउंचिइ तं चिमं चसं ॥ १८॥ दंडिको नाम करणपातिस्तस्य यथाऽन्यायपीडितं करणमुपस्थितं किं मायाव्येषोऽमायावी वेति परिज्ञानाय त्रीन् वारानपन्यायमुच्चारयितुमभियोगः। एवं श्रुतव्यवहारिणोऽपि अतीचारशल्यपीडितं प्रायश्चित्तव्यवहारार्थमुपस्थितं एष प्रतिकुञ्चनापरो न वेति परिज्ञानार्थं त्रीन् वारानुच्चारयितुं संरम्भः, ततो यदा श्रुतव्यवहारिभिस्त्रिःकृत्व आलोचनाप्रदापनेनागमव्यवहारिभिः प्रथमवेलायामागमबलेन तस्य प्रतिकुञ्चितकौटिल्यं ज्ञातं भवति तदा तस्मिन् प्रतिकुञ्चिते ज्ञाते अश्वोपमा—अश्वदृष्टान्तः क्रियते यथा—आर्य! शृणु तावदिदमुदाहरणम्—जहा कस्सवि रन्नो एगो अस्सो सव्वलक्खणसंजुत्तो धावणपवणसमत्थो, तस्स आसस्स गुणेणं अजेयो, सो राया सव्वे सामंतराइणो आणवेइ, ताहे सामंतराइणो अप्पप्पणो सभासु भणंति नत्थि कोइ एरिसो पुरिसो जो तं हरित्ता आणेइ, सव्वेहिं भणियं सो पुरिसपंजरत्थो चिट्ठइ गच्छए वा न सक्का हरिउं, एगस्स रण्णो एगेण पुरिसेण भणियं—जइ सो मारेयव्वो तो मारेमि, ताहे रन्ना भणियं मा अम्हं तस्स वा भवउ घाएहत्ति, ततो सो तत्थ गओ, तेणछन्नपदेसं ठिएण श्लक्ष्णाया ईपिकाया अग्रभागे क्षुद्रकंटकं प्रोतं कृत्वा दिकरुयघणुएण मिल्लेइ तेण आसो विद्धो, ईपिका अश्वमाहत्य

पतिता रिङ्गिणीकाकटकोऽश्वशरीरेऽनुप्रविष्ट , ततो सो आसो तेण अन्नघसत्लेण परिहायइ पभूयगुणजोग्गासणमपि चरतो, ततो विजस्स अग्गावो विज्जेण परिचिंतिऊण भणिय–नत्थि अण्णो कोइ रोगो अवस्समव्वचो कोइ सल्लो, ताहे विज्जेण सो आसो जमगसमगपुरिसेहिं चिक्खल्लेण आलिंपावितो, ततो जत्थ पढम सुक्क दिट्ठ तत्थ फालेत्ता अवणीतो सो खुद्रकटकी सल्लो, जहा सो आसो ससल्लो न सक्केइ सामतरायाणो निज्जिणिउ पुव्व एव तुमपि किरियाकलावं करेंतोवि सजमवुड्ढिमकुव्वमाणो न कम्माण जय करेसि ता सव्व सम्म आलोएहि इति। यदि पुनर्न किमपि तस्य प्रतिकुञ्चित ज्ञात भवति तदा नामावश्वदृष्टान्तः क्रियते, स्वभावत एव तस्य सम्यगालोचकत्वात् , तस्य च शुद्धस्य मासिक परिहारस्थान प्राप्तस्य प्रायश्चित्त भवति मासः, इतरस्य तु कृतप्रतिकुञ्चनस्य तदापन्नं मासिकप्रायश्चित्तमिद चान्यत् मायानिष्पन्न मासगुरु, इति गाथार्थः। सम्प्रति यदुक्त 'जह दडियस्स' त्ति तद्विभावयति। अत्थुप्पत्ती असरिमनिवेयणे दडो पच्छ ववहारो। इय लोयउत्तरम्मिवि, कुंचियभाव तु दडति॥१६॥ उत्पद्यते यस्मादिति उत्पत्तिः, अर्थस्योत्पत्तिरर्थोत्पत्ति , अर्थश्चोत्पद्यते व्यवहारात् अर्थोत्पत्तिर्व्यवहार उच्यते तस्यामर्थोत्पत्तौ –करणव्यवहारे असदृशनिवेदने दडः, इयमत्र भावना–यथा कोऽपि पुरुषोऽपन्यायपीडितो राजकरणमुपस्थितो निवेदयति–अह देवदत्तेन अपन्यायेन पीडित' तत कारणिका पृच्छन्ति–कथमन्यायः सवृत्तः ? सोऽकथयत् कथिते करणपतिर्ब्रूते–पुनः कथय, ततो भूय' कथयति, ततः पुनरपि ब्रूते भूयो कथय, तत्र यदि तिसृष्वपि वेलासु सदृश वक्ति ततो ज्ञायते यथाऽनेन यथावस्थितः सद्भाव. कथित'। अथ विसदृश ततो जानाति करणपतिरेप अतिकुञ्च्य कथयति, ततः स निर्भर्त्सयति–किमिति राजकुलेऽपि समागतस्त्व मृषा वदसीति पूर्वं मायामृषाप्रत्यय दण्ड्यते। 'पच्छ ववहारो' त्ति पश्चाद्व्य

वहारं कार्यते, व्यवहारेऽपि यदि पराजितो भवति ततो द्वितीयवेलं दण्ड्यते, एष दृष्टान्तो दार्ष्टान्तिकयोजनमाह–'इय' इत्यादि । एवमुक्तप्रकारेण लोकोत्तरेऽपि वारत्रयमालोचनादापनेन यदि कुञ्चितो भावो ज्ञातो भवति ततस्तं कुञ्चितभावं–कुटिलभावं पूर्वमाचार्यो निर्भर्त्सयति–किमित्यालोचनायामुपस्थितोऽपि मृषा वदसि । ततो 'दंडो' इति प्रथमतो मायानिष्पन्नेन मासगुरुप्रायश्चित्तेन दंडयति । पश्चाद्यदापन्नं मासिकं तेन द्वितीयवेलं दंडयति । अथ वारत्रयमालोचनादानेऽपि कथं श्रुतव्यवहारिणो मायामन्तर्गतां लक्षयन्ति । तत आह–आगारेहि सरेहि य, पुव्वावरवाहयाहि य गिराहिं । नाउं कुंचियभावं, परोक्खनाणी ववहरंति ॥ २० ॥ आकाराः–शरीरगता भावविशेषाः, तत्र यः शुद्धस्तस्य सर्वेऽप्याकाराः संविग्नभावोपदर्शका भवन्ति, इतरस्य तु न तादृशाः, स्वरा अप्यालोचगतः शुद्धस्य व्यक्ता विस्पष्टा अक्षुभिताश्च निस्सरन्ति, इतरस्य त्वव्यक्ता–अविस्पष्टाः क्षुभितगद्गदाश्च । तथा शुद्धस्य वाणी पूर्वापराव्याहता इतरस्य तु पूर्वापरविसंवादिनी, तत एवं परोक्षज्ञानिनः श्रुतव्यवहारिण आकारैः स्वरैः पूर्वापरव्याहताभिश्च गीर्भिस्तस्यालोचकस्य कुञ्चितभावं–कुटिलभावं ज्ञात्वा तथा व्यवहरति पूर्वं मायाप्रत्ययेन प्रायश्चित्तदण्डेन दण्डयति, पश्चादपराधप्रत्ययेन प्रायश्चित्तदण्डेनेति भावः इति श्रीव्यवहारप्रथमोद्देशके ६५९ प्रतौ ८४ पत्रे ॥ २ ॥

निश्चयतस्तु एकस्मिन् महाव्रते भग्ने सर्वाण्यपि भग्नानि, व्यवहारतस्तु यद्विराद्धं तदेव भग्नमित्यभिप्रायो लिख्यते—

अथ मूलगुणप्रतिसेवनायां उत्तरगुणप्रतिसेवनायां वा चारित्रभ्रंशे अस्ति कश्चिद्विशेषः उत नास्ति ? अस्तीति ब्रूमः, कोऽसौ इत्याह–मूलगुणदइयसगडे, उत्तरगुणमंडवे सरिसयाई । छक्कायरक्खणट्ठा, दोसुवि सुद्धे चरणसुद्धी ॥ १ ॥ मूलगुणेषु

मण्डपे सर्पपादि आदिशब्दा दृष्टान्तो दृतिः शकट च, केवलमुत्तरगुणा अपि तत्र दर्शयितव्याः, उत्तरगुणेषु दृष्टान्तो चारित्र च्छिलादिपरिग्रह , तत्रापि मूलगुणा अपि दर्शयितव्या., इयमत्र भावना—एकेनापि मूलगुणप्रतिसेवनेन तत्क्षणादेव पञ्चमहाद्वारः, भ्रंश उपजायते उत्तरगुणप्रतिसेवनायां पुनः कालेन, अत्र दृष्टान्तो दृतिक तथा हि—यथा दृतिक उदकभृत एव महाव्रतानामेक- तेषां महाद्वाराणामेकस्मिन्नपि महाद्वारे मुत्कलीभूते तत्क्षणादेव रिक्तीभवति, सुचिरेण तु कालेन पूर्यते, तथा च स्मिन्नपि महाव्रतेऽतिचर्यमाणे तत्क्षणादेव समस्तचारित्रभ्रंशो भवति एकमूलगुणघाते सर्वमूलगुणानां घातात्, प्रतिपत्तव्यम्, गुरवो व्याचक्षते—एकव्रतभङ्गे सर्वव्रतभङ्ग इति एतन्निश्चयनयमत, व्यवहारतः पुनरेकव्रतभङ्गे तदेवैक भग्न चतुर्थमहाव्रतभङ्गप्रतिसेवनेन शेषाणां तु भङ्गः क्रमेण, यदि प्रायश्चित्तप्रतिपत्त्या नानुसन्धत्ते, इति। अन्ये पुनराहु.—चतुर्थमहाव्रतभङ्गप्रतिसेवनेन तत्कालमेव सकलचारित्रभ्रंश', शेषेषु पुनर्महाव्रतेष्वभीक्ष्णप्रतिसेवनया महताऽतिचारेण वा वेदितव्यः। उत्तरगुणप्रतिसेवनायां पुन कालेन चरणभ्रंशो यदि पुन प्रायश्चित्तप्रतिपत्त्या नोज्ज्वालयति। एतदपि कुतोऽवसेयम् ? इति चेत्, उच्यते— शकटदृष्टान्तात् । तथा हि—शकटस्य मूलगुणा द्वे चक्रे, उद्धी अक्षश्च, उत्तरगुणा बुध्नकीलकलोहपट्टादय एतैर्मूलगुणै- रुत्तरगुणैश्च सुसम्प्रयुक्त सत् शकट यथा भारवहनक्षम भवति मार्गे च सुख वहति, तथा साधुरपि मूलगुणैरुत्तरगुणैश्च सुसम्प्रयुक्तः सन् अष्टादशशीलाङ्गसहस्रभारवहनक्षमो भवति, विशिष्टोत्तरोत्तरसयमाध्यवसायस्थानपथे च सुख वहति । अथ शकटस्य मूलाङ्गानामेकमपि मूलाङ्ग भग्न भवति तदा न भारवहनक्षम, नापि मार्गे प्रवर्तते । उत्तराङ्गैस्तु कैश्चिद्विनाऽपि कियत्काल शकट भारक्षम भवति प्रवहति च मार्गे, कालेन पुनर्गच्छता अन्यान्यपरिशटनादयोग्यमेव तदुपजायते । एवमिहापि

मूलानामेकस्मिन्नपि मूलगुणे हते न साधूनामष्टादशशीलाङ्गसहस्रभारवहनक्षमता नापि संयमश्रेणिपथे प्रवहनम्, उत्तरगुणैस्तु कैश्चित्प्रतिसेवितैरपि कियतं कालं चरणभारवहनक्षमता संयमश्रेणिपथे प्रवर्त्तनं च, कालेन पुनर्गच्छता तत्राप्यन्यान्यगुणप्रतिसेवनातो भवति समस्तचारित्रभ्रंशः, ततः शकटदृष्टान्तादुपपद्यते मूलगुणानां प्रतिसेवने एकस्यापि मूलगुणस्य नाशे तत्कालं चारित्रभ्रंशः उत्तरगुणनाशे कालक्रमेणेति । इतश्चैतदेव मण्डपसर्षपादिदृष्टान्तात् । तथा हि—एरण्डादिमण्डपे यद्येको द्वौ बहवो वा सर्षपाः उपलक्षणमेतत्–तिलतन्दुलादयो वा प्रक्षिप्यन्ते तथाऽपि मण्डपो न भङ्गमापद्यते अतिप्रभूतैस्त्वाढकादिसङ्ख्याकैर्भज्यते, अथ तत्र महती शिला प्रक्षिप्यते तदा तयैकयाऽपि तत्क्षणादेव ध्वंसमुपयाति, एवं चारित्रमण्डपोऽप्येकद्वित्र्यादिभिरुत्तरगुणैरतिचर्यमाणैर्न भङ्गमापद्यते बहुभिस्तु कालक्रमेणातिचर्यमाणैर्भज्यते, शिलाकल्पेन पुनरेकस्यापि मूलगुणस्यातिचारेण तत्कालं ध्वंसमुपगच्छतीति । इति श्रीव्यवहारभाष्यवृत्तौ प्रथमोद्देशके ६५६ प्रतौ १२७ पत्रे ॥ ३ ॥

अथाऽऽलोचयतो गुणा दोषाश्च लिख्यन्ते—

“ आलोयंतो एत्तो, दसहि गुणेहिं तु होइ उववेओ । जाइकुलविणयणाणे दंसणचरणेहि संपन्नो ( ॥ १ ॥ ) खंते दंतेऽमाई अपच्छतावी य होति बोधव्वे । आलोयणाए दोसा, एत्तो वुच्छं समासेणं ॥ २ ॥ इत उर्द्धं आलोचयन्नालोचको वक्तव्यः, स च दशभिर्गुणैरुपपेत एव-युक्त एव भवति, तुरेवकारार्थो भिन्नक्रमत्वादत्र सम्बध्यते। तानेव गुणानुपदर्शयति—'जाइ' इत्यादि, जातिसम्पन्नः, कुलसम्पन्नः, मातृपक्षो जातिः, पितृपक्षः कुलम्, विनयसम्पन्नः, ज्ञानसम्पन्नः, दर्शनसम्पन्नः, चरणसम्पन्नः, क्षान्तः, दान्तः, अमायी, अपश्चात्तापी च बोद्धव्यः । अथ कस्मादालोचकस्यैतावान् गुणसमूहोऽन्विष्यते ?

उच्यते—जातिसम्पन्न प्रायोऽकृत्य न करोति अथ कथमपि कृत तर्हि सम्यगालोचयति, कुलसम्पन्न. प्रतिपन्नप्रायश्चित्तनिर्वाहक उपजायते, विनयसम्पन्नो निषद्यादानादिक विनय सर्व करोति सम्यगालोचयति, ज्ञानसम्पन्न. श्रुतानुसारेण सम्यगालोचयति, अमुकश्रुतेन मे दत्त प्रायश्चित्तमत शुद्धोऽहमिति च जानीते, दर्शनसम्पन्नः प्रायश्चित्ताच्छुद्धिं श्रद्धत्ते, चरणसम्पन्नः प्रायोऽतिचार पुनर्न करोति अनालोचित वा चारित्र न शुध्यतीति सम्यगालोचयति, क्षान्तो नाम क्षमायुक्त' स कस्मिंश्चित्प्रयोजने गुर्वादि-भिः खरपरुषमपि भणितः सम्यक् प्रतिपद्यते यदपि च प्रायश्चित्तमारोपित तदपि सम्यग् वहति, दान्तो नाम इन्द्रियनोइन्द्रिय-जयसम्पन्नः स प्रायश्चित्ततपः सम्यक्करोति, मायाऽस्यास्तीति मायी न मायी अमायी सोऽप्रतिकुञ्चितमालोचयति, अपश्चात्तापी नाम य पश्चात् परिताप न करोति हा दुष्टु कृत मया यदालोचितमिदानीं प्रायश्चित्ततप. कथ करिष्यामीति किं त्वेव मन्यते—कृतपुण्योऽह यत्प्रायश्चित्त प्रतिपन्नवानिति। अत ऊर्ध्वमालोचनाया दोषान् समासेन सङ्क्षेपेण वक्ष्ये। प्रतिज्ञातमेव निर्वाहयति—आकंपित्ताऽणुमाणित्ता, (आकंपिअ अणुमाणिअ) ज दिट्ठ बायर च सुहुम वा। छण्ण सद्दाउलग, बहुजणमव्वत्ततस्सेवी (॥२॥) आवर्जित सन्नाचार्यः स्तोकमेव प्रायश्चित्त दास्यतीति बुद्ध्या वैयावृत्त्यकरणादिभिरालोचनाचार्यमाकम्प्य—आराध्य यत् आलोच-यति, एष आलोचनादोषः १, तथा अनुमान्यानुमान कृत्वा लघुतरापराधनिवेदनतो मृदुदण्डप्रदायकत्वादिस्वरूपमाचार्यस्याक-लय्य यदालोचयत्येषोऽप्यालोचनादोषः २, तथा यद्दृष्टमपराधजात क्रियमाणमाचार्यादिना तदेवालोचयति नापरमिति तृतीय आलोचनादोषः ३, ' बायर च ' त्ति बादर दोषजातमालोचयति न सूक्ष्म, तत्रावज्ञापरत्वात् एष चतुर्थः ४, ' सुहुम व ' त्ति सूक्ष्म वा दोषजातमालोचयति न बादरम्, यः सूक्ष्ममालोचयति स कथ बादर नालोचयतीत्येनरूपभावसम्पादनार्थमाचार्यस्यैष

पञ्चम आलोचनादोषः ५, तथा 'छण्णं'ति प्रच्छन्नमालोचयति किमुक्तं भवति? लज्जालुताद्युपदर्श्यापराधानल्पशब्देन तथाऽऽलोचयति यथा केवलमात्मैव शृणोति, न गुरुरित्येष षष्ठ आलोचनादोषः, 'सद्दाउलं'ति शब्दाकुलं बृहच्छब्दं यथा भवत्येवमालोचयति इदमुक्तं भवति—महता शब्देन तथाऽऽलोचयति यथाऽन्येऽप्यगीतार्थादयः शृण्वन्तीत्येष सप्तम आलोचनादोषः ७, तथा 'बहुजण'त्ति बहुजनमध्ये यदालोचनं तद्बहुजनम्, अथवा बहवो जना आलोचनागुरवो यत्र तद्बहुजनमालोचनम्, किमुक्तं भवति? एकस्य पुरत आलोच्य तदेवापराधजातमन्यस्यापि पुरत आलोचयति एषोऽष्टम आलोचनादोषः ८, 'अव्वत्त'त्ति अव्यक्तोऽगीतार्थः, तस्याव्यक्तस्य गुरोः पुरतो यदपराधालोचनं तदव्यक्तम्, एष नवम आलोचनादोषः ९, 'तस्सेवि'त्ति शिष्यो यमपराधमालोचयिष्यति तमेव सेवते यो गुरुरसौ तत्सेवी तस्य समीपे यदपराधालोचनं एष समातिचारेण तुल्यस्ततो न किमपि मे प्रायश्चित्तं दास्यत्यल्पं वा दास्यति न च मां खरंटयिष्यते यथा विरूपं कृतं त्वयेति बुद्ध्या तदालोचनं तत्सेवि, एष दशम आलोचनादोषः १०। इति श्रीव्यवहारभाष्यवृत्तौ प्रथमोद्देशके ६५६ प्रतौ १४१ पत्रे ॥४॥

अथ साधूनामपि योगादितपोऽनुष्ठानपरिसमाप्ताववश्यं नन्द्यादिर्महोत्सवः कर्त्तव्य एव, न च किमिदं निर्ग्रन्थानामुत्सनकरणमित्यादिशङ्का कार्या, जिनशासनोन्नतिकरत्वाच्छास्त्रोक्तत्वाच्च। तथा हि—इत्युक्तः प्रतिमाप्रतिपत्तिविधिः, इदानीं समाप्तिविधिमाह—तीरियउब्भामणतो य, दरिसणं साहुसन्निमप्पाहे। दंडियभोइयअसती, सावगसंघो व सक्कारं ॥ (१) ॥ तीरितायां समाप्तायां प्रतिमायामुत्प्रावल्येन भ्रमन्त्युद्भ्रमाः-भिक्षाचरास्तेषां नियोगो व्यापारो यत्र स उद्भ्रमैकनियोगो ग्रामस्तत्र दर्शनमात्मनः प्रकटनं करोति, ततः साधुं—संयतं संज्ञिनं—सम्यग्दृष्टिं श्रावकं वा 'अप्पाहे'त्ति संदेशयति. ततो दंडिनो—राज्ञो निवेदनं

स सत्कार करोति, तदभावे भोजिकः, तस्याप्यभावे श्रावकवर्गः, तस्याप्यभावे सङ्घः-साधुसाध्वीवर्गः । इयमत्र भावना-प्रतिमायां समाप्तायां यस्मिन् ग्रामे प्रत्यासन्ने बहवो भिक्षाचरा साधवश्च समागच्छन्ति, तत्रागत्यात्मान दर्शयति दर्शयश्च य साधु श्रावक वा पश्यति तस्य सन्देश कथयति यथा-समापिता मया प्रतिमा ततोऽहमागत इति । तत्राचार्यो राज्ञो निवेदयन्ति यथा-अमुको महातपस्वी समाप्ततपःकर्माभूदिति स महता सत्कारेण गच्छे प्रवेशनीय इति । तत स राजा तस्य सत्कारं कारयितव्य, तदभावेऽधिकृतस्य ग्रामस्य नगरस्य वा नायकः, तदभावे समृद्धः श्रावकवर्गः, तदभावे साधुसाध्वीवर्गप्रभृतिकः सङ्घो यथाशक्ति सत्कार करोति। सत्कारो नाम तस्योपरि चन्द्रोदयधारण, नान्दीतूर्यास्फालन, सुगन्धवासक्षेपणमित्यादि, एवरूपेण सत्कारेण गच्छ प्रवेशयेत् । सत्कारेण प्रवेशनायामिमे गुणाः-उब्भावणा पवयणे, सद्धाजणण तहेव बहुमाणो । ओहावणा कुतित्थे, जीअं तह तित्थवुड्ढी य ॥ (२) ॥ प्रवेशसत्कारेण प्रवचने-प्रवचनस्योद्भाजना-प्राबल्येन प्रकाशन भवति, तथाऽन्येषां बहूनां साधूनां श्रद्धाजनन यथा वयमप्येव कुर्मो येन महती शासनस्य प्रभावना भवति, तथा श्रावकश्राविकाणामन्येषां च बहुमानमुपजायते शासनस्योपरि यथा अहो महाप्रतापिपारमेश्वर शासन, यत्रेदृशा महातपस्विन इति, तथा कुतीर्थे जातावेकवचन, कुतीर्थानामपभ्राजना-हीलना, तत्रेदृशां महासत्वानां तपस्विनामभावात्, तथा जीतमेतत्-कल्प एष यथा समाप्तप्रतिमानुष्ठानानां सत्करणीय इति, तथा तीर्थवृद्धिश्च । एव प्रवचनस्यातिशयमुदीक्ष्यमाणा बहव ससाराद्विरज्यन्ते, विरक्ताश्च परित्यक्तसङ्गाः प्रव्रज्यां प्रतिपद्यन्ते, ततो भवति तीर्थप्रवृद्धिरिति । इति श्रीव्यवहारभाष्य-वृत्तौ प्रथमोद्देशके ६५६ प्रतौ १९५ पत्रे ॥ ५ ॥

अथाचार्यैः शरीरचिन्तार्थं बहिर्न गन्तव्यम्, इत्यक्षराणि लिख्यन्ते—

बहिगमणे चउगुरुगा, आणादी वाणिए य मिच्छत्तं। पडियरणमणाभोगे, खरमुहि मरुए तिरिक्खादी ॥ (१) ॥ आचार्यो यदि विचारभूमिं बहिर्गच्छति ततः प्रायश्चित्तं चत्वारो गुरुकाः, आज्ञादयश्च दोषाः। तथा 'वाणिए य मिच्छत्तं' ति वणिजि पूर्वमभ्युत्थानं कृतवति, पश्चादकुर्वति केषाञ्चिन्मिथ्यात्वमुपजायते, इयमत्र भावना-आचार्यं संज्ञाभूमिं व्रजन्तं ततः प्रत्यागच्छन्तं च दृष्ट्वा वणिजो निजनिजापणस्था अभ्युत्थानं कृतवन्तः, तं च तथा वणिजां बहुमानेनाभ्युत्थानं दृष्ट्वा केचिदन्ये मन्यन्ते गुणवानेष आचार्यो येन वणिज एवमेनमभ्युत्तिष्ठन्ति तस्मादस्माकमपि पूज्य इति तेऽपि पूजयन्ति। यदा त्वाचार्यः कदाचिद्द्वौ वारौ संज्ञाभूमिं व्रजति तदा चतुरो वारान् गमने प्रत्यागमने चोत्थातव्यं ते चालस्यं मन्यमाना अभ्युत्थानं भविष्यतीति कृत्वा आचार्यं दृष्ट्वाऽन्यतो मुखं कुर्वन्ति तांश्च तथा कुर्वतो दृष्ट्वाऽन्ये चिन्तयन्ति नूनमेष प्रमादी जातो, ज्ञातोपि गुणवानपि यदीदृशः पतति तर्हि न किञ्चिदिति ते मिथ्यात्वं गच्छन्ति। तथा आचार्यं लोकेन पूज्यमानं दृष्ट्वा मरुके ब्राह्मणस्य मारणबुद्ध्या प्रतिनरणं भवति, ततः संज्ञाभूमिं गतं विजने प्रदेशे मारयेत्। तथा खरमुखी-नपुंसकीं दासीं वा प्रापयित्वा उड्डाहं कुर्यात्। अनाभोगेन वा वनगहने प्रविष्टे तिर्यगादौ कुलटादौ च प्रविश्यायामात्मपरोभयसमुत्था दोषा एष गाथासङ्क्षेपार्थः। इति श्रीव्यवहारभाष्यवृत्तौ षष्ठोद्देशके ६५१६ प्रतौ ४४१ पत्रे ॥ ६ ॥

आचार्यो हि भगवांस्तीर्थङ्करकल्पः, ततस्तेन गोचरचर्यायां न गन्तव्यम्, यदि याति तर्हि प्रायश्चित्तम्, तं गच्छन्तं वा यदि गीतार्थो भिक्षुर्वा न निषेधयति तर्हि तयोरपि प्रायश्चित्तमित्यभिप्रायो लिख्यते—

तत्र प्रथम तीर्थङ्करकल्पद्वार व्याख्यानयति—देविंदचक्कवट्टी, मडलिया ईसरा तलवरा य । अभिगच्छन्ति
जिंणदे, तो गोअरिअ न हिंडति ॥ १ ॥ जिनेन्द्रान् भगवत उत्पन्ने ज्ञाने देवेन्द्रा –शक्रप्रभृतयश्चक्रवर्त्तिनः
उपलक्षणमेतत् यथायोग वासुदेवा बलदेवाश्च तथा माण्डलिकाः–कतिपयमण्डलप्रभव ईश्वरास्तलवराश्चाभिगच्छन्ति,
ततस्ते गोचरचर्या न हिण्डन्ति ॥ सखादीया कोडी, सुराण निच्च जिणे उवासति । ससयवागरणाणि य,
मणसा वचसा च पुच्छति ॥ २ ॥ सङ्ख्यातीताः सुराणां कोटयो नित्य–सर्वकाल जिनान्–तीर्थकृत उपासते, तथा
सतत मनसा वचसा च पृच्छन्ति, सुरादिके मनसा वचसा च सशय व्याकरणानि करोति, ततो भिक्षां न हिण्डते ॥
उप्पन्ननाणा जह नो अडति, चोत्तीसबुद्धातिसया जिणदा । एव गणी अट्ठगुणोववेओ, सत्था व नो हिंडइ इड्ढिम तु ॥ ३ ॥
यथा उत्पन्ने ज्ञाने जिनेन्द्राश्चतुस्त्रिंशद्बुद्धातिशयाः सर्वज्ञातिशया देहसौगन्ध्यादयो येषां ते तथा भिक्षा न हिण्डन्ते । एव
तीर्थकरदृष्टान्तेन गणी आचार्योऽष्टगुणोपेतोऽष्टविधगणिसम्पदुपेत. शास्ता इव तीर्थकर इव ऋद्धिमाश्च हिण्डते ॥ गुरुहिंडणमि
गुरुगा, वसभे लहुआनिवारयतस्स । गीतागीते गुरुलहु, आणादीया बहू दोसा ॥ ४ ॥ आचार्य भिक्षामटामीति व्यव-
सित यदि वृषभो न निवारयति तदा तस्यानिवारयतः प्रायश्चित्त चत्वारो लघुकाः, अथ वृषभेण निवारितोऽपि न तिष्ठति
तर्हि वृषभः शुद्ध आचार्यस्य प्रायश्चित्त चत्वारो गुरुकाः, तथा गीतार्थो भिक्षुश्चेन्न निवारयति तदा तस्य मासगुरु , अगी-
तार्थस्य भिक्षोरनिवारयतो मासलघु । आचार्यस्य गीतार्थागीतार्थाभ्यां वारितस्यापि गमने प्रत्येक चतुर्गुरुः । आज्ञादयश्चेमे
वक्ष्यमाणा बहवो दोषा , तानेवाह+ + + + + + + + रायामच्चपुरोहिय, सेट्ठी सेणावई तलवरा य । अभिगच्छतायरिए,

तद्दियं च इमे उदाहरणं ॥ ( ५ ॥ ) यथा तीर्थकरश्छद्मस्थकाले हिण्डमानोऽप्युत्पन्ने ज्ञाने देवेन्द्राद्यभिगमान्न हिण्डते । एवमाचार्यानपि—आचार्यपदस्थानपि राजा अमात्यः पुरोहितः श्रेष्ठी सेनापतितलवराश्चाभिगच्छन्ति, ततस्ते भिक्षां न हिण्डन्ते अन्यथा दोषः, तत्र चेदमुदाहरणम्, तदेवाह— सोऊण य उवसंतो, अमच्चो रण्णो तगं निवेदेइ । रायावि वितियदिवसे, तइए अमची य देवी य ॥ ( ६ ॥ ) राज्ञोऽमात्य आचार्यसमीपे धर्मं श्रुत्वा उपशान्तः, स च राज्ञस्तकमाचार्यं निवेदयति यथा—गुणवानतीवाचार्योऽमुकप्रदेशे तिष्ठति, ततो द्वितीयदिवसे राजा अमात्येन सह गतः, स धर्मं श्रुत्वा परितुष्ट आगतो निजाग्रमहिष्याः परिकथयति अमात्येनाप्यात्मीयभार्यायाः कथितम्, ततोऽमात्यी देवी च तृतीयदिवसे धर्मश्रवणाय समागते आचार्यो भिक्षार्थं गतः । ततः सोउं पडिच्छिऊणं, च गया अहवा पडिच्छिणे खिंसा । हिंडंति होंति दोसा, कारण पडि-वत्तिकुसलेहिं ॥ ( ७ ॥ ) भिक्षार्थं गत इति श्रुत्वा ते हीलयित्वा गते, अथवा क्षणमात्रं प्रतीक्ष्य हीलयन्त्यौ गते, यदि वा यावदाचार्य आगच्छति तावत्प्रतीक्ष्यमाणे हीलयतः, अथवा प्रस्विन्नशरीरं—परिगलत्प्रस्वेदमागतं दृष्ट्वा खिंसतः, यदि वा क्लमेन सुष्टु कृतं वन्दनं न वा सोमं कथयतो वा परिश्रमेण न सुष्ठुवचनविनिर्गमस्तत उत्थिते हीलयतो यथा पिण्डोलक इवैष भिक्षामटति, किमाचार्यत्वमेतस्य एते भिक्षां हिण्डमाने दोषाः—यदि पुनः कारणे वक्ष्यमाणे भिक्षार्थं गतो भवेत् राजादयश्च तत्रागताः, ते च पृच्छेयुः क्व गत आचार्यः तत्र ये प्रतिपत्तिकुशलास्तैर्नेदं वक्तव्यम्—भिक्षार्थं गत इति, चैत्यवन्दननिमित्तं गत इति । ते यदि राजादय आचार्यमागच्छन्तं प्रतीक्षेरन् तदा येऽतीवदक्षा गीतार्थास्ते सुन्दरं पानकं प्रथमालिकां सुन्दरं कल्पं चोलपट्टं च गृहीत्वाऽऽचार्यसमीपे गत्वाऽऽचार्यस्य कथयन्ति । तत आचार्यो मुखहस्तपादादि प्रक्षाल्य प्रथमालिकां पानकं

कृत्वा कल्प आधृत्य पात्राण्यन्यस्य समर्प्य तादृशवेषो वसतावानीयते। यथाऽनाख्यातोऽपि राजादिभिर्ज्ञायते, एष आचार्य इति। ततो वसतिं प्राप्तस्य पादप्रोञ्छन पादप्रमार्जनार्थमादाय साधव उपतिष्ठन्ति। पादप्रमार्जनानन्तर वसतेरन्त' प्रविश्य पूर्वरचितायां निषद्यायामुपविशति। उपविष्टस्य चरणकल्पकरणाय कोऽपि साधुरुपढौकते। चरणप्रक्षालनानन्तर च सर्वे साधव पुरत॰ पार्श्वत॰ पृष्ठतो वा किङ्करभूतास्तिष्ठन्ति। यथा राजा चकितस्तिष्ठति। इति श्रीव्यवहारभाष्यवृत्तौ षष्ठोद्देशके ६५६ प्रतौ ४४६ पत्रे ॥ ७ ॥

न केवल वैयावृत्त्यकरेणैवाहारादिना गुरोर्भक्ति' कार्या, किंत्वन्येन गीतार्थेनापि स्वयमाहृताहारादिना गुरोर्भक्तिः कर्तव्येत्यभिप्रायो लिख्यते—

दव्वे भावे भत्ती, दव्वे गणिगाउ दूति जाराण। भावंमि सीसवग्गो, करेइ भत्तिं सुअधरस्स ॥ (१॥) आचार्यस्य भक्तौ क्रियमाणायां तीर्थस्याव्यवच्छेदः, भक्तावक्रियमाणायां तु तीर्थव्यवच्छेदः। सा च भक्तिर्द्विधा-द्रव्ये भावे च, तत्र यथाऽऽमगणिका भुजङ्गानां भक्तिं कुर्वन्ति दूतयो वा जाराणां, सा द्रव्ये द्रव्यभक्तिः, भावे भावविषया भक्तिः पुनरिय यच्छिष्यवर्गः श्रुतधरस्य भक्तिं करोति। यद्यपि चान्योऽपि गुरोर्भक्तिं करोति तथाऽपि ममापि निर्जरा स्यादित्यात्मानुग्रहबुद्ध्याऽन्येनापि भक्ति' कर्तव्येति। लौहार्यगौतमदृष्टान्तेन भावयति-जइवि य लोहसनामो, गिण्हइ खीणतराइणो उक्तं। तहवि य गोअमसामी, पारणए गेण्हए गुरुणो ॥ (२॥) यद्यपि च लोहसनामो लोहार्य॰ क्षीणांतरायस्य भगवतो वर्द्धमानस्वामिनः सदैवोच्छ-एषणीयभक्तादिक गृह्णाति, तस्य भगवद्वैयावृत्त्यकरत्वात्। यत॰ " धन्नो सो लोहज्जो, खतिखमो पवरलोहसरिवन्नो।

जस्स जिणो पत्तातो, इच्छइ पाणीहि भुत्तुं जे ॥ ” तथाऽपि गौतमस्वामी सपारणके गुरोर्वर्द्धमानस्वामिनो योग्यं गृह्णाति । एवमन्येनाप्यवैयावृत्त्यकरभावेऽपि यथायोग्यं गुरोः कर्त्तव्यम् । इति व्यवहारभाष्यवृत्तौ षष्ठोदेशके ६५९ प्रतौ ४५७ पत्रे ॥८॥

अस्वाध्याये सर्वथा स्वाध्यायो न कर्त्तव्य इत्यभिप्रायो लिख्यते—

राया इव तित्थगरो, जाणवया साहुघोसणं सुत्तं । मेच्छा य असज्झातो, रयणधणाइं व नाणादी ॥ १ ॥ अत्र राजा इव तीर्थकरः जानपदा इव साधवः, घोषणमिव सूत्रं, म्लेछा इवास्वाध्यायः, रत्नधनानीव ज्ञानादीनि । तत्र ये साधवो जानपदस्थानीया राजस्थानीयस्य तीर्थकरस्याज्ञां नानुपालयन्ति ते प्रान्तदेवतया छन्यन्ते, प्रायश्चित्तदण्डेन इव दण्डयन्ते । इति व्यवहारभाष्यसप्तमोद्देशके ६५८ प्रतौ ५०५ पत्रे ॥ ९ ॥

तथा सन्ध्यास्वपि स्वाध्यायो न कर्त्तव्य इत्यक्षराणि लिख्यन्ते—

चउसंज्झासु न कीरइ, पाडिवएसुं तहेव चउसुंपि । जो जत्थ पूजती तू, सव्वहिं सुगिम्हतो नियमा ॥ ( १ ॥ ) चतस्रः सन्ध्यास्तिस्रो रात्रौ । तद्यथा—प्रस्थिते सूर्ये, अर्द्धरात्रे, प्रभाते च, चतुर्थी दिवसस्य मध्यभागे, एतासु चतसृष्वपि दिनसन्ध्यासु स्वाध्यायो न क्रियते, शेषक्रियाणां तु प्रतिलेखनादीनां न प्रतिषेधः । स्वाध्यायकरणे चाज्ञाभङ्गादयो दोषास्तथा चतस्रः प्रतिपदः तद्यथा—आषाढपौर्णमासीप्रतिपत् १ इन्द्रमहप्रतिपत् २ कार्त्तिकपौर्णमासीप्रतिपत् ३ सुग्रीष्मप्रतिपत् ४ चैत्रपौर्णमासीप्रतिपदित्यर्थः, एतास्वपि चतसृष्वपि प्रतिपत्सु तथैव स्वाध्याय एव न क्रियते । न शेषक्रियाणां प्रतिषेधः । इह प्रतिपद्ग्रहणेन प्रतिपत्पर्यन्ताश्चत्वारो महाः सूचिताः । इत्येषां तु चतुर्णां महानां मध्ये यो महो यस्मिन् देशे यतो दिवसा-

दारभ्य यावन्त काल पूर्यते तस्मिन् देशे ततो दिवसादारभ्य तावन्त कालं स्वाध्याय न कुर्वन्ति । प्रतिपत्तुन' सर्वेषां पर्यन्त., 'सव्वेसिं जाव पडिवतो' इति वचनात् । सुग्रीष्मकश्चैत्रमासभावी पुनर्महामहः सर्वेषु देशेषु शुक्लपक्षप्रतिपद आरभ्य चैत्रपौर्णमासीप्रतिपत्पर्यन्तो नियमात्प्रसिद्धस्ततो यद्यप्यान प्रतिपन्नस्तथाऽपि चैत्रमासस्य शुक्लपक्षप्रतिपद आरभ्य सर्वं पञ्च पौर्णमासीप्रतिपत्पर्यन्त यावदवश्यमनागाढो योगो निक्षिप्यते । शेषेषु आगाढादिकेषु योगो न निक्षिप्यते, केवल स्वाध्याय न कुर्वन्ति । इति श्रीव्यवहारभाष्यवृत्तौ सप्तमोद्देशके ६५६ वृत्तौ ५०८ पत्रे ।

॥ इति श्रीव्यवहारविचाराः समाप्ताः ॥

अथ श्रीपञ्चकल्पविचारा –तत्र च पूर्वं साधुभिर्मलमूत्रादिपीडा न रक्षणीयेत्यभिप्रायो लिख्यते—

मुत्तनिरोहे चक्खु, वच्चणिरोहेण जीविअं हणइ । छद्दनिरोहे कोढ्ढ, सुक्कनिरोहे भवे अपुम ॥ (१॥) एतच्चूर्णिर्यथा—मूत्रनिरोधे चक्षुस्तस्मान्मूत्रनिरोधे चक्षुरुपघातो भवति, पुरीषनिरोधे च जीवितोपघात , छर्दिनिरोधे च कुष्ठोत्पत्तिः शुक्रनिरोधे चापौरुष स्यादिति । आह–यद्येव शुक्रनिरोधेऽपुरुषत्व भवति नन्वेवमनवस्था, यस्मादमी भगवन्तः साधव' पूर्वकोट्यायुष्का अपि ब्रह्म धारयन्ति, न च तेषामपुमत्व भवत्यत' समयविरुद्धमुदाहृतम्, आचार्य आह–न सिद्धान्तापरिज्ञानात्, इह सामस्त्येन सूत्रमभिहितम्, तत्र ये ते शकुनी तत्कर्मसेवी पक्षिकापाक्षिक इर्ष्यालुकाया–उत्कटवेदास्तान् प्रतीत्य सूत्रनिपातः, यस्मात्तेषां वेदप्रादुर्भावनिरोधेन नपुंसकत्वमापद्यते इत्यतो न विरोधः । इति श्रीपञ्चकल्पभाष्यचूर्णौ वृद्धसङ्घसत्कद्वादशे पत्रे ॥

॥ इतिश्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्यो-

पाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे विशेषसमुच्चयापरनाम्नि अपरतटे व्यवहारपञ्चकल्पविचाराः समाप्ताः ॥

॥ समाप्तं चेदं छेदग्रन्थविचारसमुच्चयनामाऽपरतटम् ॥

अनेकसिद्धान्तविचाररत्नरम्ये गुरूपासनमार्गलभ्ये । विचाररत्नाकरनामशास्त्रेऽपरं तटं प्राप्तमिदं समाप्तिम् ॥ १ ॥

येन प्रवचनमेतद्विहितं सहितं हितोपदेशेन । तमहितरहितं सुरनरमहितं श्रीजिनपतिं स्तौमि ॥ १ ॥

अथ निरनुक्रमं प्रकीर्णकप्रकरणादिसङ्कीर्णविचारा लिख्यन्ते—

अथ ये केचिन्मिथ्यात्विनां मार्गानुसारि कर्त्तव्यमपि नानुमोदयन्ति ते सिद्धान्तबाह्या ज्ञेयाः, विप्रतीपभावित्वात् । तथा हि—

अहवा सव्वं चिय वीयरायवयणाणुसारि जं सुकडं । कालत्तएवि तिविहं, अणुमोएमो तयं सव्वं ॥ अथवेति सामान्यरूपप्रकारदर्शनो । चिय एवार्थे ततः सर्वमेव वीतरागवचनानुसारि–जिनमतानुयायि यत्सुकृतं जिनभवनाबिम्बकारणतत्प्रतिष्ठासिद्धान्तपुस्तकलेखनतीर्थयात्राश्रीसङ्घवात्सल्यजिनशासनप्रभावनाज्ञानाद्युपष्टम्भधर्मसान्निध्यक्षमामार्दवसंवेगादिरूपं मिथ्यादृग्सम्बन्ध्यपि मार्गानुसारि कृत्यं कालत्रयेऽपि त्रिविधं मनोवाक्कायैः कृतं कारितमनुमतं च यदभूद्भवति भविष्यति चेति तकत् इति तच्छब्दात् 'त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक्' ( ७–३–२९ ) इत्यादिसूत्रेण स्वार्थेऽक्प्रत्यये रूपं तदित्यर्थः तत्सर्वं निरवशेषमनुमोदयामो–अनुमन्यामहे हर्षगोचरतां प्रापयाम इत्यर्थः । बहुवचनं चात्र पूर्वोक्तचतुःशरणप्रतिपत्त्या उपार्जितपुण्यसम्भारत्वेन स्वात्मनि बहुमानसूचनार्थम् । इति श्रीचतुःशरणप्रकीर्णके ५८ गाथायाम् ॥ १ ॥

तथाऽऽराधनापताकायामपि—

जो जारिसओ कालो, भरहेरवएसु होइ वासेसु। ते तारिसया तइया, अडयालीस तु निजवग्गा ॥ १ ॥ एए उक्कोसेण, परिहाणीए जहन्नओ दुन्नि। एगो परित्तिपासे, बीओ पाणाइगच्छेजा ॥ २ ॥ कियदत्रतथ—सेसाण जीवाण, दाणरुइत्त सहावविणियत्त। तह पयणुकसायत्त, परोवयारित्त भव्वत्त॥ १ ॥ दक्खिन्नदयालुत्त, पियभासित्ताइविविहगुणनिवह। सिवमग्ग-कारण ज, त सव्व अणुमय मज्झ ॥ २ ॥ इत्याराधनापताकाया ३११ गाथा ॥ २ ॥

अथ गर्भस्वरूप लिख्यते—

दाहिणकुच्छी पुरिसस्स, होइ वामा उ इत्थियाए य। उभयतर नपुसे, तिरिए अट्ठेव वरिसाइ ॥ १६ ॥ इमो खलु जीवो अम्मापिउसजोगे माउओय पिउसुक्क त तदुभयससट्ठ कलुस किब्बिस तप्पढमयाए आहारमाहारेइ आहारमाहरित्ता गब्भत्ताए वक्कमेइ॥ सत्ताह कलल होइ, सत्ताह होइ अब्बुय। अब्बुया जायए पेसी, पेसीओ य घण भवे ॥ १८॥ तो पढमे मासे करिसूण पल जायइ १। बीए मासे पेसी सजायए घणा २। तइए मासे माऊए डोहल जणइ ३। चउत्थे मासे माऊए अगाइ पीणेइ ४। पचमे मासे पच पिंडियाउ पाणि २ पाय २ सिर चेव निवत्तेइ ५। छट्ठे मासे पित्तसोणिय च उवचिणेइ ६। सत्तमे मासे सत्तसि-रासयाइ पच पेसीसयाइ नव धमणीओ नवनउइ च रोमकूवसयसहस्साइ निव्वत्तेइ विणा केसमसुणा सह केसमसुणा अद्धुट्ठाओ रोमकूवकोडीओ निवत्तेइ ७। अट्ठमे मासे वित्तीकप्पो हवइ ॥ इति श्रीतन्दुलवैयालिकप्रकीर्णके ॥ ३ ॥

केचिद्यान्तकाले गृहस्थानां दीक्षाग्रहण प्रति सन्दिहन्ते यद्दीक्षा हि विहारादिसामर्थ्ये सत्येव ग्राह्येति, पर तदसमीचीनम् शास्त्रे तस्योक्तत्वात् , तथा हि—परगच्छआगयस्स उ, निरईयारस्स नेव उट्ठवणा। दिसिबधो कायव्वो, तह पजते चयारोवो

॥ १ ॥ पासत्थ ईणं पुण, भणिओ उट्ठावणाविही सव्वो । दिसिबंधो तो नियमा, अह जइ सुस्सावगो कोई ॥ २ ॥ संथारगपव्वज्जं, पडिवज्जइ तस्स जिणगिहाईसु । पव्वज्जाविहि सव्वो, कायव्वो नेव उट्ठवणा ॥ ३ ॥ जइ पुण भत्तपरिन्नं, पडिवज्जइ सावगो सुसम्मत्तो । नवकारपुव्वयं पढमाणुव्वयं समुच्चरइ ॥ ४ ॥ इति श्रीआराधनापताकायाम् ॥ ४ ॥

तथा भक्तपरिज्ञायामपि—

जइ सोवि सव्वविरइं कयाणुराओ विसुद्धमणकाओ । छिन्नसयणाणुराओ, विसयकसाया विरत्तो य ॥ १ ॥ संथारगपव्वज्जं, पडिवज्जइ सोवि नियमनिरवज्जं । सव्वविरइप्पहाणं, सामइयचरित्तमारुहइ ॥ २ ॥ गाथा ३२ । ३३ ॥

अथ साधुभिः प्रायो लेपकृद्वस्तु न ग्राह्यमित्यक्षराणि लिख्यन्ते—

चउलहुयं लहइ मुणी, लित्ते दहिमाइलित्तकरमत्ते । छड्डियमिह पुढवाईसु, अणंतरपरंपरंति दुहा ॥ ६१ ॥ इह दधिक्षीरघृततैलतीमनादिद्रव्यस्य यस्य लेपः करभाजनादौ लगति तल्लेपकृत् लिप्तमुच्यते, तच्च कारणं विना न ग्राह्यम् । यदाह—

घित्तव्वमलेवकडं, लेवकडे मा हु पच्छकम्माइ । न य रसगेहिपसंगो, न य भुत्ते बंभपीडा य ॥ इह साधुना सदैवालेपकृद्वल्लचणककुल्माषशुष्कौदनादि गृहीतव्यम् । मा भूवन् लेपकृति ग्राह्यमाणे पश्चात्कर्मादयो दोषाः—दध्यादिलिप्तहस्तादिक्षालनादिरूपाः । न च सदैवालेपकृद्ग्रहणे रसगृद्धिप्रसङ्गो—रसाभ्यवहारलाम्पट्यवृद्धिप्रसक्तिः । न च तादृशे भुक्ते ब्रह्मपीडा—ब्रह्मव्रतस्य बाधा । तादृशस्य नीरसाहारस्य दर्पोत्पादकत्वाभावात् । अत्राह-नोदकः—ननु यदि लेपकृद्ग्रहणे पश्चात्कर्मप्रभृतयो दोषा भवन्ति ततस्तन्न गृह्यते तर्हि मा कदाचनापि साधुर्भुंक्ताम् । एवं सर्वेषां दोषाणां मूलत एवोत्थानं निषिद्धं भवति । गुरुराह—

सर्वकाल चपणमेव कुर्वतः साधोश्चिरकालभावितपोनियमसयमानां हानिर्भवति, तस्माद्यावज्जीवचपण न कार्यम्, पुनः प्राह—
यदि सर्वकाल चपण कर्त्तुमशक्तस्तर्हि षण्मासचपण कृत्वा पारणकमलेपकृता विधत्ताम् । गुरुराह—यद्येव तप. कुर्वन् सयम
योगान् कर्त्तुं शक्नोति तर्हि करोतु, न कोऽपि तस्य निषेधः । पुनरप्याह—यदि षण्मासचपण कर्त्तुं न शक्नोति तर्हि एकदि-
नोन षण्मासचपण कृत्वा आचाम्लेन पारयतु, एवमेकैकेन(कया) दिनहान्या तावदात्मान तोलयेद्यावचतुर्थ कृत्वा आचाम्लेन
पारण करोतु, एवमप्यसामर्थ्ये दिवसे दिवसे गृहीत्वाचाम्लानिर्लेपम् । गुरुराह—करोत्वेव तप', यदि प्रत्युपेक्षणादिसयमयोगभ्रशो
न भवति, केवल सम्प्रति सेवार्त्तसहनानां नास्ति तादृशी शक्तिरिति न तथोपदेशो विधीयते। पुनः पर' प्राह-ननु महाराष्ट्र-
कोशलदेशोद्भवा सदैव सौवीरकूरमात्रभोजिन सेवार्त्तसहननास्ततो यदि तेऽपीत्थ यापयन्ति यावज्जीव तर्हि तथा सौवीरकूर-
मात्रभोजनेन किं न यतयो मोक्षगमनैकनद्धकचा यापयन्ति ? तैः सुतरामेव यापनीयम्, प्रभूतगुणसम्भवात् । गुरुराह—ति-
अ सीम्म समणाण, तिअसुण्ह गिहीण तेणणुन्नाय । तक्काईण गहण, कट्ठरमाईसु भइयव्व ॥ १ ॥ त्रिक नस्तु य श्रमणानां
शीत भवति, तेन प्रतिदिवसमाचाम्लकरणे तक्राद्यभावत आहारपाकासम्भवेनाजीर्णादयो दोषाः प्रादुष्यन्ति । तदेव त्रिकमुष्ण
गृहिणाम्, तेन सौवीरकूरमात्रभोजनेऽपि तेषामाहारपाकभावतो नाजीर्णादिदोषा जायन्ते, ततस्तेषा तथा यापयतामपि न क-
श्चिद्दोष' । साधूना तूक्तनीत्या दोषस्तेन कारणेन तक्रादिग्रहण साधूनामनुज्ञातम् । इह प्रायो यतिना विकृतिपरिभोगपरि
त्यागेन सदैवात्मशरीर यापनीय कदाचिदेव च शरीरस्यापाटवे सयमयोगवृद्धिनिमित्तबलाधानाय विकृतिपरिभोगः । तथा
चोक्त सूत्रे—'अभिक्खण निव्विगइगया य' त्ति । निर्विकृतिपरिभोगे च तक्राद्येवोपयोगीति तक्रादिग्रहणम् । कट्ठरादिषु–घृतव-

टिकोन्मिश्रतीमनादिषु ग्रहणं भाज्यं-विकल्पनीयं, ग्लानत्वादिप्रयोजनोत्पत्तौ कार्यं न शेषकालमिति भावः। तेषां च बहुलेपत्वात्, गृद्ध्यादिदोषजनकत्वाच्च। अथ किं तत्त्रिकम्? उच्यते—आहारः, उपधिः, शय्या। एतानि त्रीण्यपि गृहिणां शीतकालेऽप्युष्णानि भवन्ति, तेन तेषां तक्रादिग्रहणमन्तरेणापि बाह्याभ्यन्तरोष्णतापेनाहारो जीर्यते, तत्राभ्यन्तरे भोजनवशात्, बाह्यः शय्योपधिवशात्। एतान्येवाहारोपधिशय्यारूपाणि त्रीणि वस्तूनि यतीनां ग्रीष्मकालेऽपि शीतानि भवन्ति। तत्राहारस्य शीतता भिक्षाचर्यायां प्रविष्टस्य बहुगृहेषु स्तोकस्तोकलाभेन बृहद्वेलालगनात्। उपधेरेकवारं वर्षाकालादर्वाग् प्रक्षालनेन मलिनत्वात्। शय्यायास्तु प्रत्यासन्नाग्निकरणाभावेन तेन कारणेन ग्रीष्मकालेऽप्याहारादीनां शीतत्वसम्भवरूपेणोपहन्यते जाठरोऽग्निः। तस्माच्चाग्न्युपघातादजीर्णबुभुक्षामान्द्यादयो दोषा जायन्ते, ततस्तक्रादिग्रहणं साधूनामनुज्ञातम्। तक्रादिनाऽपि हि जाठरोऽग्निरुद्दीप्यते, तेषामपि तथास्वाभाव्यात्। इति श्रीयतिजीते ६१ गाथावृत्तौ ४६ पत्रे ॥ ५ ॥

अथाजातश्मश्रुणः शिष्यादेराचारप्रकल्पाध्ययनं पाठयितुं न कल्पते, इत्यभिप्रायो लिख्यते—

नो कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगस्स वा खुड्डियाए वा अवंजणजायस्स आयारपकप्पे नामं अज्झयणे उद्दिसित्तए। १। कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगस्स वा खुड्डियाए वा वंजणजायस्स आयारपकप्पे नामं अज्झयणे उद्दिसित्तए।२। तिवासपरियागस्स समणस्स निग्गंथस्स कप्पति आयारपकप्पे नामं अज्झयणे उद्दिसित्तए॥ इत्यादि, व्यवहारदशमोद्देशकोक्तेन विधिना सूत्रं पाठनीयम्। इति गच्छाचारप्रकीर्णके 'विहिणा जो उ चोएइ' इति गाथा २४ वृत्तौ ॥ ६ ॥

परिशटितवस्त्रे यावन्ति थिग्गलानि ग्रन्थयश्च कल्पन्ते तल्लिख्यते—

जे भिक्खू वत्थस्स एग पडियाणिय देइ देंत वा सातिज्जति । यो वस्त्रस्यैक थिग्गल ददाति, ददत वा स्वादयति–अनुमोदयति तस्य दोषाः । द्वौ कल्पौ सौत्रिकौ एक और्णिको ग्राह्यः, वर्षाकाल विना और्णिक एकको न व्यापार्यो मध्ये सौत्रिको बहिरौर्णिक इति विधिपरिभोगः । और्णिके शरीरे लग्ने पट्पदिकादिजन्तुससत्त्यादिदोषा स्युः । जे भिक्खू वत्थस्स पर तिण्ह पडियाणिय देइ देंत वा सातिज्जइ । त्ति य कारणे त्रयाणां थिग्गलानां परतश्चतुर्थ थिग्गल ददाति तस्य प्रायश्चित्तम् । जे भिक्खू अविहीए वत्थ सिव्वति, सिव्वत वा सातिज्जइ । त्ति अविधिसीवन यथा गृहस्थानां पार्श्वद्वयमीलनेन सीवन तथा न सीव्येत् । जे भिक्खू वत्थस्स एग फालियगंठिय करेइ, करेंत वा सातिज्जति । त्ति पाटितवस्त्रस्योभयोरञ्चलयोर्मीलनेन ग्रन्थि ददाति, अधिक मा पाटयत्विति । जे भिक्खू वत्थस्स पर तिण्ह फालियगठियाण करेइ करेंत वा सातिज्जति । त्ति वस्त्रे ग्रन्थिस्तावदुत्सर्गतो न कार्य', यदि वस्त्रस्यालाभे ग्रन्थि करोति तदा त्रयाणां ग्रन्थीनामधिक ग्रन्थि न कुर्यात् । इति श्रीगच्छाचारप्रकीर्णके 'देस खित्त तु जाणित्ता' इत्येतद्गाथा १४ वृत्तौ १२ पत्रे ॥ ७ ॥

जघन्यतोऽप्यधीताचारप्रकल्पस्यैव निश्रया विहर्त्तव्यमित्यभिप्रायो लिख्यते—

आयारपकप्पधरा, चौद्दसपुव्वी य जे य त मज्झा । तन्नीसाइ विहारो, सबालवुड्ढस्स गच्छस्स ॥ १ ॥ आचारप्रकल्पधराः–निशीथाध्ययनधारिणो जघन्या गीतार्थाः, चतुर्दशपूर्विण' पुनरुत्कृष्टाः, तन्मध्यवर्त्तिनः कल्पव्यवहारदशाश्रुतस्कन्धधरादयो मध्यमाः । तेषां जघन्यमध्यमोत्कृष्टानां गीतार्थानां निश्रया सबालवृद्धस्यापि गच्छस्य विहारो भवति, न पुनरगीतार्थस्य । इति श्रीगच्छाचारप्रकीर्णके 'सीयावेइ विहार' इत्येतद्गाथा २३ वृत्तौ २६ पत्रे ॥ ८ ॥

अथ कल्पत्रेपस्वरूपं किञ्चिल्लिख्यते—

आउत्ता कप्पतिप्पेसु त्ति । आयुक्ता-उद्यताः सावधाना वा यत्र गच्छे साधवः स्युः कयोः ? कल्पश्च त्रेपश्च कल्पत्रेपौ तयोः, तत्र कल्पो—भोजनानन्तरं पात्रधावनादिरूपः, स च सामान्येन सर्वत्र कल्पसप्तकरूपः, विशेषतस्तु जघन्यमध्यमोत्कृष्टभेदेन त्रिधा, कथम्? ओदनमण्डकयवचोदकुल्माषराजमुद्गचवलकचवलिकाभृष्टचणकसामान्यचणकनिष्पावतुवरीमसूरमुद्गाद्यलेपकृदाहारे गृहीते सति एकः पात्रस्य मध्ये कल्पो द्वितीयो बहिस्तृतीयस्तु सर्वत्रेति कल्पत्रयरूपो जघन्यः । शाकपेयायवागूकङ्कोद्रवौदनराद्धमुद्गदाल्यादिसौवीरतीमनाद्यल्पलेपकृदाहारे गृहीते सति द्वौ कल्पौ पात्रस्य मध्ये, ततो द्वौ बहिः; तत एकः सर्वत्रेति कल्पपञ्चकरूपो मध्यमः । तथा दुग्धदधिचैरेयीतैलघृतगुडपानकादिबहुलेपकृदाहारे गृहीते सति कल्पत्रयं मध्ये, ततो द्वौ बहिः ततो द्वौ सर्वत्रेति कल्पसप्तकरूप उत्कृष्टः । इति वृद्धवादः । हस्ते तु मणिबन्धं यावत्कल्पो देय इति, त्रेपो—अपानादिक्षालनलक्षणः, अत्र किञ्चिन्निशीथसूत्रचतुर्थोद्देशकगतं लिख्यते—जे भिक्खु वा भिक्खूणी वा साणुप्पाए उच्चारपासवणभूमिं ण पडिलेहेइ न पडिलेहंतं वा सातिज्जति । अस्य चूर्णिः—साणुप्पाओ णाम चउब्भागावसेसचारिमा तीए उच्चारपासवणभूमीओ पडिलोहियव्वाओ ॥ १ ॥ जे भिक्खु वा भिक्खूणी वा तओ उच्चारपासवणभूमीओ ण पडिलेहेइ ण पडिलेहंतं वा सातिज्जति । जे भिक्खू वा भिक्खूणी वा खुड्डागंसि थंडिलंसि उच्चारपासवणं परिट्ठवइ परिट्ठवंतं वा सातिज्जइ ॥ अस्य चूर्णिः थंडिल्लं जं रयणिप्पमाणाओ जं आरओ तं खुड्डागं, तत्थ जो वोसिरइ तस्स मासलहुं आणादिया य दोसा, वित्थरायामेणं. थंडिल्लं जं भवे रयणिमेत्तं चउरंगुलमोगाढं, जहन्नयं तं तु विच्छिन्नं ॥ १ ॥ वित्थारो—पोहत्तं आयामो—दिग्घत्तणं रयणी—हत्थो तम्माणे

ठित रयणिमेत्त जस्स थडिलस्स चत्तारि अगुला अहे अचित्ता त चउरगुलावगाढ एयप्पमाण जहण्णय विच्छिण्णा । एत्तो हीयातराग, खुड्डाग त तु होइ नायव्व । अइरेगयर एत्तो, विच्छिण्णा त तु नायव्व ॥ २ ॥ सव्वुक्कोस विच्छिण्णा, बारसजोअण त च जत्थ चक्कवट्टिखधावारो ठिओ ॥ इति श्रीगच्छाचारप्रकीर्णके 'जत्थ य सन्निहिउक्खड' इत्येतद्गाथा ७२ वृत्तौ ॥६॥

अथ कारणे चतुर्मासकमध्येऽपि नावा नद्याद्युत्तरणमनुज्ञातम्। तथा हि—

सत्त उ वासासु भवे. सघट्टा तिन्नि हुति उडुबद्धे। ते तु न हणति खित्त, भिक्खायरियं च न हणति ॥२॥ ये ससोदकसङ्घट्टा वर्षासु, त्रय' सङ्घट्टा ऋतुबद्धे साधूनां भवन्ति, ते एतावन्त क्षेत्र नोपघ्नन्ति, न च भिक्षाचर्यामुपघ्नन्ति—जह कारणमि पुण्णे, अतो तह कारणमि असिवादी । उवहीगहणे लिंपण, नावोपगतेपि जयणाए ॥३॥ त्ति यथा कारणे पूर्णे मासकल्पे वर्षागमे वा अपरक्षेत्राभावे दृष्टमुत्तरण तथा मासस्यान्तरप्यशिवादिभिः कारणैरुपधेर्वा ग्रहणार्थं लेपानयनार्थं वोत्तरणीयम्। कारणे यत्र नावाऽप्युदक तीर्यते, तत्रापि यतनया सन्तरणीयम् । तत्र चाय विधिः—नावथललेवहेट्ठा, लेवो वा उवरिए व लेवस्स । दोण्णि य दिवड्ढमेग, अद्ध नावाइ परिहाणी ॥४॥ तत्र पूर्वार्द्धपश्चार्द्धपदाना यथासङ्ख्येन योजना—नावुत्तरणस्थाना यदि द्वे योजने वक्र स्थलेन गम्यते तर्हि तेन गन्तव्यम्, न च नौरारोढव्या । 'लेवहिट्ठ' त्ति लेपस्याधस्तादुदकसङ्घट्टेन यदि सार्द्धयोजनपरिरयेण गम्यते ततस्तत्र गम्यतां न नावमधिरोहेत्, एव योजनपरिहारेण लेपेन गच्छतु न च नावमधिरोहेत्, अर्द्धयोजनपरिहारेण लेपोपरिणा गच्छतु, न च नावमधिरोहेत् । एव नावुत्तरणस्थानात्स्थलादिषु योजनद्वयादिक परिहीयते, एवमेव लेपोपर्युत्तरणस्थानात्सार्द्धयोजनपरिहारेण स्थलेन, एकयोजनपरिहारेण सङ्घट्टेन, अर्द्धयोजनपरिहारेण वा लेपेन गम्यतां,

न च लेपोपरिणा। लेपोत्तरणस्थानादेकयोजनपरिहारेण स्थलेनार्द्धयोजनपरिहारेण वा सङ्घट्टेन गन्तव्यं न लेपेन। सङ्घट्टोत्तरस्थानादर्द्धयोजनपरिहारेण स्थलेन गम्यतां, न च सङ्घट्टेन। एतेषां परिहारपरिमाणानामभावे नावा १ लेपोपरिणा २ लेपेन ३ सङ्घट्टेन वा गम्यते न कश्चिद्दोष इत्यादि। एतत्सूत्रद्वयार्थः प्रायः सर्वोऽपि श्रीनिशीथचूर्णिद्वादशोद्देशकप्रान्तेऽप्यस्ति। इति श्रीगच्छाचारप्रकीर्णके दंसणियारं कुणई, चरित्तनासं जणेइ मिच्छत्तं। दुण्हवि वग्गाणञ्जा, विहारभेयं करेमाणी १३२ गाथावृत्तौ १२० पत्रे ॥ १० ॥ अनयैव च गाथया ये आर्यिकायाः पृथग्विहारं मन्यन्ते तेऽपि परास्ता द्रष्टव्याः।

गामे एगराइयं नगरे पंचराइयं' अयं व्यवहारस्तु प्रतिमाप्रतिपन्नानां साधूनां, जिनकल्पिकानां परिहारविशुद्धिकानां च नियमत एव नवकल्पव्यवहारः, स्थविरकल्पिकानां तु कारणेऽष्टात्रपि मासकल्पा एकत्र कर्त्तुं मासान्तरेऽपि विहर्त्तुं कल्पन्ते। यथा—

पडिमापडिवन्नाणं, एगाहं पंचाहं तहा लंदे। जिणसुद्धाणं मासो, निक्कारणओ अ थेराणं ॥४॥ 'जिण'त्ति जिणकप्पियाणं 'सुद्ध'त्ति सुद्धपारिहारियाणं सुद्धग्गहणं पच्छित्तावन्नपरिहारियनिसेहत्थं 'थेराणं' च एतेसिं मासकप्पविहारो णिव्वाघाए-कारणाभावे वाघाए पुण थेरकप्पिया ऊणं अतिरित्तं वा मासं अच्छंति॥ ऊणअतिरित्तमासा, एवं थेराण अट्ठ नायव्वा। इयरे अट्ठ विहरिउं नियमा चत्तारि अच्छंति ॥५॥ इत्यपि गच्छाचारप्रकीर्णके 'दंसणियारं कुणई' इत्येतद्गाथा १३२ वृत्तौ ॥११॥

अथ साधूनां चतुर्मासकं विना पीठफलकोपभोगः कर्त्तुं न कल्पते, इत्यभिप्रायो लिख्यते—

सच्छंदयारिं दुस्सीलं, आरंभे सुपवत्तयं। पीढयाइ पडिबद्धं, आउक्कायविहिंसगं ॥ १० ॥ व्याख्या—स्वच्छन्देन

स्वाभिप्रायेण, न तु जिनाज्ञया चरतीति स्वच्छन्दचारी तम्, तथा दुष्ट शील आचारो यस्य स दु शीलस्तम्, तथाऽऽरम्भाः पृथिव्याद्युद्रवणानि, उपलक्षणत्वात्सरमसमारम्भावपि, तत्र सरम्भः–सङ्कल्पः, समारम्भस्तु परितापकर । उक्त च–"सकप्पो सरभो,परितापकरो भवे समारभो । आरभो उद्दवओ, सुद्धनयाण तु सव्वेसिं ॥ १ ॥" तत्र स्वान्ययोः प्रवर्त्तकस्तम् । तथा पीठक–फलक, आदिशब्दात् पट्टिकादयस्तत्र प्रतिबद्ध कारण विनाऽपि ऋतुबद्धकाले तत्परिभोजीत्यर्थः त, ऋतुबद्धकाले पीठकादिग्रहणे महान् दोषः । उक्त च–जे भिक्खू उडुबाद्धिय सेज्जासथारय पर पज्जोसवणाओ उवाइणेइ उवाइणेत वा साति ज्जति, इति श्रीनिशीथसूत्रद्वितीयोद्देशके । अथैतच्चूर्णिः—उडुबद्धगहिय सेज्जासथारय पज्जोसवणारातीओ पर उवातिणावेइ तस्स मासलहु पच्छित्त। सेज्जासथारविशेषज्ञापनार्थमाह–सव्वगिया उ सेज्जा, दोहत्थद्ध च होइ सथारो। अह सथडा व सेज्जा, तत्पुरिसो वा समासो उ ॥१॥ इत्यादि । इति श्रीगच्छाचारप्रकीर्णकवृत्तौ ॥ १२ ॥

अथोत्सर्गतस्तावद्गृहस्थाना सिद्धान्ताध्ययन न कल्पते, अपवादतस्तु दीक्षाभिमुखादिस्तस्य षड्जीवनीकायाध्ययन यावत् सूत्रार्थाभ्या, पिण्डैषणाध्ययन यावदर्थतश्च पाठयितु कल्पते, इत्यभिप्रायो ।लिख्यते—

पढतु साहूणो एय, असज्झाय विवज्जिउ ॥ १३६ ॥ इत्यादि । व्याख्या—पठतु—व्यक्तवाचा सूत्रतोऽर्थतश्च कठगत कुर्वंतु साधवो–मोक्षसाधनतत्परा मुनयः उपलक्षणत्वात्साध्व्योऽपि, ननु यदुक्त साधुसाध्व्य एव पठन्ति किं श्राद्धादयो न सिद्धान्त पठन्ति ?, उच्यते—न पठन्त्येव, यदुक्त–श्रीनिशीथसूत्रस्यैकोनविंशतिकोद्देशकप्रान्ते–जे भिक्खू वा भिक्खूणी वा अण्णउत्थिय वा गारत्थिय वा वाएइ, वाएत वा सातिज्जति । अस्य चूर्णिः—गिहिअण्णातित्थिया ण वाएयव्वा, इत्थ दस-

मउद्देसाओ अत्थो जहा अण्णउत्थियं वा गारत्थियं वा ण वाएति, अण्णतित्थिया अण्णतित्थिणीओ अहवा गिहत्था गिहत्थीओ, त्ति तथाभावे कारणे वाएज्जावि 'पव्वज्जाए' गाहा—गिहि अण्णपासंडियं पव्वज्जाभिमुहं सावगं वा छज्जीवणियंति जाव सुत्तत्थो, अत्थओ जाव पिंडेसणा, एस गिहत्थाइसु अववाओ त्ति ॥ इति श्रीगच्छाचारप्रकीर्णकावचूर्णौ प्रान्ते ॥ १२ ॥

ननु प्रकीर्णकोक्तैर्वचनैः प्रतिपदमस्माकं निरासः क्रियते भवद्भिः, तेषां तु प्रामाण्यं नास्माभिः स्वीक्रियते, मैवं वावदूक ! प्रकीर्णकानां भगवत्स्वशिष्यप्रणीतत्वेन प्रत्येकबुद्धप्रणीतत्वेन वा सुतरां प्रमाणत्वादिति । तथा चोक्तम्—अत्र शिष्यः प्रश्नयति—प्रकीर्णकानामुत्पत्तिः किं तीर्थकरात्, गणधरात, गणधरशिष्यात्, प्रत्येकबुद्धात् ? वा उच्यते—तीर्थकरहस्तदीक्षितमुनेः प्रकीर्णकानामुत्पत्तिरिति । यदुक्तं नन्दीसूत्रे—

" से किं तं अंगबाहिरं ? अंगबाहिरं दुविहं पण्णत्तं तं जहा—आवस्सयं च १ आवस्सयवइरित्तं च २ । से किं तं आवस्सयं ? आवस्सयं छव्विहं पन्नत्तं तं जहा—सामाइयं १ चउवीसत्थओ २ वंदणयं ३ पडिक्कमणं ४ काउसग्गो ५ पच्चक्खाणं ६ से तं आवस्सयं । से किं तं आवस्सयवइरित्तं ? आवस्सयवइरित्तं दुविहं पण्णत्तं तं जहा—कालियं च १ उक्कालियं च २ । से किं तं उक्कालियं ? उक्कालिअं अणेगविहं पण्णत्तं तंजहा—दसवेयालियं १ कप्पियाकप्पियं २ चुल्लकप्पसुयं ३ महाकप्पसुयं ४ उववाइयं ५ रायपसेणियं ६ जीवाभिगमो ७ पन्नवणा ८ महापन्नवणा ९ पमायप्पमायं १० नंदी ११ अणुओगदाराइं १२ देविंदत्थओ १३ तंदुलवेयालियं १४ चदाविज्झयं १५ ॥ सूरपण्णत्ती १६ पोरिसिमंडलं १७ मंडलप्पवेसो १८ विज्जाचरणविणिच्छओ १९ गणिविज्जा २० झाणविभत्ती २१ मरणविभत्ती २२ आयविसोही २३ वीयरायसुयं २४ संलेहणासुयं २५

विहारकप्पो २६ चरणविही २७ आउरपच्चक्खाणं २८ महापच्चक्खाणं २९ एवमाइ से त उक्कालियं । से किं त कालियं ? कालियं अणेगविहं पण्णत्तं तं जहा—उत्तरज्झयणाइं १ दसाओ २ कप्पो ३ ववहारो ४ निसीहं ५ महानिसीहं ६ इसिभासियाइं ७ जंबुद्दीवपण्णत्ती ८ दीवसागरपण्णत्ती ९ चंदपण्णत्ती १० खुड्डियाविमाणपविभत्ती ११ महल्लियाविमाणपविभत्ती १२ अंगचूलिया १३ वग्गचूलिया १४ विवाहचूलिया १५ अरुणोववाए १६ गरुलोववाए १७ वरुणोववाए १८ धरणोववाए १९ वेसमणोववाए २० वेलंधरोववाए २१ देविंदोववाए २२ उट्ठाणसुए २३ समुट्ठाणसुए २४ नागपरियावलियाओ २५ निरयावलियाओ २६ कप्पियाओ २७ कप्पवडिंसियाओ २८ पुप्फियाओ २९ पुप्फचूलियाओ ३० वण्हीदसाओ ३१ एवमाइआइं चउरासीइं पइण्णगसहस्साइं भगवओ अरहओ उसहसामिस्स आइतित्थयरस्स तहा संखिज्जाइं पइण्णगसहस्साइं मज्झिमगाणं जिणवराणं चउद्दसपइण्णगसहस्साणि भगवओ वद्धमाणसामिस्स । अहवा जस्स जत्तिया सीसा उप्पत्तियाए वेणइयाए कम्मियाए पारिणामियाए चउव्विहाए बुद्धीए उववेया तस्स तत्तियाइं पइण्णगसहस्साइं पत्तेयबुद्धावि तत्तिया चेव से त कालिअं आवस्सयवइरित्तं से त अणंगपविट्ठं ॥

अस्य वृत्ति —' एवमाइयाइं ' इत्यादि, कियन्ति नामग्राहमाख्यातुं शक्यन्ते प्रकीर्णकानि ? तत एवमादीनि चतुरशीतिप्रकीर्णकसहस्राणि भगवतोऽर्हत श्रीऋषभस्वामिनस्तीर्थकृतः । तथा सङ्ख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजितादीनां जिनवरेन्द्राणां तीर्थकराणाम्, एतानि च यस्य यावन्ति भवन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि । तथा चतुर्दशप्रकीर्णकसहस्राणि भगवतोऽर्हतो वर्द्धमानस्वामिनः । इयमत्र भावना—इह भगवत ऋषभस्वामिनश्चतुरशीतिसहस्रसङ्ख्याः श्रमणा आसीरन्, ततः प्रकीर्णकरूपाणि चाध्ययनानि कालिकोत्कालिकभेदभिन्नानि सर्वसङ्ख्यया चतुरशीतिसहस्रसङ्ख्यान्य-

भवन् कथम् ? इति चेत्, उच्यते इह यद्भगवदर्हदुपदिष्टं श्रुतमनुश्रित्य भगवन्तः श्रमणा विरचयन्ति तत्सर्वं प्रकीर्णकमुच्यते,
अथवा श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि सर्वं प्रकीर्णकम्, भगवतश्च
ऋषभस्वामिन उत्कृष्टा श्रमणसम्पदासीत् चतुरशीतिसहस्रप्रमाणा, ततो घटन्ते प्रकीर्णकान्यपि भगवतश्चतुरशीतिसहस्रसङ्ख्यानि,
एवं मध्यमतीर्थकृतामपि सङ्ख्येयानि प्रकीर्णकसहस्राणि भावनीयानि । भगवतस्तु वर्द्धमानस्वामिनश्चतुर्दशश्रमणसहस्राणि तेन
प्रकीर्णकान्यपि भगवतश्चतुर्दशसहस्राणि । अत्र द्वे मते-एके सूरय एवं प्रज्ञापयन्ति-इदं किल चतुरशीतिसहस्रादिकमृषभा-
दीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं, इतरथा पुनः सामान्यश्रमणा प्रभूततरा
अपि तस्मिन् तस्मिन् ऋषभादिकाले आसीरन्, अपरे पुनरेवं प्रज्ञापयन्ति—ऋषभादितीर्थकृतां जीवतामिदं चतुरशीति-
सहस्रादिकं श्रमणपरिमाणं प्रवाहतः पुनरेकैकस्मिन् तीर्थे भूयांसः श्रमणा वेदितव्याः, तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विताः
सुप्रसिद्धास्तद्ग्रन्था अतीतकालिका अपि तीर्थे वर्त्तमानास्तेऽत्राधिकृता द्रष्टव्याः । एतदेव मतान्तरमुपदर्शयन्नाह—'अहवा'
इत्यादि, अथवेति प्रकारान्तरोपदर्शने यस्य ऋषभादेस्तीर्थकृतो यावन्तः शिष्या औत्पत्तिक्या १ वैनयिक्या २ कर्मजया ३
पारिणामिक्या ४ चतुर्विधया बुद्ध्योपेताः-समन्विता आसीरन्, तस्य ऋषभादेस्तावन्ति प्रकीर्णकसहस्राणि, प्रत्येकबुद्धा अपि
तावन्त एव । अत्रैके व्याचक्षते-इहैकैकस्य तीर्थकृतस्तीर्थेऽपरिमाणानि प्रकीर्णकानि भवन्ति, प्रकीर्णककारिणामपरिमाणत्वात्,
केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि, प्रकीर्णकपरिमाणेन प्रत्येकबुद्धपरिमाणप्रतिपादनात्, स्यादेतत् प्रत्येक-
बुद्धानां शिष्यभावो विरुध्यते, तदेतदसमीचीनम् । यतः प्रव्राजकाचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते, न तु तीर्थकरो-

पदिष्टशासनप्रतिपन्नत्वेनापि, ततो न कश्चिद्दोषः । तथा च तेषां ग्रन्थ —इह तित्थे अपरिमाणा पइन्नगा पइन्नगसामिअपरिमाणत्तणओ, किं तु इह सुत्ते पत्तेयबुद्धपणीय पइन्नग भाणियव्व । कम्हा जम्हा पइन्नगपरिमाणेण चेव पत्तेयबुद्धपरिमाण कीरइ इति, भणिय ' पत्तेयबुद्धावि तत्तिया चेव ' त्ति । चोयग आह—नणु पत्तेयबुद्धा सिस्सभावो य विरुज्झए । आयरिओ आह—तित्थगरपणीयसासणपडिवन्नत्तणओ तस्स सीसा हवति ॥ अन्ये पुनरेवमाहु —सामान्येन प्रकीर्णकैस्तुल्यत्वात्प्रत्येकबुद्धानामभिधान, न तु नियोगतः प्रत्येकबुद्धरचितान्येव प्रकीर्णकानीति । ' से त ' इत्यादि, तदेतत्कालिकम्, तदेतदावश्यकव्यतिरिक्तमिति ॥ १३५ ॥ इति श्रीगच्छाचारप्रकीर्णकावचूर्णा । ३४ । पत्रे ॥ १४ ॥

उत्कृष्टा चैत्यवन्दना ऐर्यापथिकीप्रतिक्रमणपूर्विकैव भवति । जघन्यमध्यमे तु चैत्यवन्दने ऐर्यापथिकीप्रतिक्रमणमन्तरेणाऽपि भवतः । इति प्रवचनसारोद्धारे चैत्यवन्दनद्वारवृत्तौ ॥ १५ ॥

अथ साधर्मिकवात्सल्यप्रभावनाऽचराणि लिख्यन्ते—

निस्सकिय १, निकखिय २, निव्वितिगिच्छा ३, अमूढदिट्ठी य ४ । उववूह ५ थिरीकरणे ६, वच्छल्ल ७, पभावणे ८, अट्ठ ॥ ३२ ॥ शङ्कित—देशसर्वात्मक, तदभावो निःशङ्कितम् १, काङ्क्षित—अन्यान्यदर्शनग्रहात्मकं, तदभावो निष्काङ्क्षितम् २, विचिकित्सा—फल प्रतिसन्देहस्तदभावो विदो—विज्ञास्ते च तत्त्वत साधव एव तज्जुगुप्सा वा तदभावो निर्विचिकित्सित, निर्विजुगुप्सं वा ३, आर्षत्वात्तत्र एव पाठः, अमूढा—ऋद्धिमत्कुतीर्थिकदर्शनेऽप्यवगीतमस्मद्दर्शनमिति मोहरहिता चासौ दृष्टिश्च—बुद्धिरूपा अमूढदृष्टिः ४, स च चतुर्विधोऽप्ययमान्तर आचार. । बाह्य त्वाह—उपबृंहणा—गुणवता स्तुतिः ५,

स्थिरीकरणं—चाङ्गीकृतधर्मानुष्ठानं प्रति सीदतां स्थिरीकरणम् ६, वात्सल्यं—साधर्मिकजनस्य भक्तपानादिनोचितप्रतिपत्तिकरणम् ७, प्रभावना च—स्वतीर्थोन्नतिहेतुचेष्टा सुप्रवर्त्तनात्मिका ८, वात्सल्यप्रभावने अष्टौ एते दर्शनाचाराः स्युरिति शेषः। इति श्रीअष्टाविंशोत्तराध्ययने एकत्रिंशत्तमगाथायाम् ॥ १६ ॥

एतेन प्रतिमापूजनादिकं सजन्तुविराधनं कर्म भगवान्न समादिशतीति यत्केचन प्रलपन्ति तेऽपि परास्ता द्रष्टव्याः, सदारम्भस्य भगवद्भिः प्रतिपादितत्वात्, इतरथा उक्तस्यापि साधर्मिकवात्सल्यस्य निषिद्धत्वापत्तेर्विराधनायास्तुल्यत्वादिति।

केचिच्च देवगुर्वादिपुरतः स्वस्तिकादिरचनां न स्वीकुर्वते तेऽज्ञानिनो वेदितव्याः। यतः साधुस्तान्यर्चनवन्दनादीनि मनसाऽपि न प्रार्थयेत्। गृहस्थैस्तु गुरुभक्त्या तानि कर्तव्यान्येव अन्यथा तत्रैवोक्तानां क्रियमाणानां च वन्दनादीनामप्यकर्त्तव्यतापत्तेः। अक्षराणि चेमानि—अच्चणं सेवणं चेव, वंदणं पूयणं तहा। इड्ढीसक्कारसम्माणं, मणसावि न पत्थए ॥ १८ ॥ इति पञ्चत्रिंशोत्तराध्ययने ॥ १७ ॥

अथ देवपूजाविधिविचारा यथा—

शुचिरिति—मलोत्सर्गदन्तधावनजिह्वालेखनगंडूषकरणसर्वदेशस्नानादिना पवित्रः सन्, इति श्राद्धविधौ । १८ ।

ततः पवित्रमृदुगन्धकाषायिकाद्यंशुकेनाङ्गरूक्षणपौतिकमोचनपवित्रवस्त्रान्तरपरिधानादियुक्त्या क्लिन्नाङ्घ्रिभ्यां भूमिमस्पृशन् पवित्रस्थानमागत्योत्तरामुखः संव्ययते नव्यमव्यङ्गमकीलितं पृथुलं श्वेतांशुकद्वयम्। “ विशुद्धिर्वपुषः कार्या, यथायोगं

जलादिभिः । धौते सिते वसीत द्वे, विशुद्धे धूपधूपिते ॥ १ ॥" लोकेऽप्युक्तम्—"न कुर्यात्सन्धितं वस्त्रं, देवकर्मणि भूमिप ! । न दग्धं न तु वै च्छिन्नं, परस्य तु न धारयेत् ॥ २ ॥ कटिस्पृष्टं तु यद्वस्त्रं, पुरीषं येन कारितम् । समूत्रं मैथुनं चाऽपि, तद्वस्त्रं परिवर्जयेत् ॥ ३ ॥ एकवस्त्रो न भुञ्जीत, न कुर्याद्देवतार्चनम् । न कञ्चुकं विना कार्या, देवार्चा स्त्रीजनेन तु ॥ ४ ॥" एवं हि पुंसां वस्त्रद्वयं स्त्रीणां च वस्त्रत्रयं विना न कल्पते देवार्चादि । इति श्राद्धविधौ ॥ १८ ॥

न च दुकूलं भोजनादिकरणेऽपि सर्वदा पवित्रमेवेति लोकोक्तिरत्र प्रमाणयितव्या, किं त्वन्यधौतिकवद्दुकूलमपि भोजन-मलमूत्राशुचिस्पर्शवर्जनादिना सत्यापनीयम् व्यापारणानुसारेण पुनः पुनर्धावनधूपनादिना पावनीयम्, धौतिकं च स्वल्पवेलमेव व्यापार्यं, प्रस्वेदश्लेष्मादि च धौतिकेन न स्फेटनीयम्, अपावित्र्यप्रसक्तेः, व्यापारितवस्त्रान्तरेभ्यश्च पृथग् मोच्यम् । इति श्राद्धविधौ ॥ १९ ॥

एवं द्रव्यभावाभ्यां शुचिर्गृहे गृहचैत्ये—" आश्रयन् दक्षिणां शाखां, पुमान् योषिदवदक्षिणाम् । यत्नपूर्वं प्रविश्यान्त-र्दक्षिणेनाङ्घ्रिणा ततः ॥ १ ॥ सुगन्धिमधुरैर्द्रव्यैः, प्राङ्मुखो वाऽप्युदङ्मुखः । वामनाड्यां प्रवृत्तायां, मौनवान् देवमर्चयेत् ॥ २ ॥ " इत्याद्युक्तेन नैषेधिकीत्रयकरणप्रदक्षिणात्रयचिन्तनादिकेन विधिना शुचिपट्टकादौ पद्मासनादिसुखासनासीनश्चन्द-नभाजनाच्चन्दनं स्थानान्तरे हस्ततले वा प्रक्षिप्य कृतभालतिलकहस्तकङ्कणः श्रीचन्दनचर्चितहस्तद्वयो जिनमर्हन्तं पूजयित्वा वक्ष्यमाणाभिरङ्गाग्रभावपूजाभिरभ्यर्च्य संवरणं प्रत्याख्यानं प्राक्कृतमकृतं वा यथाशक्ति करोति । इति श्राद्धविधौ ॥ २० ॥

अथोपोषणे पौरुष्यादिप्रत्याख्याने वा देवमर्चयतो न दन्तधावनापेक्षेत्यक्षराणि लिख्यन्ते—

उपवासपौरुष्यादिप्रत्याख्यानिनस्तु दन्तधावनादि विनाऽपि शुद्धिरेव, तपसो महाफलत्वात् । लोकेऽपि उपवासादौ दन्तकाष्ठादि विनाऽपि देवार्चादिकरणात् । निषिद्धं च लौकिकशास्त्रेऽप्युपवासादौ दन्तकाष्ठादि । यदुक्तं विष्णुभक्तिचन्द्रोदये– " प्रतिपद्दर्शषष्ठीषु, मध्यान्ते नवमीतिथौ । सङ्क्रातिदिवसे प्राप्ते, न कुर्याद्दन्तधावनम् ॥ १ ॥ उपवासे तथा श्राद्धे, न कुर्याद्दन्तधावनम् । दन्तानां काष्ठसंयोगो, हन्ति सप्तकुलानि वै ॥ २ ॥ " इति श्राद्धविधौ ॥ २१ ॥

तथाऽन्यतीर्थिका हि पञ्चामृतमध्ये मधु गणयन्ति, श्रावकैस्तु तत्स्थाने इक्षुरसो ज्ञेय इति लिख्यते–ततो घृते १ चुरस २ दुग्ध ३ दधि ४ सुगन्धिजलैः ५ पञ्चामृतस्नात्रम् । इति श्राद्धविधौ ॥ २ ॥

अथ भगवतोऽङ्गे तिलककरणानुक्रमो लिख्यते—

ततः सुयत्नवालकूञ्चिकां व्यापार्य प्रत्नान्याङ्गरूक्षणद्वयेन निर्जलतामापाद्याङ्घ्रिजानुकरांसेषु मूर्ध्नि पूजा यथाक्रममित्युक्तेर्वक्ष्यमाणतया सृष्ट्या नवाङ्गेषु श्रीचन्दनादिनाऽर्चयेत् । केऽप्याहुः–पूर्वं भाले तिलकं कृत्वा नवाङ्गपूजा कार्या । जिनप्रभसूरिकृतपूजाविधौ तु—" सरससुरहिचन्दणेण देवस्स दाहिणजाणु१ दाहिणखंध२ निडाल३ वामखंध४ वामजाणु५ लक्खणेसु पंचसु हिअएण वा सह छसु वा अंगेसु पूयं " । इति श्राद्धविधौ ॥ २३ ॥

तथा स्वगृहचैत्यढौकितचोक्षपूगीफलनैवेद्यादिविक्रयोत्थं पुष्पभोगादि स्वगृहचैत्ये न व्यापार्यम्, नापि चैत्ये स्वयमारोप्यम्, किं तु सम्यक्स्वरूपमुक्त्वाऽर्चकादेः पार्श्वात् तद्योगाभावे सर्वेषां स्फुटं स्वरूपमुक्त्वा स्वयमारोपयेत्, अन्यथा मुधा जनप्रशंसादिदोषः । गृहचैत्यनैवेद्यादि चारामिकस्य प्रागुक्तमासदेयस्थाने नार्प्यम्, आदावेव नैवेद्यार्पणेन मासदेयोक्तौ तु न दोषः,

मुल्यवृत्त्या मासदेयं पृथगेव कार्यम्, गृहचैत्यनैवेद्यचोक्षादि तु देवगृहे मोच्यम् । अन्यथा गृहचैत्यद्रव्येणैव गृहचैत्य पूजित स्यात् न तु स्वद्रव्येण, तथा चानादरावज्ञादिदोषः न चैव युक्तम्; स्वदेहगृहकुटुम्बाद्यर्थं भूयसोऽपि व्ययस्य गृहस्थेन करणात्, देवगृहे देवपूजाऽपि स्वद्रव्येणैव यथाशक्ति कार्या, न तु स्वगृहढौकितनैवेद्यादिविक्रयोत्थद्रव्येण देवसक्तपुष्पादिना वा प्रागुक्तदोषात् । तथा देवगृहागत नैवेद्याक्षतादि स्ववस्तुवत् सम्यग् रक्षणीयम्, सम्यग्मूल्यादियुक्त्या च विक्रेयम्, न तु यथा तथा मोच्यम्, देवद्रव्यविनाशादिदोषापत्तेः । सर्वप्रयत्नेन रक्षणादिचिन्ताकरणे जातु चौराग्न्याद्युपद्रवाद्देवद्रव्यादि विनश्यति तदा तु चिन्ताकर्त्ता निर्दोष एव, अवश्यभाविभावस्याप्रतिकार्यत्वात् । इति श्रीश्राद्धविधौ ॥ २४ ॥

ज्ञानद्रव्य हि देवद्रव्यवन्न कल्पते एव श्राद्धानां, साधारणमपि सङ्घदत्तमेव कल्पते व्यापारयितु न त्वन्यथा, सङ्घेनापि सप्तक्षेत्रीकार्ये एव व्यापार्यम्, न मार्गणादिभ्यो देयम्, साम्प्रतिकव्यवहारेण तु यद्गुरुन्युञ्छनादिसाधारण कृत स्यात्तस्य श्रावकश्राविकाणामर्पणे युक्तिरेव न दृश्यते, शालादिकार्ये तु तद्व्यापार्यते श्राद्धैः । एव ज्ञानसक्त कागदपत्रादिसाध्वाद्यर्पित श्राद्धेन स्वकार्ये न व्यापार्यं स्वपुस्तिकायामपि न स्थाप्य समधिकनिष्क्रय विना । साध्वादिसक्तमुखवस्त्रिकादेरपि व्यापारण न युज्यते गुरुद्रव्यत्वात्, स्थापनाचार्यजपमालादि तु प्राय श्राद्धार्पणार्थं गुरुभिर्विह्रियते तेन गुर्वर्पिततद्ग्रहणे व्यवहारो दृश्यते, इति श्राद्धविधौ ॥ २५ ॥

तस्माद्देवज्ञानादेर्देयं क्षणमपि न स्थाप्य, अन्यस्यापि देयस्य प्रदाने विवेकिभिः सर्वथा न विलम्ब्यते, किं पुनर्देवज्ञानादेः । यदा च यावता मालापरिधानादि कृत तदा तावद्देवादिद्रव्य जात, तत्र कथमुपभुज्यते, कथ वा तल्लाभादि गृह्यते, पूर्वोक्त-

देवादिद्रव्योपभोगदोषप्रसङ्गात्, तस्मात्सद्य एव तदर्पणीयम्। यस्तु सद्योऽर्पयितुमशक्तस्तेनादावेव पक्षार्द्धपक्षाद्यवधिः स्फुटं कार्यः। अवधिमध्ये च स्वयमर्प्यम्, मार्गणादिविनाऽपि अवध्युल्लङ्घने देवद्रव्योपभोगदोषः। उद्ग्राहणिकापि शीघ्रमभग्नतया तच्चिन्ताकारकैः स्वद्रव्यवद्देवादिद्रव्येऽपि कार्या। अन्यथा बहुविलम्बे दुर्भिक्षदेशभङ्गदौःस्थ्यापातस्यापि सम्भवात्, बहूपक्रमेऽपि तदसिद्धेः, तथाऽपि च महादोषः इति श्राद्धविधौ ॥ २६ ॥

तथा देवादिदेयं सम्यगेवार्प्यं, न तु घृष्टकूटनाणकादिना यथा कथञ्चिद्देवद्रव्योपभोगदोषापत्तेः, तथा देवज्ञानसाधारणसम्बन्धिगृहहट्टक्षेत्रवाटिकापाषाणेष्टकाकाष्ठवंशकवेल्लुकमृत्सुधादिकं श्रीखण्डकेसरभोगपुष्पादिकं पिङ्गानिकाचङ्गेरीधूपपात्रकलशवासकुम्पिकादिकं श्रीकरीचमरचन्द्रोदयझल्लरीभेर्यादिवाद्यसावाणसिरावकजवनिकाकम्बलकपाटपट्टपट्टिकाकुण्डिकाकुम्भओरसकज्जलजलप्रदीपादिकं चैत्यशालाप्रणालाद्यागतजलाद्यपि च स्वकार्ये किमपि न व्यापार्यम्, देवद्रव्यवत्तदुपभोगस्यापि दुष्टत्वात्। चमरसावाणादीनां मलिनीभवनत्रुटनपाटनादिसम्भवे त्वधिकदोषोऽपि। इति श्राद्धविधौ ॥ २७ ॥

तथा अन्त्यावस्थायां पित्रादीनां यन्मान्यते तत्सावधानत्वे गुरुश्राद्धादिबहुसमक्षमेन वाच्यं यद्भवन्निमित्तमियद्दिनमध्ये इयद्व्ययिष्यामि तदनुमोदना भवद्भिः कार्येति, तदपि सद्यः सर्वज्ञातं व्ययितव्यम्। स्वनाम्ना व्यये स्तैन्यादिदोषः पुण्यस्थानेऽपि स च महर्षेरपि हीनताहेतुः। यदार्षम्—“ तवतेणे वयतेणे, रूवतेणे अ जे नरे। आयारभावतेणे अ, कुव्वई देवाकिव्विसं ॥ १ ॥” धर्मव्ययश्च मुख्यवृत्त्या साधारण एव क्रियते। यथा यथा विशेषविलोक्यमानं धर्मस्थानं तत्र तदुपयोगः स्यात्। सप्तक्षेत्र्यां हि यत्सीदत् चेत्तं स्यात्तदुपष्टम्भे भूयान् लाभो दृश्यते। इति श्राद्धविधौ ॥ २८ ॥

सर्वेष्वपि नियमेषु च सहसाऽनाभोगाद्याकारचतुष्कं चिन्त्यम्, तेनानाभोगादिनाऽनियमितबहुवस्तुग्रहणेऽपि नियमभङ्गो न स्यात्, किन्त्वतिचारमात्रम्। ज्ञात्वा त्वंशमात्रग्रहणेऽपि नियमभङ्ग एव जातु दुःकर्मपारवश्येन ज्ञात्वाऽपि भङ्गेऽग्रतो नियमः पाल्य एव धर्मार्थिना। प्रतिपत्पञ्चमीचतुर्दश्यादितपोदिनेऽपि तिथ्यन्तरभ्रान्त्यादिना सचित्तजलपानताम्बूलभक्षणकियद्भोजनादौ यदा तपोदिनं ज्ञातं तदनु मुखान्तःस्थमपि न गिलति, किं तु तत्त्यक्त्वा प्रासुकवारिणा मुखशुद्धिं कृत्वा तपोरीत्यैव तिष्ठति। तद्दिने च यदि भ्रान्त्या पूर्णं भुक्तस्तदा द्वितीयदिने दण्डनिमित्तं तत्तपः कार्यम्। समाप्तौ च तत्तपो वर्द्धमानं कार्यम्। एवं चातिचार एव स्यान्न तु भङ्गः। तपोदिनज्ञानादनु सिक्थादिमात्रगिलने तु भङ्ग एव नरकादिहेतुः। दिनसंशये कल्प्याकल्प्यसंशये वा कल्प्यग्रहणेऽपि भङ्गादिदोषः। गाढमान्द्ये भूतादिदोषपारवश्ये सर्पदंशाद्यसमाधौ च यदि तत्तपः कर्तुं न शक्नोति तथाऽपि चतुर्थाकारोच्चारान्न भङ्गः। एवं सर्वनियमेष्वपि भाव्यम्। इति श्राद्धविधौ ॥ २९ ॥

तयणु हरिसुल्लसंतो, कयमुहकोसो जिणिंदपडिमाण। अवणेइ रयणिवसियं, निम्मल्लं लोमहत्थेण ॥ १ ॥ मुखकोशश्चाष्टपुटः प्रान्तनासानिश्वासनिरोधार्थं कार्यः। इति श्राद्धविधौ ॥ ३० ॥

नित्यं पर्वसु वा वर्षमध्ये कियद्वारं वा खाद्यस्वाद्यादिसर्ववस्तूनां देवस्य गुरोश्च प्रदानपूर्वं भोजनम्। इति श्राद्धविधौ ॥ ३१ ॥

तथा ऋणसम्बन्धे हि प्रायः कलहानिवृत्तेर्वैरवृद्ध्याद्यपि प्रतीतं तस्मादृणसम्बन्धस्तद्भव एव यथा कथञ्चिन्निर्वाल्यः। अन्यत्राऽपि व्यवहारे निजस्वसाञ्चटने धर्मार्थमिदमिति चिन्त्यं धर्मार्थिना। अतः साधर्मिकैरेव सह मुख्यवृत्त्या व्यवहारो न्याय्यः। तत्पार्श्वे स्थितस्य निजस्वस्य धर्मोपयोगित्वसम्भवात्। म्लेच्छादिपार्श्वाल्लभ्ये तु यत्र कोऽपि पुण्योपयोगो न स्यात्।

तस्य प्राप्त्यसम्भवे व्युत्सर्जनमेव युक्तम् । व्युत्सर्गादनु प्राप्तं तु तत्सङ्घस्यैव धर्मार्थमर्प्यम् । एवं स्वकीयं गतमपि वस्तु शस्त्रादिप्राप्त्यसम्भवे व्युत्सृज्यम् । यथा तदुत्थं पापं न लगेत् । इत्थं युक्त्याऽनन्तभवसक्तं देहगेहकुटुम्बवित्तशस्त्रादि सर्वं पापहेतु विवेकिना व्युत्सर्जनीयम् । अन्यथा तदुत्थदुरितस्यानन्तैरपि भवैरनिवृत्तेः । इति श्राद्धविधौ ॥ ३२ ॥

तथा यथा तथा शपथादिकं न विदध्यात् । विशिष्य च देवगुर्वादिविषयं तदभिहितम्—" अलिएण व सच्चेण व, चेइयसम्मं करेइ जो मूढो । सो वमइ बोहिबीअं, अणंतसंसारिओ होइ । इति श्राद्धविधौ ॥ ३३ ॥

अथ निर्माल्यविचारः—

यदि च प्राक्केनापि पूजा कृता स्यात्तदा विशिष्टान्यपूजासामग्र्यभावे तां नोत्सारयेत्, भव्यानां तद्दर्शनजन्यपुण्यानुबन्धिपुण्यानुबन्धस्यान्तरायप्रसङ्गात् । किंतु तामेव विशेषयेत् । यद्बृहद्भाष्यम्—" अह पुव्वं चिय केणइ, हविज्ज पूया कया सुविहएण । तंपि सविसेससोहं, जह जह होइ तहा तहा कुज्जा ॥ १ ॥ निम्मल्लंपि न एवं, भण्णइ निम्मल्ललक्खणाभावा । भोगविणट्ठं दव्वं, निम्मलं बिंति गीयत्था ॥ २ ॥ इत्तो चेव जिणाणं, पुणरवि आरोवणं कुणंति जहा । वत्थाभरणाईणं, जुगलिअकुंडलिअमाईणं ॥ ३ ॥ कहमन्नह एगाए, कासाइए जिणिंदपडिमाणं । अट्ठसयं लूहंता, विजयाई वण्णिया समए ॥ ४ ॥ " यज्जिनबिंबारोपितं सत् विच्छायीभूतं विगंधं जातं दृश्यमानं च निःश्रीकं न भव्यजनमनःप्रमोदहेतु तन्निर्माल्यं ब्रुवन्ति स्म बहुश्रुताः । इति सङ्घाचारवृत्तौ । प्रद्युम्नसूरिकृतविचारसारप्रकरणे त्वेवमुक्तम्—" चेइयदव्वं दुविहं, पूयानिम्मल्लभेयओ इत्थ । आयाणाई दव्वं, पूयारिहं मुणेयव्वं ॥ १ ॥ अक्खयफलबलिवत्थाइ, संतिअं जं पुणो दविणजायं । तं निम्मल्लं

जायइ, जिणकम्ममि उवओगो य ॥ २ ॥" अत्र ढौकिताक्षतादेर्निर्माल्यत्वमुक्त, परमन्यत्रागमे प्रकरणचरित्रादौ वा क्वापि न दृश्यते, वृद्धसम्प्रदायादिना क्वापि गच्छेऽपि नोपलभ्यते यत्र च ग्रामादावादानादिद्रव्यागमोपायो नास्ति तत्राक्षतबल्यादि-द्रव्येणैव प्रतिमाः पूज्यमानाः सन्ति । अक्षतादेर्निर्माल्यत्वे तु तत्र प्रतिमापूजाऽपि कथ स्यात्तस्माद्भोगविनष्टस्यैव निर्माल्यत्व-मुक्तम् । " भोगविणट्ठ दव्व, निम्मल्ल विंति गीअत्था । " इत्यागमोक्तेरपि । तत्त्व तु केवलिगम्यम् । इति श्राद्धविधौ । एते सर्वेऽपि विचाराः श्राद्धविधौ दिनकृत्याधिकारे ॥ ३४ ॥ एतेषामादौ अभिप्रायास्तु स्पष्टतमत्वादेव नोल्लेखिता इति ।

अथ केचित् सुविहितपरम्परावन्तोऽपि गृहस्थाः सदारम्भमप्यारम्भमिव गणयन्ति पर तेऽनवबुद्धा ज्ञेया, यतोऽसदार-म्भवत सदारम्भस्य सुतमां विहितत्वात् । अयमेवाभिप्रायो लिख्यते—

राजादेस्तु विधापयितुः प्रचुरतरभाण्डागारनगरमण्डलगोकुलादिप्रदान जिनभवनक्षेत्रे वपनम् । तथा जीर्णशीर्णानां चैत्यानां समारचन, नष्टभ्रष्टानां समुद्धरण चेति । ननु निरवद्यजिनधर्मसमाचरणचतुराणां जिनभवनबिम्बपूजादिकरणमनु-चितमिव प्रतिभासते, षट्जीवनिकायविराधनाहेतुत्वात्तस्य भूमिखननदलपाटकानयनगर्त्तापूरणेष्टकाचयनजलस्रावनवनस्पति त्रसकायविराधनामन्तरेण न हि तद्भवति । उच्यते—य आरम्भपरिग्रहप्रसक्तः कुटुम्बपरिपालननिमित्त धनोपार्जन करोति, तस्य धनोपार्जन विफल माभूदिति जिनभवनादौ धनव्ययः श्रेयानेव, न च धर्मार्थं धनोपार्जन युक्तम् । यतः—" धर्मार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शन वरम् " ॥ इत्युक्तमेव, न च वापीकूपतडागादि-खननवदशुभोदर्क जिनभवनादिकरणम् । अपि तु सङ्घसमागमधर्मदेशनाकरणव्रतप्रतिपत्त्यादिकरणेन शुभोदर्कमेव । षट्जीव-

निकायविराधना च यतनाकारिणामगारिणां कृपापरवशत्वेन सूक्ष्मानपि जन्तून् रक्षयतामविराधनैव । यदाहुः—" जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥ १ ॥ परमरहस्समिसीणं, समग्गगणिपिडगधरियसाराणं । परिणामिअं पमाणं, निच्छयमवलंबमाणाणं ॥ २ ॥ " यस्तु निजकुटुम्बार्थमपि नारम्भं करोति प्रतिमाप्रतिपन्नादिस्तस्य माभूज्जिनबिम्बादिविधानमपि । यदाह—" देहाइनिमित्तंपि हु, जे कायवहंमि इह पयट्टंति । जिणपूआ कायवहंमि, तेसिमपवत्तणं मोहो " ॥ इत्यलं प्रसङ्गेन । इति श्रीयोगशास्त्रतृतीयप्रकाशकवृत्तौ ॥ ३५ ॥

अथ केचिदनिषेवितसुविहितगीतार्थचरणाः, अनवगतपरम्परागतागमतत्त्वाः प्रलपन्ति अहोरात्रिक एव पौषधः कर्त्तव्यः, तत्सामग्र्यभावे न कर्त्तव्य एव, न तु केवलरात्रिकः केवलदैवसिको वेति । तदनुरूपा एवान्ये च । ' एगराइं न हावए ' इत्याद्युत्तराध्ययनोक्तवचनबलादहोरात्रिककेवलरात्रिकौ कर्त्तव्यौ, न तु केवलदेवसिक इति । ततस्तदुपकाराय श्राद्धविधि-लिखितावश्यकचूर्ण्याद्यागमोक्तः पौषधविधिपाठो लिख्यते—

पौषधं च त्रेधा–अहोरात्र १ दिवस २ रात्रिपौषध ३ भेदात् । तत्रायमहोरात्रपौषधविधिः—" इह जम्मि दिणे सावओ पोसहं लेइ तंमि दिणे घरवावारं वज्जिय पोसहसालाए गहियपोसहजुग्गोवगरणो पोसहसालं साहुसमीवे वा गच्छइ । तओ अंगपडिलेहणं करिअ उच्चारपासवणथंडिले पडिलेहिय गुरुसमीवे नवकारपुव्वं ठवणायरियं ठावित्ता ईरिअं पडिक्कमिअ खमासणे वंदिअ पोसहमुहपत्तिं पडिलेहेइ । ततो खमासणं दाउं उद्धट्ठिओ भणइ–इच्छाकारेण संदिसह भगवन् ! पोसहं संदिसावेमि । बीएण पोसहं ठावेमित्ति भणिय नमुक्कारपुव्वं पोसहमुच्चारेइ–करेमि भंते ! पोसहं आहारपोसहं सव्वओ देसओ

सालाए गंतुं ईरिअं पडिक्कमिअ देवे वंदिअ वंदणं दाउं तिहाहारस्स चउहाहारस्स वा पच्चक्खाइ, जइ सरीरचिंताए अट्ठो तो आवस्सिअं करिअ साहुव्व उवउत्तो निज्जीवे थंडिले गंतुं विहिणा उच्चारपासवणं वोसिरिअ सोअं करिअ पोसहसालाए आगंतुं ईरिअं पडिक्कमिअ खमासणपुव्वं भणइ–इच्छाकारेण संदिसह भगवन् ! गमणागमणं आलोउं इच्छं वसतिहूंता आवसीकरी अवरदक्खिणादिसि जाइअ दिसालोअं करिअ अणुजाणह जस्सुग्गहुत्ति भणिअ संडासए थंडिलं च पमज्जिय उच्चारपासवणे वोसिरिय निसीहियं करिअ पोसहसालाए पविट्ठा आवंतजंतेहिं जं खंडिअं जं विराहिअं तस्स मिच्छामि दुक्कडं। तओ सज्झायं करेइ। " एवं सन्ध्याप्रतिलेखनाप्रतिक्रमणपौरुषीपाठनशयन पुनः प्राभातिकप्रतिक्रमणदेववन्दनस्वाध्यायकरण-पौषधपारणादिकसर्वोऽपि विधिः क्रियमाणत्वेन दृश्यमान एव पाठवद्धो ज्ञेयः। यावत् " एवं दिवसपोसहंपि। नवरं–जाव-दिवसं पज्जुवासामित्ति भणइ। देवसियाइपडिक्कमणे कए पारेउं कप्पइ। रत्तिपोसहंपि एवं। नवरं मज्झन्हाओ परओ जाव दिवसस्स अंतोमुहुत्तो ताव धिप्पइ तहा दिवससेसं रत्तिं पज्जुवासामित्ति भनइ पोसहपारणए साहुसंभवे नियमा अतिहिसं-विभागवयं फासिअ पारेयव्वं। इति श्राद्धविधौ पर्वकृत्याधिकारे ॥ ३६ ॥

केचिदविदितपरमार्थाः समर्थयन्ति, श्रावकाणां दशवैकालिकादिसिद्धान्तः पठनीय एवेति। यतः समवायांगे श्रावकवर्णके उवासगदसासु णं उवासगाणं णगराइं उज्जाणाइं चेइयाइं यावत् सुअपरिग्गहा तवोवहाणाइं। अत्र 'सुअपरिग्गहा' इति शब्देन सिद्धान्ताध्ययनस्य विहितत्वादिति। अत्रोच्यते अहो द्रष्टव्यं खलु खलस्य तव कैतवकलाविलसितम् यदत्रैव 'चेइयाइं तवोवहाणाइं' इति प्रदर्शनं, परमिदमपि तव तात्पर्यानवबोधसूचकमेव, यतोऽत्र

श्रुतशब्देन श्रुतार्थस्य गृहीतत्वात् । यदुक्तमर्थस्यापि श्रुतत्व स्थानाङ्गे-" दुविहे धम्मे पण्णत्ते तजहा-सुयधम्मे चेव चरित्त धम्मे चेव । सुअधम्मे दुविहे पण्णत्ते तजहा-सुतसुअधम्मे अ अत्थसुअधम्मे य " इति । न च वाच्य सूत्रमर्थमुभयमपि गृह्यतामिति । राजप्रश्नीये-" लद्धट्ठे गहियट्ठे पुच्छियट्ठे अहिगयट्ठे विणिच्छियट्ठे " । अर्थश्रवणत. १ अर्थावधारणातः २ सशये सति२ सम्यगुत्तरश्रवणतो विमलावबोधात् ४ ऐन्दपर्योपलम्भात् ५ इत्यादिनाऽर्थग्रहणस्यैवोक्तत्वात्, न सूत्रस्य । निशीथसूत्राद्युक्तः स्पष्टनिषेधश्च प्रागुक्त एव ॥ ३७ ॥

ग्लानस्य प्रतिचरणे महापुण्यमित्यभिप्रायो लिख्यते—

ग्लानस्य प्रतिचरणे महत्फलम् । यदागमः-गोयमा ! जो गिलाण पडिअरइ से म दसणेण पडियरइ, जे म दसणेण पडिवज्जइ सो गिलाण पडियरइ आणाकरणसार खु अरहताण दसण । इत्यादि भगवत्याम् । इति श्रीश्राद्धविधौ ॥ ३८ ॥

अथ पुनरपि पौषधे भोजनाक्षराणि लिख्यन्ते—

तत्थ जइ देसओ आहारपोसहिओ तो भत्तपाणस्स गुरुसक्खिअ पारावित्ता, आवस्सिअ करित्ता, ईरियासमिओ गतु ईरियावहिअ पडिक्कमइ, आगमणआलोअणा करेइ, चेइए वदइ, तओ सडासय पमज्जित्ता पाउछणे निसीयइ, भायण पमज्जइ, जहुचिए भोअणे परिवेसिए पचमगलमुच्चारेइ, पच्चक्खाण सरित्ता तओ, वयण पमज्जित्ता असुरसुर अचवचव अवहुमविलविअ अपरिसाडिं मणवयणकायगुत्तो भुजइ साहुव्व उवउत्तो, जायामायाए वा भुच्चा फासुअजलेण मुहसुद्धिं काउ नउकारसरणेण उट्ठाइ देवे वदइ, वदणय दाउ सवरण काऊण पुणोवि पोसहसालाए गतूण सज्झायतो चिट्ठइ । इति प्रतिक्रमणा-

वचूर्णौ ॥ ३९ ॥

अथ ये केचन पौषधे भोजनं न स्वीकुर्वते, तेषामेव पूर्वजानां वाक्यं यथा—

" जो पुण आहारपोसहो देसओ पुत्ते पच्चक्खाणे तीरीए खमासमणदुगेण मुहपत्तिं पडिलेहिय खमासमणेण वंदिअ भणइ इच्छाकारेण संदिसह भत्तपाणं पारावेह पोरिसिं पुरिमड्ढं चउव्विहारं एकासणं निव्वियं आयंबिलं वा जा काविं वेला तीए पडिलेहियनमुक्कारपुव्वगं अरत्तदुट्ठो भुंजइ। इति श्रीजिनवल्लभसूरिकृतपौषधविधिप्रकरणे ॥ ४० ॥

उपधानपौषधेऽयं विधिः, अयमिति चेद्बालचेष्टितं त्यज्यतां पौषधत्वस्य तत्राऽपि तुल्यत्वात्।

अथोत्सर्गतस्तावत्साधूनां यत्र चतुर्मासकस्थितास्तत्र मासद्वयं यावदुपकरणं ग्रहीतुं न कल्पतेऽपि तथा हि—अथ चतुर्मासकानन्तरं कारणमपेक्ष्य न निर्गच्छन्ति ततो मासद्वयमध्ये गृह्णीयात्, तदेव दर्शयति—

गच्छे सबालवुड्ढे, असई परिहर दिवड्ढमासं तु। पणतीसा पणवीसा, पन्नरस दसेव इक्कं च ॥ १ ॥ सबालवृद्धे गच्छे वस्त्राभावे शीतं सोढुमसमर्थे सार्द्धमासं परिहर परिवर्जय, परिहृत्य च तत ऊर्ध्वं गृह्णीयात्। अथ सार्द्धमासमपि परिहर्त्तुमशक्तस्ततः पञ्चत्रिंशतं दिनानि परिहर अथैवमपि गच्छो न संस्तरति ततः पञ्चविंशतिर्दिनानि, तथाऽप्यशक्तौ पञ्चदशादिनानि, तथाऽप्यशक्तौ दशादिनानि, तथाऽप्यसामर्थ्ये एकमपि दिनं परिहर, इति सङ्ग्रहगाथासमासार्थः। इति श्रीबृहत्कल्पवृत्तौ तृतीयखंडे तृतीयोद्देशके ॥ ४१ ॥

चउद्दस दस य अभिन्ने, नियमा सम्मं तु सेसए भयणा। यस्य चतुर्दशपूर्वाणि दशपूर्वाणि अभिन्नानि परिपूर्णानि सन्ति,

तस्मिन्नियमात्सम्यक्त्वम् । शेषे च किञ्चिदूनदशपूर्वधरादौ सम्यक्त्व वा स्यान्मिथ्यात्व चेत्यर्थः। इति बृहत्कल्पे १५ पत्रे ॥४२॥

अथ साधूनां चित्रिते उपाश्रये वस्तु न कल्पत इत्यक्षराणि लिख्यन्ते—

नो कप्पइ निग्गथाण वा निग्गथीण वा सचित्तकम्मए उवस्सए वत्थु । कप्पइ निग्गथाण वा निग्गथीण वा अचित्त-कम्मए उवस्सए वत्थु इति । वृत्तिर्यथा—नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीना वा सचित्रकर्मणि उपाश्रये वस्तुम्। कल्पते पुनर चित्रकर्मणि उपाश्रये निर्ग्रन्थाना निर्ग्रन्थीनां वा वस्तुमिति सूत्रार्थः । अथ भाष्यविस्तर'—निद्दोस सदोसे वा, सचित्तकम्मे उ आणमादीणि । सइकरण विकहा वा, बीअ असई य वसहीए ॥ १ ॥ निर्दोषे वा सदोषे वा सचित्रकर्मणि प्रतिश्रये तिष्ठता-माज्ञादयो दोषा ये च तादृशे वा चित्रकर्मखचिते वेश्मनि पूर्वभोगान् बुभुजिरे तेषा स्मृतिकरणम्, उपलक्षणत्वादितरेषां कौतुकमुपजायते, विकथा वा तत्र वक्ष्यमाणलक्षणा भवेत् । द्वितीयपद चात्र वसतावसत्या तत्रापि वसेत् । अथैनामेव निर्युक्तिगाथां व्याख्याति—तरुगिरिनदीसमुद्दा, भवणा वल्ली लया वियाणा य । निद्दोसचित्तकम्मे, पुन्नकलससोत्थियादी य ॥ १ ॥ तरवः सहकारादयो, गिरयो हिमवदादयो, नद्यादयो गङ्गासिन्धुप्रभृतयः, समुद्रा लवणोदादिकाः, भवनानि गृहाणि, वल्लयो नागवल्ल्यादय , लता माधवीचम्पकलतादय , तासां वितान निकुरुव, तथा पूर्णकलशः स्वस्तिकादयश्च ये माङ्गलिकाः पदार्था., एतेषां रूपाणि यत्रालिखितानि तच्चित्रकर्म निर्दोष ज्ञातव्यम् । इति बृहत्कल्पप्रथमोद्देशे १६५ पत्रे ॥ ४३ ॥

अथ गच्छपरिमाण लिख्यते—

तिगमाईया गच्छा, सहस्सबत्तीसई उसभसेणे । थाडिल्लापि य पढम, वयांति सेसेनि आगाढे ॥ १ ॥ त्रिकादयस्त्रिचतुःप्रभृ-

समुदायरूपत्वात्, किमुक्तं भवति ? एकस्मिन् गच्छे जघन्यतस्त्रयो जना भवन्ति, गच्छस्य समुदायरूपत्वात्,
तिपुरुषपरिमाणा गच्छा भवेयुः। किमुक्तं भवति ? एकस्मिन् गच्छे जघन्यतस्त्रयो जना भवन्ति, प्रतिपत्तव्यास्ताव-
तस्य त्रयाणामधस्तादभावादिति। तत ऊर्द्धं ये चतुःपञ्चप्रभृतिपुरुषसङ्ख्याका गच्छास्ते मध्यमपरिमाणतः द्वात्रिंशत्सहस्राण्येक-
द्यावदुत्कृष्टपरिमाणं न प्राप्नोति। किं पुनस्तत् ? इतिचेदत आह 'सहस्सबत्तीसई उसभसेणे त्ति। इति श्रीवृहत्कल्पप्रथम-
स्मिन् गच्छे उत्कृष्टं साधूनां परिमाणं यथा श्रीऋषभस्वामिप्रथमगणधरस्य भगवत ऋषभसेनस्य।
खंडे १६५ पत्रे ॥ ४४ ॥

अथ साधूनां तरोरधो विडुत्सर्गः कर्तुं न कल्पते, इत्यक्षराणि लिख्यन्ते—

सचित्तरुक्खमूले, उच्चारादि आचरेउ जो भिक्खू। सो आणा अणवत्थं, विराहणं आढिमादीहिं ॥ १ ॥ थंडिल्लअसति
अद्धाण, रोधते संभमे भयासण्णे। दुव्वलगहणगिलाणे, वोसिरणं होइ जयणाए ॥२॥ इति निशीथभाष्ये पञ्चमोद्देशके ॥४५॥

पञ्चपर्व्या आराध्यत्वे हेतुर्लिख्यते—

भयवं! बीयपमुहासु पंचसु तिहीसु विहियं धम्माणुट्ठाणं किं फलं होइ ? गोयमा! बहुफलं होइ, जह्मा एयासु पाएणं
जीवो परभवाउयं समज्जिणइ। इति श्रीमहानिशीथे ॥ ४६ ॥

अथ दिवसेऽपि प्रथमचरमचतुर्घटिकयोर्बहिः पात्रादि न स्थाप्यं, बहिर्न गन्तव्यं यतस्तदा सूक्ष्मः स्नेहकायः प्रपतति
इति लिख्यते—

अत्थि णं भंते! सदा समितं सुहुमे सिणेहकाए पवडति? हंता अत्थि। से भंते! किं उड्ढं पवडति ? अहे पवडइ तिरिए

पवडति ? गोयमा ! उड्ढेवि पवडति अहेवि पवडति तिरिएवि पवडति। वृत्तिर्यथा—'अत्थि' इत्यादि, सदा–सर्वदा 'समिय' ति सपरिमाण न बादराप्कायवदपरिमितमपि, अथवा 'सदा' त्ति सर्वर्तुषु 'समित' ति रात्रौ दिवसस्य च पूर्वापरयोः प्रहरयो तत्रापि कालस्य स्निग्धेतरभावमपेक्ष्य बहुत्वमल्पत्व चावसेयमिति । यदाह—" पढमचरिमाउ सिसिरे, गिम्हे अद्ध तु तासि वज्जित्ता । पाय ठवे सिणेहाइ, रक्खणट्ठा पवेसे वा ॥ १ ॥ " लेपितपात्र बहिर्न स्थापयेत्, स्नेहादिरक्षणार्थायेति । सूक्ष्मस्नेहकाय इति–अप्कायविशेष इत्यर्थः । इति श्रीभगवतीप्रथमशतकषष्ठोद्देशके ॥ ४७ ॥

निविधाहारे जलमेव कल्पते, तत्रापि फुकानीर सीकरीकर्पूरएलाकत्थकखदिरचूर्णकसेल्लकपाटलादिजल च नीतरित गालित वा नान्यथा । शास्त्रेषु मधुगुडशर्कराखडादिस्वाद्यतया द्राक्षशर्करादिजल तक्रादि च पानकतया उक्त, पर द्विविधाहारादौ न कल्पते, उक्त च नागपुरीयगच्छप्रत्याख्यानभाष्ये—दक्खापाणाईय, पाण तह साइम गुडाईय । पढिय सुअमि तहवि हु, तित्तीजणग तु नायरिय । इति श्राद्धविधौ ॥ ४८ ॥

वासासु सगदिणोवरि, पन्नरसदिणोवरिं च हेमते । जायइ य सचित्त से, गिम्हे मासोवरिं लोण ॥ इति व्यवहारनिर्युक्तौ ॥ ४९ ॥

ननु इत्थ तावत्सर्वत्र भव्यस्यैव सम्यक्त्वलाभ उक्त, अभव्यस्य तु का वार्त्तेत्याह—तित्थकराइयपूअ, दट्ठुणन्नेण वावि कज्जेण । सुअसामाइयलभो, होइ अभव्वस्स गठिमि ॥ " इति विशेषावश्यके ॥ ५० ॥

अभिप्रायस्तूभयत्रापि सुगम एव । अथ केचित्साध्वीना पृथग्विहारमुचित मन्यन्ते, अपरे तु गृहस्थैः सह साध्वीनां

विहारमुचितं मन्यन्ते ते उभयेऽपि सिद्धान्तबाह्या ज्ञेयाः । यथा—

जत्थ य गोअम ! साहू, अज्जाहिं समं पहंमि अट्ठ्णा । अववाएणवि गच्छेज्जा, तत्थ गच्छंमि का मेरा ॥ १ ॥ इत्यत्र यद्यष्टोनैः साधुभिरपि सह साध्वीनां गमनं नानुज्ञातं तर्हि कथं गृहस्थैः सह एकाकिनीनां वा विहर्त्तुं कल्पते ? इति बोध्यम् । इति श्रीमहानिशीथपञ्चमाध्ययने ॥ ५१ ॥

अथायं लोकः कीदृशाकारः ? कथं च व्यवस्थित इति विचारो लिख्यते—

वेत्रासनसमोऽधस्तान्मध्यतो झल्लरीनिभः । अग्रे मुरजसङ्काशो, लोकः स्यादेवमाकृतिः ॥ १०५ ॥ वृत्तिर्यथा—अधस्ता-दधोभागे वेत्रासनमधस्ताद्विस्तीर्णमुपर्युपरि सङ्कोचवत्तत्समस्तदाकारः । मध्यतो-मध्ये झल्लरीवाद्यविशेषस्तत्सदृशः । अग्रे मध्यलोकादुपरि मुरज ऊर्ध्वमधश्च सङ्कुचितो मध्यभागे विस्तृतो वाद्यविशेषस्तत्सदृशः । एवमधोमध्योर्ध्वेषु आकारत्रययोगी लोकः । यदाहुः—तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम्, स्थालमिव तिर्यग्लोकम्, ऊर्ध्वमथमल्लकसमुद्गम् । इह चाधस्तिर्यगूर्ध्वलोका रुचकापेक्षया । रुचकश्च मेरुमध्ये गोस्तनाकारचतुराकाशप्रदेशप्रमाणोऽधः, तादृश एवोर्द्ध्व, एवमष्टप्रदेशः । यदाहुः—" अट्ठ पएसो रुअगो, तिरियलोगस्स मज्झयारंमि । एस पहवो दिसाणं, एसेव भवे अणुदिसाणं ॥ १ ॥ " तत्र रुचकादध उपरि च नवयोजनशतानि तिर्यग्लोक इत्युत्सेधेऽष्टादशयोजनशतप्रमाणः । तिर्यग्लोकादधो नवयोजनशतोनसप्त-रज्जुप्रमाणोऽधोलोकः । तत्र सप्तपृथिव्य उक्तरूपाः ॥ ४ ॥ इति योगशास्त्रचतुर्थप्रकाशे १०५ श्लोकवृत्तौ १८१ पत्रे ॥

अथ का भूमिः ? कियदधः सचित्ता ? इति विचारो लिख्यते—

कठिना पृथ्वी शीतातपादिशस्त्रयोगे उपर्यङ्गुलमेकं प्रासुका, अल्पकठिना त्वङ्गुलचतुष्कं प्रासुका, अकठिनाऽङ्गुलाष्टकम्, वासोर्वी चाऽधिकाऽपि प्रासुका, चतुष्पदादिस्थाने चाग्रस्थाने च मुडहस्त प्रासुका, मलमूत्रातपोष्णाश्वादिना च यावती भाविता वह्निस्थाने च वह्निना यावती भाविता सा प्रासुका, महानगरस्थाने च हस्तमेकं प्रासुका, महानगरादिस्थानेऽपि द्वादशवर्षशून्ये मलाद्यभावात्सर्वा सचित्ता चीरवृक्षाधश्च यत्र जन्तूनामसञ्चार सदा छाया तत्र मिश्रा, चीरवृक्षाणां मधुरत्वेनाप्यायकत्वात्, चीरवृष्टिवातशीतादिभिः शस्त्रत्वाच। अन्यत्र तु जनासञ्चारे छायाबहुले स्निग्धसजले उपरितन रूक्ष रजो मुक्त्वा सर्वा सचित्ता, क्वापि क्वापि मिश्राऽपि, क्वापि रजोऽपि सचित्तम्, यद्यतयश्चैत्ये शालायां (च) प्रवेशे पादौ रजोहरणेन प्रमार्जयन्ति तत्कापि प्रदेशे सचित्त मिश्र वा रजो भविष्यतीति हेतो'। तथा सचित्ता वा भूमिः सचित्ताम्बुयोगे जाते कियत्काल मिश्रा स्यात्ततो या सचित्ता सा सचित्ता, या चाचित्ता साऽचित्तैवेति। दृषत्स्वप्येवं यथार्हं वाच्यम्। इति श्रीमेरुतुङ्गसूरिकृतपिंडविशुद्धिवृत्तौ।

तथा, जस्स सचित्तरुक्खस्स हत्थिपयपमाणो पिहुलो खघो तस्स सव्वओ जाव रयणिप्पमाणा ताव सचित्ता भूमी एय आणासिद्ध॥ इति श्रीनिशीथचूर्णौ॥ ५२॥

अथ षष्ठारकादौ विषाग्निमेघैर्निर्बीजायां पृथिव्यां कृतायां पुनरप्याम्रादीनां यथोत्पत्तिर्भवति तथा लिख्यते—

खारम्माई पु[illegible]खलसवट्टता, जहा बहू मेहा। इय धम्मबीयहरणा, करणा य गुरूणमुवएसा॥ १॥ व्याख्या—यथा चाराम्लादयः पुष्करसवर्त्तादयश्च मेघा बीजहरणा बीजकरणाश्च स्यु। तत्र चारमेघाम्लमेघाग्निमेघविषमेघाशनिमेघा युगा-

न्तसमयप्रवर्षिणो यथोत्तरं सकलबीजप्लोपाय प्रवर्त्तन्ते । पुष्करावर्त्तमेघक्षीरमेघघृतमेघामृतमेघरसमेघाः पुनः कल्पस्यादौ
सकलबीजाद्युत्पत्तये यथोत्तरं सम्भवन्ति । तदुक्तम्—" तदा च विरसा मेघाः, क्षारमेघाम्लमेघकाः । विषाग्न्यशनिमेघाश्च,
वर्षिष्यन्त्यात्मसन्निभम् ॥ १ ॥ येन भावी कासः श्वासः, शूलं कुष्टं जलोदरम् । ज्वरः शिरोऽर्त्तिरन्येऽपि, मनुष्याणां महा-
मयाः ॥ २ ॥ दुःखं स्थास्यन्ति तिर्यञ्चो, जलस्थलखचारिणः । भावी क्षेत्रवनारामलतातरुतृणाक्षयः ॥ ३ ॥ " अपि च—
" तत्राद्यः पुष्करो मेघो, महीं निर्वापयिष्यति । द्वितीयः क्षीरमेघाख्यो, धान्यमुत्पादयिष्यति ॥ ४ ॥ तृतीयो घृतमेघाख्यः,
स्नेहं सञ्जनयिष्यति । तुर्यस्त्वमृतमेघाख्यः, औषध्यादि करिष्यति ॥ ५ ॥ पृथ्व्यादीनां रसकर्त्ता, रसमेघश्च पञ्चमः । पञ्चत्रिं-
शद्दिना वृष्टिर्भाविनी सौम्य ! दुर्दिना ॥ ६ ॥ " इत्यादि श्रीउपदेशरत्नाकरे नवमतरङ्गे ॥ ५२ ॥

अथ प्रतिक्रमणे कस्मिन् समये कर्त्तव्ये तल्लिख्यते—
एषां कालस्तूत्सर्गेणैवमुक्तः । अद्धनिबुड्डे सूरे, सुत्तं कड्ढंति गीअत्था । इय वयणपमाणेणं, देवसियावस्सए कालो
॥ १ ॥ रात्रिकस्य चैवम्—आवस्सयस्स समए, निद्दामुद्दं चयंति आयरिया । तह तं कुणंति जह दस, पडिलेहाणंतरं सूरो
॥ १ ॥ अपवादतस्तु दैवसिकं दिवसतृतीयप्रहरादर्द्धरात्रं यावत् । योगशास्त्रवृत्तौ तु मध्याह्नादारभ्यार्द्धरात्रं यावदित्युक्तम् ।
रात्रिकमर्द्धरात्रादारभ्य मध्याह्नं यावत् । उक्तमपि—"उग्घाडपोरिसिं जा राइयमावस्सयस्स चुन्नीए ववहाराभिप्पाया भणंति
पुण जाव पुरिमड्ढं " । इति श्राद्धविधौ द्वितीयप्रकाशे ७६पत्रे ॥ ५४ ॥

अथ केचित् पाक्षिकोपवासादिकं पूर्णिमायां कुर्वते तच्च सिद्धान्तविरुद्धं यथा—

पाक्षिकचातुर्मासिकसांवत्सरिकाणि पञ्चदश्यां च स्युः । आह—पाक्षिकं चतुर्दश्यां पञ्चदश्यां वा चतुर्दश्यामिति ब्रूमः । यदि पुनः पञ्चदश्यां स्यात्तदा चतुर्दश्यां पाक्षिके चोपवासस्योक्तत्वात्पाक्षिकमपि षष्ठेन स्यात् । तथा च—"अट्ठमछट्ठचउत्थ, संवत्सरचाउमासपक्खेसु ।" इत्याद्यागमविरोधः । यत्र चतुर्दशी गृहीता न तत्र पाक्षिकं यत्र पाक्षिकं न तत्र चतुर्दशी । तथा हि—"अट्ठमी चउद्दसीसु उववासकरणं" इति पाक्षिकचूर्णौ । 'सो अ अट्ठमीचउद्दसीसु उववासं करेइ' इत्यावश्यकचूर्णौ । 'चउत्थछट्ठट्ठमकरणे अट्ठमीपक्खचउमासवरिसे य' त्ति व्यवहारभाष्यपीठे । अट्ठमी चउद्दसी नाणपंचमी चउमास' इत्यादि महानिशीथे । व्यवहारषष्ठोद्देशके च—"पक्खस्स अट्ठमी खलु, मासस्स य पक्खियं मुणेयव्वं, इत्यादि व्याख्यायां वृत्तौ चूर्णौ पाक्षिकशब्देन चतुर्दश्येव व्याख्याता । तदेवं निश्चितमं पाक्षिकं चतुर्दश्यामेव । चातुर्मासिकसांवत्सरिके तु पूर्वं पूर्णिमापञ्चम्योः क्रियमाणे अपि श्रीकालिकाचार्याचरणतः चतुर्दशीचतुर्थ्योः क्रियेते । प्रामाणिकं चैतत्, सर्वसम्मतत्वात् । उक्तं च कल्पभाष्यादौ—"असढेण समाइन्नं, जं कत्थइ केणई असावज्जं । न निवारिअमन्नेहिं, बहुमणुमयमेयमायरियं ॥ १ ॥" तीर्थोद्गारादावपि—"सालाहणेण रन्ना, संघाएसेण कारिओ भयवं । पज्जोसवणचउत्थी, चाउम्मासं च चोद्दसिए ॥ १ ॥ चउमासपडिक्कमणं, पक्खिअदिवसंमि चउविहो संघो । नवसयतेणउएहिं, आयरणं तं पमाणंति ॥ २ ॥" अत्र चाधिकविशेषार्थिना पूज्यश्रीकुलमण्डनसूरिप्रणीतविचारामृतसङ्ग्रहोऽवगाहनीयः । इति श्राद्धविधौ पर्वकृत्याधिकारे ७६ पत्रे ॥ ५५ ॥

एतेनैव च ये पञ्चम्यां पर्युषणां कुर्वन्ति तेऽपि परास्ता द्रष्टव्याः । "नक्षत्रेषु समग्रेषु, भ्रष्टतेजस्सु भास्वतः । यावदर्द्धो

दयस्तावत्, प्रातःसन्ध्या प्रजायते ॥ १ ॥ अर्केऽर्द्धास्तमिते यावन्नक्षत्राणि नभस्तले । द्वित्राणि नैव वीक्ष्यन्ते, तावत्सायं विदुर्बुधाः ॥ २ ॥ " इति श्राद्धविधौ ॥ ५६ ॥

नागवल्लीदलेषु च निरन्तरं जलक्लेदादिना नीलीकुन्थ्वण्डकादिविराधना भूयसी ततस्तानि पापभीरवो रात्रौ न व्यापारयन्ति येऽपि व्यापारयन्ति तेऽपि सम्यग्दिवा संशोध्यैव । ब्रह्मचारिणा तु विशिष्य तानि त्याज्यानि, कामाङ्गत्वात्तेषाम् । प्रत्येकसचित्तेऽप्येकस्मिन् फलादावसङ्ख्यजीवविराधनासम्भवः । यदागमः—" जं भणियं पज्जत्तगनिस्साए वक्कमंतऽपज्जत्ता जत्थेगो पज्जत्तो तत्थ असंखा अपज्जत्ता " । बादरैकेन्द्रियेष्वेवमुक्तम् सूक्ष्मे तु यत्रैकोऽपर्याप्तस्तत्र तन्निश्रया नियमादसङ्ख्येयाः पर्याप्ताः स्युरित्याचाराङ्गवृत्त्यादावुक्तम् । इति श्राद्धविधौ ॥ ५७ ॥ अभिप्रायस्तु स्पष्ट एव ।

अधिकोपधिधारी साधुर्न भवतीति ये वदन्ति तदवबोधाय लिख्यते—

तत्र स्थविरकल्पे जघन्यतोऽपि चतुर्दशोपकरणान्येव । उत्कृष्टपदिकोपकरणचिन्तायां तु शीताद्यसहिष्णून् तपस्वी बालग्लानान् प्रतीत्य यावत्संयमहेतुर्द्विगुणोऽप्याधिको वा उपधिरवगन्तव्यः । इति श्री निशीथचूर्णाद्यागमे ॥ ५८ ॥

तथा—" मुल्लजुअं पुण तिविहं, जहन्नयं मज्झिमं च उक्कोसं । जहन्नं अट्ठारसगं, सयसाहस्सं च उक्कोसं ॥ १ ॥ " एतद्गाथोक्तं त्रिविधप्रमाणमपि वस्त्रं साधूनां ग्रहीतुं न कल्पते, किं त्वष्टादशरूपकमानान्न्यूनमूल्यं कल्पते साधूनाम् । इति स्थानाङ्गवृत्तौ ॥ ५९ ॥

रूपकमानमनेकार्थावचूर्णौ त्वेवमुक्तमस्ति-चतुर्भिर्वराटकैर्गण्डकः, तेषां पञ्चविंशत्या पणः, तच्चतुर्थोऽशः काकिणिः,

तासामशीत्यारूपक विंशत्या वराटकैः काकिणिरित्यर्थः । तथा विरलिका नाम द्विसरसूत्रपटी सा साधूनां न कल्पते, दुःप्रेक्ष्यत्वात् । इति कल्पवृत्तौ द्वितीयखण्डे १२३ पत्रे ॥ ६० ॥

जो भणइ नत्थि धम्मो, न य सामइयं न चेव य वयाइं । सो समणसंघबज्झो, कायव्वो समणसंघेण ॥ २ ॥ इति श्रीतीर्थोद्गालिकप्रकीर्णके ॥ ६१ ॥ अभिप्रायस्तु स्पष्ट एव ।

छद्मस्थेनापि सह केवली विहरतीत्यक्षराणि लिख्यन्ते—

निट्ठविअअट्ठमयट्ठाणे, सोसियकसाए जिइंदिए । विहरिज्जा तेण सद्धिं तु, छउमत्थेणावि केवली ॥ ४२ ॥ इति गच्छाचारप्रकीर्णके ॥ ६२ ॥

द्वाविंशतेः परीषहाणां मध्ये उष्णाः के ? शीतलाश्च के ? इत्यभिप्रायो लिख्यते—

" इत्थीसक्कारपरीसहा य, दो भावसीयला एए । सेसा वीसं उण्हा, परीसहा होंति नायव्वा ॥ १ ॥ " इत्याचाराङ्गनिर्युक्तौ ॥ ६३ ॥

समन्ताद्विस्तृतपुष्पप्रकरे समवसरणे साधूनां स्थितौ कथं न सचित्ते सङ्घट्टदोष इति शङ्कानिरासो लिख्यते—

पुष्पवृष्टिरत्राहुः परे—कथमम्लानपुष्पप्रकरोपरि सर्वथा सचित्तसङ्घट्टनादिविरतानां यतीनामवस्थानादि युज्यते । अत्र केचित् प्रेरयन्ति—साध्ववस्थानस्थाने देवा न किरन्तीति । अन्ये त्वाहुः—नैतदेवम्, प्रयोजनेऽन्यत्रापि साधूनां गमनादेरपि सम्भवात् । केवलं विकुर्वितत्वात्तानि सचित्तानि न सम्भवन्ति । अन्ये त्वाहुः—न विकुर्वितान्येव तानि, जलजस्थलजानामपि

पुष्पाणां तत्र प्रकीर्णत्वात् । यदागमः—" विंटट्ठाई सुरहिं, जलथलयं दिव्वकुसुमनीहारी । पयरंति समंतेणं, दसद्धवन्नं कुसुमवासं ॥ " परमत्र बहुश्रुता एवं समादधते—यथा निरुपमाऽचिन्त्यार्हत्प्रभावादेव योजनमात्रे क्षेत्रेऽपरिमितामर्त्यादिसत्त्वसम्मवेऽपि न परस्परमाबाधा काचित् तथा पुष्पाणामपि तेषामुपरि सञ्चरिष्णौ स्थाष्णौ च मुन्यादिलोके । तत्त्वं तु केवलिनो विदन्ति । इति श्रीप्रवचनसारोद्धारैकोनचत्वारिंशद्द्वारे ॥ ६४ ॥

त्रियाः संभोगे चतुर्विधाहारो न भज्यते, बालादीनामोष्ठादिचर्वणे तु भज्यते, द्विविधाहारे तु तदपि कल्पते । प्रत्याख्यानं हि कावलिकाहारविषयमेव, न तु लोमाद्याहारविषयमपि । अन्यथोपवासाचाम्लादेर्वपुरभ्यङ्गगडुकरम्बबन्धनादिनाऽपि भङ्गप्रसङ्गात् । न चैवं व्यवहारो, लोमाहारस्य निरन्तरसम्भवेन प्रत्याख्यानाभावस्यैव प्रसङ्गात् । इति श्राद्धविधौ ॥ ६५ ॥

अशुद्धैः शुद्धैर्वाऽशनपानभेषजादिभिर्ग्लानस्य प्रतिचरणं कर्त्तव्यम् । विशिष्य चाचार्योपाध्यायादीनामित्यभिप्रायो लिख्यते—सम्प्रति ' गुरुपमुहाणं कीरइ असुद्धसुद्धेहिं जत्तियं कालं ' इति त्रिंशदुत्तरशततमं द्वारमाह—" जावज्जीवं गुरुणो, असुद्धसुद्धेहिं वावि कायव्वं । वसहे बारसवासा, अट्ठारस भिक्खुणो मासा ॥ ६६ ॥ " यावज्जीवमाजन्माऽपीत्यर्थः । गुरोराचार्यस्य शुद्धैराधाकर्मादिदोषादूषितैरशुद्धैर्वाऽपि आधाकर्मादिदोषयुक्तैर्वाऽपि अशनपानभेषजादिभिः कर्त्तव्यं प्रतिजागरणमिति शेषः । अयमर्थः—शुद्धैरशुद्धैश्च तैर्यावज्जीवं ते प्रतिजागरणीयाः साधुश्रावकलोकेनेति । सर्वस्यापि गच्छस्य तदधीनत्वाद्यथाशक्ति निरन्तरसूत्रार्थनिर्णयप्रवृत्तेश्च, तथा वृषभे—उपाध्यायादिके द्वादशवर्षाणि यावत्प्रतिजागरणा शुद्धैरशुद्धैश्च वस्तुभिर्विधेया । ततः परं शक्तौ भक्तविवेकः । एतावता कालेनान्यस्यापि गच्छभारोद्वहनसमर्थस्य वृषभस्योत्थानात् । तथाऽष्टादशमासान्

यावत्सामान्यभिक्षो'-सामान्यसाधो शुद्धैरशुद्धैश्च प्रतिजागरणा विधेया । ततः परमसाध्यतया शक्तौ सत्यां भक्तविवेकस्यैव कर्त्तुमुचितत्वात्, इद शुद्धाशुद्धादिभिराचार्यादीना परिपालन रोगाद्यभिभूतवपुषां चेत्रकालादिपरिहाणिवशतो भक्ताद्यलाभवतां च विधेया, न पुनरेवमेव सुस्थावस्थायामिति । व्यवहारभाष्ये तु सर्वसामान्यग्लानप्रतिक्रिया व्यवस्थार्थमिय गाथा लिखिताऽस्ति । यथा-छम्मासे आयरिओ, कुल च सवत्सराइ तिन्नि भवे । सवत्सर गणो खलु, जावज्जीव भवे सघो ॥ १ ॥ अस्या व्याख्या—प्रथमत आचार्य' षण्मासान् यावच्चिकित्सां ग्लानस्य कारयति, तथाऽप्यप्रगुणीभूत कुलस्य समर्पयति । ततः कुल त्रीन् वत्सरान् यावच्चिकित्सक भवति, तथाऽप्यप्रगुणीभवने कुल गणस्य त समर्पयति यावद्गणः खलु चिकित्सा कारयति, तथाऽप्यनिवर्त्तिते रोगे त गण. सङ्घस्य समर्पयति । तत' सङ्घो यावज्जीव प्रासुकप्रत्यवतारेण, तदभावे चाऽप्रासुकेनापि यावज्जीव चिकित्सको भवति । एतच्चोक्त भक्तविवेक कर्त्तुमशक्नुवत । यः पुनर्भक्तविवेक कर्त्तुं शक्नोति तेन प्रथमतोऽष्टादशमासान् चिकित्सा कारयितव्या । विरतिसहितस्य पुनः ससारे दुःप्रापत्वात् । तदनन्तर चेत्प्रगुणीभवति ततः सुन्दरम् । अथ न भवति तर्हि भक्तविवेकः कर्त्तव्यः । इति श्रीप्रवचनसारोद्धार ॥ १६६ पत्र ॥ ६६ ॥

अथ तथाविधगीतार्थाना ग्लानादीना पुनः पुनर्वस्त्रचालनमप्यनुज्ञातमेवेत्यच्चराणि लिख्यन्ते—

आयरियगिलाणाण, मलिणामलिणा पुणोवि धोविज्जा । मा हु गुरुण अवन्नो, लोगम्मि अजीरण इयरे ॥ ६८ ॥

वृत्तिर्यथा—आह-सर्वेषामपि वस्त्राणि वर्षाकालादर्वागेव प्रचाल्यन्ते, किं वाऽस्ति केषाञ्चिद्विशेषः ? अस्तीति ब्रूमः । केषाम् ? इति भेदत आह—आचार्याः-प्रवचनार्थव्याख्याधिकारिणः सद्धर्मदेशनादिगुणग्रामभूरयः सूरयः । आचार्यग्रहणमुपलक्षण,

तेनोपाध्यायादीनां प्रभूणां परिग्रहस्तेषाम् । तथा ग्लानाः—मन्दास्तेषाम् च पुनः पुनर्मलिनानि वस्त्राणि प्रक्षालयेत् । प्राकृतत्वाच्च मलिनानीत्यत्र पुंस्त्वनिर्देशः । प्रस्तुतेऽर्थे कारणमाह—' मा हु ' इत्यादि मा भवतु, हु निश्चितम्, गुरूणां मलिनवस्त्रपरिधाने लोकेऽवर्णो—ऽश्लाघा । यथा निराकृतयोऽमी मलदुरभिगन्धोपलिप्तदेहास्ततः किमेतेषामुपकंठगतैरस्माभिरिति, तथा इतरस्मिन् ग्लाने मा भवत्वजीर्णमिति । मलक्लिन्नवस्त्रधारणे हि शीतलमारुतादिसम्पर्कतः शैत्यसम्भवेन भुक्ताऽऽहारस्यापरिणतौ ग्लानस्य विशेषतो मान्द्यमुज्जृम्भते । इति श्रीप्रवचनसारोद्धारे एकत्रिंशदुत्तरशततमद्वारे ॥ ६७ ॥

यः प्रतिदिनं द्व्यासनं करोति तस्य मासेनाष्टाविंशत्युपवासपुण्यं भवति यथा रात्रिचतुर्विधाहारपरिहारस्थानोपवेशनपूर्वकता-म्बूलादिव्यापारणमुखशुद्धिकरणादिविधिना ग्रन्थिसहितप्रत्याख्यानपालने एकवारभोजिनः प्रतिमासमेकोनत्रिंशत्, द्विवारभो-जिनस्त्वष्टाविंशतिर्निर्जला उपवासाः स्युरिति वृद्धाः । भोजनताम्बूलजलव्यापारणादौ प्रत्यहं घटीद्वयघटीद्वयसम्भवे मासे एकोन-त्रिंशत्, घटीचतुष्टयसम्भवे त्वष्टाविंशतिरुपवासाः । यदुक्तं पद्मचरित्रे—" भुंजइ अणंतरेणं, दुन्नि य वेला उ जो निओगेणं । सो पावइ उववासा, अट्ठावीसं तु मासेणं ॥ १ ॥ " इति श्राद्धविधौ प्रथमाधिकारे ॥ ६८ ॥

अथ नखरदनीछुरीरचणाक्षराणि लिख्यन्ते—

असणाईया चउरो ४, वत्थं ५ पायं ६ च कंबलं ७ चेव । पाउंछणगं ८ च तहा अट्ठविहो रायपिंडो सो ॥१॥ असणा-ईया चउरो ४, पाउंछण ५ वत्थ ६ पत्त ७ कंबलयं ८ । सूई ९ छुरी १० कन्नसोहणी ११, नहरणिया १२ सागारिपिंडो सो ॥२॥" इति श्रीबृहत्कल्पभाष्ये ॥ ६९ ॥

इदानीं साधु स्थडिलादस्थडिल सङ्क्रामन् कस्मिन् काले केन प्रमार्जन करोतीति लिख्यते—

उडुबद्धे रयहरण, वासावासासु पायलेहणिआ । वडउवरे पिलक्खु, तस्स अलभमि चिंचिणिया ॥ ६० ॥ ऋतुबद्धे शीतोष्णकाले ' रयहरण ' ति रजोहरणेन प्रमार्जन कृत्वा प्रयाति । वासासु पायलेहणिय ' ति वर्षासु वर्षाकाले वर्षति सति पादलेखनीकया प्रमार्जन कर्त्तव्यम्, सा च किंमयी भवति ? इत्यत आह–' वडे ' त्ति वटमयी उदुबरमयी प्लक्षमयी, तस्यालाभे–प्लक्षाप्रासौ चिञ्चिणिकामयी–अम्लिलिकामयीति । सा च कियत्प्रमाणा भवति ? इत्याह–बारसअगुलदीहा, अगुलमेग तु होइ विच्छिन्ना । घणमसिणणिव्वणाविय, पुरिसे पुरिसे य पत्तेय ॥६१॥ द्वादशाङ्गुलानि दीर्घा भवति, येन मध्ये हस्तग्रहे भवति, विस्तारस्त्वेकमङ्गुल स्यात् । सा च घना–निबिडा कार्या, मसृणा निर्व्रणा च निर्ग्रन्थिर्भवति। सा च किमेकैव भवति ? न इत्याह–पुरुषे पुरुषे च प्रत्येक एकैकस्य पृथगसौ भवति । इति श्रीओघनिर्युक्तिवृत्तौ २१ पत्रे ॥ ७० ॥

केचिदज्ञानिनो विद्ध मुक्ताफलमचित्तमविद्ध तु सचित्तमिति वदन्ति पर तदनागमिकम्, आगमे हि विशेषानभिधानेन मौक्तिकानामचित्तेपूक्तत्वात् । तथा हि—

से किं त अचित्ते अचित्ते सुवण्णरययमणिमोत्तिअसखसिलप्पवालरयणाण आये सेत्त अचित्ते " इति श्रीअनुयोगद्वारसूत्रे ५१ पत्रे ॥ ७१ ॥

अथ कश्चित् पडितमन्यो ब्रूते–यो मांसमश्नाति तस्य सम्यक्त्व न भवत्येवेति, पर तदसङ्गतमेव प्रतिभासते, यत केवलसम्यक्त्वधारिणो विरतेरभावात् । वृन्ताकाद्यभक्षमिव पिशितमपि नियमित नास्ति, यदि नाश्नाति तदा तु भव्यमेव । अथ

यदि कर्मगतैर्वैचित्र्येण रसनास्वादरसस्य दुरपोहत्वेन भुङ्क्ते तर्हि श्रद्धानरूपे सम्यक्त्वे का नाम क्षतिः। अथ तादृग् सद्यः संमूर्छिमानन्तजन्तुसन्तानदूषितं तद् ज्ञात्वाऽपि भुञ्जानस्य कथं दयापरिणामः ? तदभावाच्च किं सम्यक्त्वं ? इति चेन्मैवम्, अनन्तजन्तुमयं ज्ञात्वाऽपि मूलकभक्षणं कुर्वतोऽपि सम्यक्त्वक्षतिप्रसक्तेः, न्यायस्योभयत्रापि तुल्यत्वात्। अथ तल्लोकेऽतिनिन्द्यमिति यदि तत्प्रवृत्तिमत्कुले तस्य निन्द्यत्वाभावात्, मूलकादेरिव। तथैव च ज्ञातायां द्रुपदनृपतिगृहे क्षायिकसम्यक्त्वधारी केशवोऽपि अशनपानखादिमस्वादिमयावत्पिशितमद्यादिभुञ्जानः सुखेन व्यहरदिति श्रूयते। अपरं च यद्यनन्तकायादिमांसादिभक्षणे सम्यक्त्वध्वंस एव दृष्टः स्यात्तर्हि तद्भक्षणस्य प्रायश्चित्तं नोक्तं स्यात्। श्रावक एव प्रायश्चित्ताधिकारी, न तु मिथ्यात्वी। अत्र श्राद्धजीते तु ज्ञात्वाऽपि मांसभक्षणे माध्वीकादिभक्षणे इव प्रायश्चित्तमेवोक्तं, न तु सम्यक्त्वध्वंसोऽश्रावकत्वं वा। सम्यक्त्वाभावे तु प्रायश्चित्तानधिकार एव पुनः सम्यक्त्वोच्चारो वेत्यपि बोध्यम्। तथा पिशितादिविरतिस्तु चारित्रावरणक्षयोपशमोद्भवा। सम्यक्त्वं तु मोहनीयक्षयक्षयोपशमोद्भवमिति, नानयोरपि कश्चित्सहावस्थाननियमोऽस्तीत्याद्यत्र बहु वाच्यं अलं प्रसङ्गेनेति। तत्प्रायश्चित्ताधिकारस्त्वयम्, अथ भोगोपभोगगुणव्रतेऽभक्षनियमविषयं प्रायश्चित्तमाह—"महुपंचुंबरिफलपुप्फमाइवयभंगि गुरुग अन्नाए। नाए छग्गुरुनिअमे, पिसियासवमक्खणे दसगं॥" व्याख्या—मधुप्रतीतं पञ्चोदुंबरी उदुंबर १ वट २ प्लक्ष ३ काकोदुंबरि ४ शाखिनां पिप्पलस्य च नाश्नीयात् फलं कृमिकुलाकुलमित्याद्युक्तरूपं, फलम्-वृन्ताकादि, पुष्पम्-मधूकादि, आदिशब्दात्पर्युषितद्विदलहिमविषादिपरिग्रहः। एतेषां व्रतस्य नियमस्य भङ्गे 'अन्नाए' त्ति अज्ञातेऽनाभोगत इत्यर्थः। अज्ञाते सति 'गुरुग' गुरुकाः—चतुर्गुरवः प्रायश्चित्तं भवतीति। 'नाए छग्गुरुग' त्ति ज्ञाते आभोगे सति मधुप्रभृतीनां

नियमभङ्गे षड्गुरुप्रायश्चित्तं भवति । अन्ये तु सामान्येन पञ्चोदुम्बरीफलपुष्पादिव्रतभङ्गे लघु नमस्काराष्टशतं त्वेके । अपरे तु नियमं विनाऽपि पञ्चोदुम्बर्यादिषु निषिद्धेषु भक्षितेषु चतुर्गुरु, नियमभङ्गे तु षड्गुरुकमाहु. । अनियमे इत्यादि यस्य ब्राह्मणवणिजादेर्जातिस्वभावादेव पिशितादीनि न भक्ष्यन्ते, तस्य निर्विषयत्वात् । कदाचिदकृतनियमस्यापि पिशितासवम्रक्षणानाम्। तत्र पिशित-मांसं, आसवो-मद्य, म्रक्षण-नवनीत, एतेषां भक्षणे दशकं क्षपणानामिति गाथार्थ' ॥८९॥ अथ भोगोपभोगगुणव्रत एवानन्तकायप्रत्येकवनस्पतिनियमविषयं किञ्चिन्मांसासवविषयं विशेषप्रायश्चित्तं चाह-चउगुरुणंते चउलहु, परित्तभोगे सचित्तवज्जिस्स । मंसासववयभंगे, छग्गुरु चउगुरु अणाभोगे ॥ व्याख्या-सचित्तवर्जकस्य-श्रावकादेः 'अनंते' त्ति अनन्तकायानां मूलकाद्रकादीनां भक्षणे चतुर्गुरु ४ी प्रायश्चित्तं भवति । यदागम -"साऊ जिणपडिकुट्ठो, अणंतजीवाणगायनिप्फन्नो । गेही पसंगदोसा, अणंतकाए अओ गुरुगा ॥ १ ॥" तथा सचित्तवर्जकस्यैव श्राद्धादेः 'परित्त' प्रत्येकपरिभोगे प्रत्येकाम्रादिपुष्पफलादिभोगे चतुर्लघुप्रायश्चित्तं भवति । तथा मांसासवयोरुपलक्षणत्वान्मधुनवनीतयोश्च 'वयभंगे' त्ति अनाभोगतः पृथग्वक्ष्यमाणत्वादत्राभोगतो ज्ञेयम्, ततश्चाभोगे सति व्रतस्य नियमस्य भङ्गे षड्गुरु 'चउगुरु' त्ति अनाभोगे मांसासवमधुनवनीतानां व्रतभङ्गे चतुर्गुरु प्रायश्चित्तं भवतीति गाथाक्षरार्थ' ॥९०॥ इति श्रीश्राद्धजीतकल्पवृत्तौ ३० पत्रे ॥७२॥

केचिद्रात्रौ अन्धकारयोनिकास्तद्रूपा सर्वत्र जलादौ जीवा उत्पद्यन्ते दिवा विलीयन्त इत्यादि वदन्ति परं तदनवबोधसूचकम् । एवं सति दीपप्रभास्पर्शे तज्जीवानामिवान्धकारयोनिकजीवविराधनापत्त्या प्रतिक्रमणाद्यभाव एव सम्पनीपद्यते । प्रकाशान्धकारयोरुभयोरपि बाधितत्वात् । अन्धकारस्य पुद्गलमयत्वं चागमप्रसिद्धमेव-'तहा तज्जोणियाण य' इत्यत्र तु

आन्तिर्न विधेया। तद्योनिकाः—तद्वस्तुयोनिकाः निगोदोरणिकप्रभृतय इत्यर्थत्वात्। सा गाथा चेयं सार्था—तज्जोणियाण जीवाण
तहा संपाइमाण य निसिभत्ते वहो दिट्ठो, सव्वदंसीहिं सव्वहा ॥२२७॥ तस्मिन्—संसक्तान्नसक्तादौ भक्ते निगोदोरणिकादीनां
योनिरुत्पत्तिर्येषां ते तद्योनिकास्तेषाम्। तथा सम्पातिमादीनां—आगन्तुककुन्थुपिपीलिकादीनां, चशब्दादात्मनश्च कीटिकादि-
भिर्मेधादिघातात्, निशि भक्ते वधो विनाशो दृष्टः सर्वदर्शिभिः सर्वथा। इति श्रीश्रावकदिनकृत्यवृत्तौ २२७ पत्रे ॥ ७२ ॥

अथ पञ्चविधदानस्वरूपं लिख्यते—

अभयं सुपत्तदाणं, अणुकंपा उचिअकित्तिदाणाइं। दुन्निहि मुक्खो भणिओ, तिन्निहि भोगाइअं दिंति ॥ १ ॥
जगति दानं पञ्चविधं प्रसिद्धम्, तत्र प्रथममभयदानं इह लोकेऽभयदानात् श्रेयः, दयालुः, कृपापारावार इत्यादिकीर्तिः।
परलोके तु राज्यऋद्धिभोगपरिवारादिफलं भवति। सव्वेसिं जीवाणं, अणारियजणेण हम्ममाणाणं। जहसत्तीए
वारण—मभयं तं बिंति मुणिवसहा ॥ १ ॥ पंचमहव्वयपरिपालयाण पंचसमिइइ समियाण। सव्वविरइजुत्ताणं,
साहूणं दाणमुत्तमयं ॥ २ ॥ मंदाणं डुंटाणं, दीणअणाहाण अंधबधिराणं। अणुकंपादाणं पुण, जिणेहिं न
कयावि पडिसिद्धं ॥ ३ ॥ उचियं दाणं एयं, वेलमवेलाइ दारपत्ताणं। तं दाणं दित्तेणं, जिणवयणपभावणा भणिया
॥ ४ ॥ जिणसाहुसाहुणीण य, सुकित्तिपरयाण भट्टबट्टुयाणं। तं दाणं जं भणियं, सुकित्तिदाणं मुणिवरेण ॥ ५ ॥
अथ चतुर्थं उचितदानं अवसरेषु योग्यमभीष्टप्राघूर्णकदेवगुरुसमागमनप्रासादप्रतिमानिष्पत्तिवर्द्धापनिकादातॄणां काव्य-

श्लोकसुभाषितविनोदकथादिकथकानां रञ्जितचेतसां यद्दीयते तदुचितदानम्, यथा चक्रवर्त्तिना प्रतिदिन प्रभातसमये विहरमानतीर्थङ्करस्थितिशुद्धिज्ञापकाय वृत्तिर्दीयते, यथा 'वित्तीओ सुवण्णस्स उ' इत्यादि । अथ पञ्चमकीर्त्तिदान कीर्त्त्या–निजकुलरूपवंशविद्यागुणवर्णनरूपया भट्टचारणमल्लगन्धर्वमार्गणादीनां यद्दीयते तत्कीर्त्तिदानम् । यथा सोनाजलहरकूटसागरकडाहिसमुद्रदारिद्र्यमुद्राविद्दडणहार इत्यादिविविधगुणवर्णनोत्साहिताः कीर्त्त्यभिलाषिणो दानव्यसनवासितचेतसः समस्तमपि ददति पुरुषास्तदुपरि विक्रमादित्यकीर्त्तिदानप्रबन्धः । इति तपागच्छे श्रीसोमसुन्दरसूरिश्रीरत्नशेखरसूरिशिष्यपण्डितनन्दिरत्नगणिशिष्यरत्नमन्दिरगुम्फितायामुपदेशतरङ्गिण्यां धर्मोपदेशतरङ्गे ॥ ७४ ॥

अहो प्रतिमारिपो ! 'वदणवत्तियाए पूअणवत्तियाए' इत्याद्यावश्यकसूत्रादौ प्रतिमापूजनाक्षराणि पश्यन्नपि किं मुह्यसे। ननु 'वदणवत्तियाए' इत्यादि तु साधुरपि पठति, साधोस्तु द्रव्यार्चनं भवतामप्यनभिमतं तत् कथमयमर्थः समर्थः साधयितु भवत्समीहितम् । मैवं वीरकठ ! त्वदुत्पत्ते पूर्वमेव पूर्वाचार्यैरियं शङ्का समुट्टङ्क्य निराकृताऽस्तीति सकर्णो भूत्वा शृणु तथा 'पूअणवत्तियाए' त्ति पूजनप्रत्यय–पूजानिमित्त पूजन–गन्धमाल्यादिभि' समभ्यर्चनं, तथा 'सक्कारवत्तियाए' त्ति सत्कारप्रत्यय–सत्कारनिमित्त प्रवरवस्त्रादिभि' समभ्यर्चनं सत्कार । आह–क एवमाह साधुः श्रावको वा । तत्र साधोस्तावत्पूजनसत्कारावनुचितावेव, द्रव्यस्तवत्वात्, तस्य तत्प्रतिषेधात् 'तो कसिणसजमविऊ पुप्फाईयं न इच्छति' इति वचनात्, श्रावकस्तु सम्पादयत्येवैतौ, यथाविभव तस्य तत्प्रधानत्वात्, तत्र तत्र दर्शितत्वात्, 'जिणपूया विभवबुड्ढि' त्ति वचनात् । तत्कोऽनयोर्विषय' ? इति । उच्यते—सामान्येन द्वावपि साधुश्रावकौ, साधोः स्वकरणमधिकृत्य द्रव्यस्तवप्रतिषेधः, न पुन

सामान्येन, तदनुमतिभावात्। भवति च भगवतां पूजासत्कारावुपलभ्य साधोः प्रमोदः। साधु-शोभनमिदमेतावज्जन्मफलमविरतानामिति वचनलिङ्गगम्यः। तदनुमतिरियं, उपदेशदानतः, कारणापत्तेश्च, ददाति च भगवतां पूजासत्कारविषयमुपदेशम् कर्त्तव्या जिनपूजा, न खलु वित्तस्यान्यच्छुभतरं स्थानमिति वचनसन्दर्भेण तत्कारणम्, एतदनवद्यं च। तद्दोपान्तरनिवृत्तिद्वारेणायमत्र प्रयोजकोंऽशः। तथा भावतः प्रवृत्तेरुपायान्तराभावात्। नागदत्तसुतगर्त्ताकर्षणज्ञातेन भावनीयमेतत्। तदेवं साधुरित्थमेवैतत्सम्पादनाय कुर्वाणो नाविषयः। वचनप्रामाण्यादित्थमेवेष्टसिद्धिः, अन्यथाऽयोगादिति। श्रावकस्तुसम्पादयन्नप्येतौ भावातिशयादधिकसम्पादनार्थमाह—न तस्यैतयोः सन्तोषः, तद्धर्मस्य तथा स्वभावत्वात्, जिनपूजासत्कारयोः करणलालसः खल्वाद्यो देशविरतिपरिणामः, औचित्यप्रवृत्तिसारत्वेनोचितारम्भिण एतौ सदारम्भरूपत्वात्, औचित्याज्ञाऽमृतयोगादसदारम्भनिवृत्तेः, अन्यथा तदयोगादतिप्रसङ्गादिति। तथा हि—द्रव्यस्तव एवैतौ, स च भावस्तवाङ्गमिष्टः, तदन्यस्याप्रधानत्वात्, तस्याभव्येष्वपि भावात्। अत आज्ञयाऽसदारम्भनिवृत्तिरूप एवायं स्यात्। औचित्यप्रवृत्तिरूपेऽप्यल्पभावत्वात् द्रव्यस्तवः गुणाय चायं, कूपोदाहरणेन। न चैतदप्यनीदृशं इष्टफलसिद्धये। किं तु आज्ञामृतयुक्तमेव। स्थाने विधिप्रवृत्तेरिति सम्यगालोचनीयमेतत्। तदेवमेतयोः साधुश्रावकावेव विषय इत्यलं प्रसङ्गेन। इति श्रीहरिभद्रसूरिकृतायां ललितविस्तरायाम् ॥ ७५ ॥

तथा जिनपूजा यदि मोक्षसाधनं तर्हि साधुभिः कुतो न क्रियत इत्यादि ये प्रलपन्ति तेषामपीदमेव मुखमुद्रणमिति।

अथ लोकोत्तरमिथ्यात्वस्वरूपं लिख्यते—

लोकोत्तरदेवगत–परतीर्थिकसङ्गृहीतजिनबिम्बार्चनादि सप्रत्ययश्रीशान्तिनाथपार्श्वनाथादिप्रतिमाणामिह लोकार्थं यात्रोपचितमाननादि च, लोकोत्तरगुरुगत च–लोकोत्तरलिङ्गेषु पार्श्वस्थादिषु गुरुत्वबुद्ध्या वन्दनादि । गुरुस्तूपादावैहिकफलार्थं याञ्चोपयाचितादि च । ननु यथा वैद्यादयो व्याधिप्रतीकारार्थं धनभोजनवसनादिना बहु मन्यन्ते तथा सप्रभावयक्षयक्षिण्यादीनामप्यैहलौकिकफलार्थं पूजोपयाचितादौ को दोषः । मिथ्यात्व हि तदा स्याद्यदि मोक्षप्रदोऽयमिति बुद्ध्याऽऽराध्येत । यदाहुः—" अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्व तद्विपर्ययात् ॥ १ ॥ " श्रूयते च–विशुद्धदृढसम्यक्त्वा रावणकृष्णश्रेणिकाभयकुमारादयोऽपि शत्रुञ्जयपुत्रप्राप्त्याद्यैहिककार्यार्थं विद्यादेवताद्याराधन कृतवन्त इति । ततश्चेह लोकार्थं यक्षाद्याराधनेऽपि किं नाम मिथ्यात्वम् ? सत्यम् । तत्त्ववृत्त्याऽदेवस्य देवत्वबुद्ध्याऽऽराधन एव मिथ्यात्व तथाऽपि यक्षाद्याराधनमिह लोकार्थमपि श्रावकेण वर्जनीयमेव, प्रसङ्गाद्यनेकदोषसम्भवात् । प्रायो हि जीवा मन्दमुग्धवक्रबुद्धयः । सम्प्रति च विशिष्य ते नैव विमृशन्ति । यद्यनेन विशुद्धसम्यक्त्वेन महात्मना यक्षाद्याराधन विधीयते तदा नूनमयमपि देवो मोक्षप्रदतया सम्यगाराध्य इत्यादिपरम्परया मिथ्यात्वबुद्धिस्थिरीकरणादिप्रसङ्गः । तथा चैहिकफलार्थमपि यक्षाद्याराधकस्यापि प्रेत्य बोधिर्दुष्प्रापः स्यात् । उक्त च–" अन्नोन्नं सत्ताण मिच्छत्त जो जणेइ मूढप्पा । सो तेण निमित्तेण, न लहइ बोहिं जिणाभिहिय ॥ रावणकृष्णादिभिश्च तत्समयेऽर्हद्धर्मस्येतरधर्मेभ्योऽतिशायितया सर्वप्रतीतत्वेनापवादपदे यदि विद्याराधनादिकृत तदाऽपि तदालम्बनग्रहण नोचितम् । यतः—" जाणिज्ज मिच्छदिट्ठी, जे य परालंबणाइ घिप्पंति । जे य पुण सम्मदिट्ठी, तेसिं पुणो चडइ पयडीए ॥ १ ॥ " इति श्रीश्राद्धप्रतिक्रमणसूत्रवृत्तौ

'संकाकंखविगिच्छा' इति गाथायाम् २३ पत्रे ॥ ७६ ॥

अत्र ये स्तूपं प्रतिसन्दिह्यन्ते तेषामपि लौकिकगुरुमिथ्यात्वाद्यैर्निरासः स्पष्ट एव—

सुण पंचविहं मिच्छत्तं थूलभावेणं परमत्थाउ विवज्जासो, सो पुण एवं न मए मम पुव्वपुरिसेहिं वा कारियं जिणाययणं बिंबं वा, कारियं मम पुरिसेहिं वा, ता इत्थ पूयाइयं पवत्तेमि, किं परकीएसु अच्चायरेणं, एवं च न तस्स सव्वसुपच्चया पवित्ती, अन्नहा सव्वेसु बिंबेसु अरिहं चेव ववसिज्जा सो अरहा जइ परकीओ ता पत्थरलेप्पपित्तलाइयं अप्पणिज्जयं, न पुण पत्थराइसु वंदिज्जमाणेसु कम्मक्खओ किं तु तित्थयरगुणपक्खवाएणं, अन्नहा संकराइबिंबे पहाणाइं सब्भावओ तेसु वंदिज्जमाणेसु कम्मखओ हुज्जा, मच्छरेण वा परकारियचेइयालए विग्घमायरंतस्स महामिच्छत्तं न तस्स गंठिभेओवि संभाविज्जइ, जे पासत्था जे कुदंसणाए विमोहिया सुविहियाणं बाहाकरा हवंति, जे वा जाइनाइपक्खवाएणं साहूणं दाणाइसु पयट्टंति न गुणचिंताए तेवि तहेव, एयंमि विवज्जासरूवे मिच्छत्ते सइ सुबहुपढंतो अन्नाणी चेव, एएसु अ हुंतेसु अइदुकरावि किरिया न मुक्खसाहगा जम्हा सो अविरओ कहिज्जइ, पंचमगुणट्ठाणे देसविरई छट्ठगुणठाणे सव्वविरइ न पढमगुणट्ठाणे, तस्स य अणंताणुबंधिप्पमुहा सोलसवि कसाया बज्झंति उइज्जंति अ, तन्निमित्ताउ असुहाओ दीहट्ठिइओ तिव्वाणुभागाओ पयडीओ बज्झंति, तासिं च उदएण नरयातिरियकुमाणुसकुदेवत्तरूवो संसारो ॥ इति श्रीउपमितिभवप्रपञ्चग्रन्थे ॥ ७७ ॥

इमानि चाक्षराणि दर्शं दर्शमियं गरीयसी चिन्ताऽस्मच्चित्तमाचामति यत् यः श्रीजिनपूजाप्रतिमाया रजःपर्वराजत्व-

मुक्तवान्, तस्य का गतिर्भाविनी ? इति । अथवा पर्याप्तं चिन्तयाऽवश्यभाविनोऽप्रतीकार्यत्वम् । मतिं तु तस्योपमितिभवप्रपञ्चैव उक्तवती । ननु भवद्भिरपि द्रव्यलिङ्गिबोटिककटुकचैत्यानामवन्द्यत्वमङ्गीकृतमेव, ततश्चोभयोः समौ दोषपरिहारौ, मैव जाल्मत्व त्यज्यताम् । तेषां हि साध्व्यादिव्यवहारबाह्यत्वेन सर्वविसंवादित्वेन साधुत्वस्कन्धोत्थापकत्वेन च सङ्घादिव्यवहाररहितत्व ततस्तत्सम्बन्धिचैत्याना प्रणतिनिषेधो न्याय्य एव । यथाऽन्यतीर्थीयपरिगृहीतानां पूर्वोक्त वचन च सङ्घादिव्यवहारबाह्यान् विहायान्यत्रैव प्रवर्त्तते । अन्यथाऽन्यतीर्थीयपरिगृहीतार्हच्चैत्यानामपि वन्द्यत्वापत्तेः, तच्चागमविरुद्धम् । न च वाच्यमन्ये यदि साधुव्यवहारयुक्तास्तर्हि ते वन्द्याः सन्तु इति । ते हि व्यवहारतो द्रव्यसाधवोऽपि उत्सूत्रभाषित्वान्नैव वन्द्याः, प्रसङ्गवासनासम्भवाद्यनेकदोषसम्भवात् । प्रतिमा तु नोत्सूत्रभाषिणीति, व्यवहारसाध्व्यादिप्रतिष्ठितेति च पुरातनैर्महापुरुषैः प्रणतेति च प्रणम्यत एव व्यवहारसाधुत्व चामीषां भवताऽप्यङ्गीकर्त्तव्यमेव । इतरथा कापालिकाद्यर्थमाधाकर्मीकृतमशनादि भवता कल्पते । एतदर्थं कृत च भवता न कल्पते तत्कथमित्यल व्यासेन । कदाग्रहत्यागे सर्वं सुस्थमेवेति दिक् ॥

यदि त्रिविधाहार उपवासः प्रत्याख्यातस्तदा परिष्ठापनक भक्तादि कल्पते । यदि चतुर्विधाहारः प्रत्याख्यातः पानक च नास्ति ततो न कल्पते । यदि पानीयमप्यधिक ततो कल्पते । इति श्रीभाष्यावचूर्णौ ॥ ७८ ॥

खरतराः श्रीअभयदेवसूरिरस्मत्पूर्वजः, इति वदन्ति पर तदसत्, श्रीभगवत्यादिवृत्त्यन्ते चन्द्रकुलस्यैवानीतत्वात् । सुविहिता महापुरुषाः सम्भाव्यन्ते । यदि च खरतरगच्छीयाः स्युस्तर्हि कल्याणकानि पञ्चेति कथ व्याख्यातवन्त ।

व्याख्यातानि च तानि तैस्तथा यथा—पंच महाकल्लाणा, सव्वेसिं जिणाण होइ नियमेण । भुवणच्छेरयभूया, कल्लाण
फला य जीवाणं ॥ १ ॥ गब्भे २ जम्मे २ य तहा, निक्खमणे ३ चेव णाण४ निव्वाणे५ । भुवणगुरूण जिणाणं, कल्लाणा
होंति णायव्वा ॥ २ ॥ इति श्रीहरिभद्रसूरिकृतयात्रापञ्चाशके ॥ १० ॥ श्रीअभयदेवसूरिकृता वृत्तिर्यथा—पञ्चैव कल्याणकानि
परमश्रेयांसीति ॥ ७९ ॥

अथास्थापिताचार्यपदे भट्टारके परासौ सति यत्कर्त्तव्यं तल्लिख्यते—

आशुकारेण शूलादिनोपरतः कालगतः आशुकारोपरतस्तस्मिन् सत्याचार्येऽस्थापितेऽन्यस्मिन् गणधरे इयं वक्ष्य-
माणमर्यादा । तामेवाह—'चिलिमिलिं' इत्यादि, आशुकारोपरत आचार्यो जवनिकान्तरितः प्रच्छन्नः कार्यः । वक्तव्यं
चाचार्याणामतीवाशुभं शरीरं, वाचाऽपि वक्तुं न शक्नुवन्तीति । ततो यो मतिमान् गणधराभिमुखस्तं दर्शयन्ति ।
गणत्वमेतस्यानुज्ञातं, परं वाचा वक्तुं न शक्नुवन्तीति । एषा हस्तानुज्ञातस्योपरि वासा निक्षिप्यन्ते एष गणधर इति
पश्चात्कालगता आचार्या इति प्रकाशयन्ते । इति श्रीव्यवहारचतुर्थोद्देशके ॥ ८० ॥

अथ मृतयुगलिकशरीराणां का गतिः ? इति शङ्कानिरासो लिख्यते—

अत्र कश्चिदाह—अग्नेरप्रादुर्भूतत्वेन मृतकशरीराणां का गतिः ? उच्यते—भारण्डप्रभृतिपक्षिणस्तानि तथा जगत्स्वाभाव्या-
नीडकाष्ठमिवोत्पाट्य मध्ये समुद्रं क्षिपन्तीति । यदुक्तं श्रीहेमाचार्यकृतऋषभचरित्रे—पुरा हि मृतमिथुनशरीराणि महाखगाः ।
नीडकाष्ठमिवोत्पाट्य, सद्यश्चिक्षिपुरंबुधौ ॥ १ ॥ किं चात्र श्लोकेऽम्बुधावित्युपलक्षणं, तेन यथायोगं गङ्गाप्रभृतिनदीष्वपि ते

तानि चिपन्ति । इति जम्बूद्वीपप्रज्ञप्तिवृत्तौ श्रीशान्तिचन्द्रगणिकृतायाम् ॥ ८१ ॥

भो ! भो ! अपापर्य “ पिप्पलिं वा पिप्पलिचुन्नं वा मिरियं वा मिरियचुण्णं वा ” इत्यादिनिषेधाक्षरसद्भावेऽपि कथं मरीचिपिप्पल्यादिकं त्वया भुज्यते, भवतामप्येतत्तुल्यमिति चेन्नैवम् । अस्माकं तु अवस्थान्तरसूचकापराक्षरसद्भावात् । तव त्वनन्यगतिकस्यानाचीर्णाचरणमेव शरणम् । अस्मदक्षराणि चेमानि—जलमग्गे सयजोअण, थलमग्गे सट्ठिजोयणा उवरिं । हरडिं पिप्पलि मरियं, समये भणिय अचित्ताणि ॥१॥ तथाऽन्यत्र क्षेत्रे योजनशतात्परतो यदा नीयते तदा सर्वोऽपि पृथिवीकायः सर्वस्मादपि क्षेत्रात् योजनशतादूर्ध्वं भिन्नाहारत्वेन शीतादिसम्पर्कतश्चावश्यमचित्तीभवति । इत्थं च क्षेत्रातिक्रमणेनाचित्ती भवनमप्कायादीनामपि यावद्वनस्पतिकायः । तथा च हरीतक्याद्यपि अचित्तीभूतत्वादौषधार्थं साधुभिर्गृह्यते । इत्याचाराङ्ग प्रथमाध्ययनतृतीयोद्देशके ॥ ८२ ॥

हरियाल मणोसिल पिप्पली अ, खज्जूर मुद्दिया अभया । आइण्णमणाइण्णा, तेवि हु एमेव नायव्वा ॥ १ ॥ हरिताल मनःशिला पिप्पली खर्जूरः, एते प्रतीताः मुद्रिका–द्राक्षा, अभया–हरीतकी, एतेऽपि एवमेव लवणवत् । योजनशतागमनादिभिः कारणैरचित्तीभावं भजन्तो ज्ञातव्याः, परमेके आचीर्णा अपरेऽनाचीर्णाः, तत्रापि पिप्पलीहरीतकीप्रभृतय आचीर्णा इति कृत्वा गृह्यन्ते । खर्जूरमुद्रिकादयः पुनरनाचीर्णा इति न गृह्यन्ते । इति श्रीबृहत्कल्पवृत्तौ प्रथमखण्डे ॥ ८३ ॥

अथैकेन्द्रियाणामपि कथञ्चिद्भावश्रुतं कश्चित्सञ्ज्ञाश्च वर्त्तन्ते, इत्यक्षराणि लिख्यन्ते—

“ जह सुहुम भाविंदिय–नाणं दव्विंदियावरोहेवि । तह दव्वसुयाभावे, भावसुअं पत्थिवाईणं ॥ १ ॥ ” वृत्तिर्यथा—

इह केवलिनो विहाय शेषसंसारिजीवानां सर्वेषामप्यतिस्तोकबहुबहुतरबहुतमादितारतम्यभावेन द्रव्येन्द्रियेष्वसत्स्वपि लब्धीन्द्रियपञ्चकावरणक्षयोपशमः समस्त्येव, ततश्च यथा पृथिव्यादीनामेकेन्द्रियाणां श्रोत्रचक्षुर्घ्राणरसनस्पर्शनलक्षणानां प्रत्येकं निर्वृत्त्युपकरणरूपाणां द्रव्येन्द्रियाणां तत्प्रतिबन्धककर्मावृतत्वादवरोधेऽप्यभावेऽपि सूक्ष्ममव्यक्तं लब्ध्युपयोगरूपश्रोत्रादिभावेन्द्रियज्ञानं भवति । लब्धीन्द्रियावरणक्षयोपशमोद्भूताणीयसी ज्ञानशक्तिर्भवतीत्यर्थः । तथा तेनैव प्रकारेण द्रव्यश्रुतस्य द्रव्येन्द्रियस्थानीयस्याभावेऽपि भावश्रुतं भावेन्द्रियज्ञानकल्पं पृथिव्यादीनां भवतीति प्रतिपत्तव्यमेव । इदमुक्तं भवति—एकेन्द्रियाणां तावच्छ्रोत्रादिद्रव्येन्द्रियाभावेऽपि भावेन्द्रियज्ञानं किञ्चिद् दृश्यते एव वनस्पत्यादिषु स्पष्टं तल्लिङ्गोपलम्भात् । तथा हि—कलकंठोद्गीर्णमधुरपञ्चमोद्गारश्रवणात्सद्यः कुसुमपल्लवादिसम्भवो विरहकवृक्षादिषु श्रवणस्येन्द्रियस्य व्यक्तमेव लिङ्गमवलोक्यते । तिलकादिषु तरुषु पुनः कमनीयकामिनीकमलदलदीर्घशरदिन्दुधवललोचनकटाक्षविक्षेपात्कुसुमाद्याविर्भावश्चक्षुरिन्द्रियज्ञानस्य । चंपकाद्यंघ्रिपेषु तु विविधसुगन्धिगन्धवस्तुनिकुरम्बोन्मिश्रविमलशीतलसलिलसेकात्प्रकटनं घ्राणेन्द्रियज्ञानस्य । बकुलादिभूरुहेषु तु रम्भातिशायिस्पर्शप्रवरतररूपवरतरुणभामिनीमुखप्रदत्तस्वच्छसुस्वादुसुरभिवारुणीगंडूषास्वादनात्तदाविःकरणं रसनेन्द्रियज्ञानस्य । कुरुबकादिविटपिषु अशोकादिद्रुमेषु च घनपीनोन्नतकठिनकुचकुम्भविभ्रमापभ्राजितकुम्भीनकुम्भरणन्मणिवलयकणत्कङ्कणाभरणभूषितभव्यभामिनीभुजलतावगूहनसुखाश्लिष्टपञ्चा।गचूर्णशोणतलपादकमलपार्ष्णिप्रहाराच्च झटिति प्रसूनपल्लवादिप्रभवः स्पर्शनेन्द्रियज्ञानस्य स्पष्टं लिङ्गमभिवीक्ष्यते । ततश्च यथैतेषु द्रव्येन्द्रियासत्त्वेऽपि एतद्भावेन्द्रियज्ञानं सकलजनप्रसिद्धमस्ति तथा द्रव्यश्रुताभावे भावश्रुतमपि भविष्यति । दृश्यते हि जलाद्याहारोपजीवद्वनस्पतीनामाहारसंज्ञा । सङ्कोचव-

न्यादीनां तु हस्तस्पर्शादिभीत्याऽवयवसङ्कोचनादिभ्यो भयसञ्ज्ञा । विरहकचपककेसराशोकादीनां तु मैथुनसञ्ज्ञा दर्शितैव । बिल्वपलाशादीनां तु निधानीकृतद्रव्योपरि पादमोचनादिभ्यः परिग्रहसञ्ज्ञा । न चैताः सञ्ज्ञा भावश्रुतमन्तरेणोपपद्यन्ते तस्माद्भावेन्द्रियपञ्चकावरणक्षयोपशमाद्भावेन्द्रियपञ्चकज्ञानवद्भावश्रुतावरणक्षयोपशमसद्भावाद्द्रव्यश्रुताभावेऽपि यच्च यावच्च भावश्रुतमस्त्येवैकेन्द्रियाणामित्यलं विस्तरेण। तर्हि ज विन्नाणं सुआणुसारेणेति श्रुतलक्षणं व्यभिचारि प्राप्नोति श्रुतानुसारित्वमन्तरेणाप्येकेन्द्रियाणां भावश्रुताभ्युपगमादिति चेन्नैवमभिप्रायापरिज्ञानात्, शब्दोल्लेखसहितं विशिष्टमेव भावश्रुतमाश्रित्य तल्लक्षणमुक्तम्, यच्चैकेन्द्रियाणामोघिकविशिष्टं भावश्रुतमात्रं तदावरणक्षयोपशमस्वरूपं तत् श्रुतानुसारित्वमन्तरेणापि यदि भवति तथाऽपि न कश्चिद्व्यभिचार इति गाथार्थ ॥ १ २ ॥ इति श्रीविशेषावश्यकनिर्युक्तिवृत्तौ ॥ ८४ ॥

शालि १ व्रीहि २ गोधूम ३ यव ४ यवयवानां ५ त्रीणि वर्षाणि जीवत्वम् । तिलमुद्गादीनां द्विदलानां पञ्चवर्षाणि । अतसी १ कुसुभ २ कोद्रव ३ कङ्गु ४ वरट ५ रालग ६ कोद्दूसग ७ शण ८ सर्षपमूलबीजादीनां सप्तवर्षाणि । इति श्रीभगवतीषष्ठशतकसप्तमोद्देशके वृत्तौ ॥ ८५ ॥

अथ साधुभिर्नखा न रक्षणीयाः । 'केसरोमनखसमारया' इत्याद्यालोचनं तु भूषानिमित्तं सुन्दरताकरणविषयं बोध्यम् । नखवृद्धौ च दोषा यथा–पादनखा दीर्घाश्चङ्क्रमणे उपलादिषु आस्फिटन्ति भज्यन्ते । हस्तनखा दीर्घा भाजने लेपं विनाशयन्ति, देहे वा क्षतं कुर्वन्ति । तथा लोको भणेदेष कामी, कामिनीकृतक्षतत्वादिति । लोकश्च भणति दीर्घनखान्तरे सञ्ज्ञा-

१ श्री अभयदेवसूरीश्वरकृतवृत्तौ अयं पाठो नास्ति, ततो मूलवृत्तौ भविष्यतीति सम्भाव्यते

स्तिष्ठन्त्यतोऽशुचय एवैते । पादनखेषु च दीर्घेष्वन्तरे रेणुस्तिष्ठति यावच्चक्षुरुपहन्यते, एतद्दोषपरिहरणार्थं नखकर्त्तनकुर्वन्नपि शुद्धः स्यात् । इति श्रीयतिजीतवृत्तौ ॥ ८६ ॥

ननु च जानन्नपि केवली यदि जन्तुसङ्घातघातमाचरति तर्हि पापर्द्धिकृत्केवलिनोः कः प्रतिविशेषः ? किं वा तस्य केवलित्वमित्येवं वादिनस्तमाशातयन्तीति । हं हो त्रिभुवनादंभस्तंभायितश्रीतपागणघुण ! सम्यग्स्वस्वरूपानुरूपमभिहितवानसि । केवली पापर्द्धिकृता तुल्य इति तु सतां वक्तुमप्यनुचितं, यदि वा सतां वक्तुमनुचितं तर्हि तव किम्, परं वयं त्वेवं ब्रूमः—अवश्यंभावितया यदि केवलिकायाज्जीवविराधना स्यात्तदा निषेधो नास्ति, केवलं केवले समुत्पन्ने ज्ञान एव विशेषो, न तु शरीरे कश्चिद्विशेषो भवति । तथा (नव) वर्षजस्य केवलिनो नूत्नपादोत्पत्तिप्रसक्तेः । किंच यदि कलहकोलाहलं विहाय क्षणं स्वस्थो भवसि तर्हि त्वमेव प्रष्टव्योऽसि देशोनपूर्वकोटिं यावद्विहरमाणः केवली एजनव्यजनकम्पनस्पन्दनादिधर्मोपेतसयोगिजीवपञ्चान्तःपाती वा निरेजननिर्व्यजनायोगिजीवपञ्चान्तःपाती वा ? अयोगिजीवपञ्चान्तःपातीति तु त्वयाऽपि न वाच्यमेव अपसिद्धान्तात्, त्वामपि पंडितं वदन्तो जनाः श्रूयन्ते इति । यदि च सैजनसव्यजनादिधर्मोपेतसयोगिपञ्चान्तःपाती स तर्हि तस्य तु आरम्भसारम्भसमारम्भादिकमुक्तमेव स्फुटाक्षरैर्भगवता, मा मा च केवलिन आरम्भकः कृषिवाणिज्यादिकोऽन्यो वेत्यादि वदन् स्वपाण्डित्यस्वरूपमद्याप्यज्ञातचरं प्रकटीकुर्वीथाः । यदाह—"कोकिलकदम्बकस्थः, कूजति काको न यावदातिकटुकम् । तावन्न हि निर्णेतुं, शक्यो वर्णादिसाधर्म्यात् ॥१॥" अनन्तरोक्तदूषणं तु तीर्थङ्करगणधरयोर्वाक्ये वक्तुं तवैव धाष्टर्यं नास्माकम्, अदुष्टश्चायमर्थो यथासम्भवं योजनात् । केवलिनो हि अवश्यंभावभाविनी चल-

शरीरैजनव्यजनजाता सर्वसंवरचारित्राविरोधिनी जीवविराधनैव । आरम्भादिकं जानन्नपि सर्ववित् कथं तान् हिनस्तीत्यादिकं यच्च प्राहिल्य तच्च अत्रैवाऽऽचाराङ्गभगवतीप्रज्ञापनाविचारतरङ्गेषु सम्यग् निराकृतमेव। तथा च ह्रस्वपञ्चाक्षरोच्चारमात्रकालायां शैलेश्यवस्थायां जन्तुविराधना भवति, देशोनपूर्वकोटिकालायां सयोगितायां तु न भवतीत्यादिका या तव वाग्मिता सा तवैवानुरूपेति त्वय्येव तिष्ठतु, नान्यत्र प्रसरतु। अलं प्रसङ्गेन । यदि धर्मबुद्धिस्तर्हि 'जीवेणं भंते ? सया समियं एयइ' इत्यादि-सूत्रं क्वचिदारामादौ गत्वा चिरमालोचनीयं यथा कदाचित्कर्मलाघवान्नवत्यपि सुमतिः । सूत्रं च तदिदमुपकाराय लिख्यते—

" जीवेणं भंते ! सया समियं एयति वेयति चलति फंदति घट्टति खुब्भइ उदीरइ तं तं भावं परिणमइ ? हंता मंडियपुत्ता ! जीवेणं सया समियं एयइ जाव तं तं भावं परिणमइ। जावं च णं से जीवे सया समियं जाव परिणमइ तावं च णं तस्स जीवस्स अंते अंतकिरिया भवइ ? नो तिणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ जावं च णं से जीवे सया समितं जाव अंते अंतकिरिया न भवति ? मंडियपुत्ता ! जावं च णं से जीवे सया समियं जाव परिणमति तावं च णं से जीवे सया आरभइ सारभइ समारभइ आरंभे वट्टइ सारंभे वट्टइ समारंभे वट्टइ आरंभमाणे सारंभमाणे समारंभमाणे आरंभे वट्टमाणे सारंभे वट्टमाणे समारंभे वट्टमाणे बहूणं पाणाणं बहूणं भूयाणं बहूणं जीवाणं बहूणं सत्ताणं दुक्खावणयाए सोयावणयाए जूरावणयाए तिप्पावणयाए पिट्टावणयाए परियावणयाए वट्टइ, से तेणट्ठेणं मंडियपुत्ता ! एवं वुच्चइ जावं च णं से जीवे सया समियं एयति जाव परिणमति तावं च णं तस्स जीवस्स अंते अंतकिरिया न भवति । जीवेणं भंते ! सया समियं णो एयइ जाव नो तं तं भावं परिणमइ ? हंता मंडियपुत्ता ! जीवेणं सया समियं जाव नो परिणमति । जावं च णं भंते ! से जीवे नो एयति जाव नो

तं तं भावं परिणमेति तावं च णं तस्स जीवस्स अंते अंतकिरिया भवति? हंता जाव भवति, से केणट्ठेणं भंते! जाव भवति? मंडियपुत्ता! जावं च णं से जीवे सया समियं णो एयइ जाव णो परिणमति तावं च णं से जीवे नो आरंभइ नो सारंभइ नो समारंभइ नो आरंभे वट्टइ नो सारंभे वट्टइ नो समारंभे वट्टइ अणारंभमाणे असारंभमाणे असमारंभमाणे आरंभे अवट्टमाणे सारंभे अवट्टमाणे समारंभे अवट्टमाणे बहूणं पाणाणं बहूणं भूयाणं बहूणं जीवाणं बहूणं सत्ताणं अदुक्खावणयाए जाव अपरियावणाए वट्टइ। इति। वृत्तिर्यथा—'जीवेणं' इत्यादि इह जीवग्रहणेऽपि सयोग एवासौ ग्राह्यः, अयोगस्यैजनादेर-सम्भवात्। 'सदा' नित्यं 'समियं' ति सप्रमाणं 'एयइ' त्ति एजते–कम्पते 'एजृ कम्पने' इति वचनात् 'वेयइ' त्ति व्येजते–विविधं कम्पते 'चलइ' त्ति स्थानान्तरं गच्छति 'फंदइ' त्ति स्पन्दते–किञ्चिच्चलति 'स्पन्दि किञ्चिच्चलने' इति वचनात् अन्यमवकाशं गत्वा पुनस्तत्रैवागच्छतीत्यन्यो 'घट्टइ' त्ति सर्वदिक्षु चलति पदार्थान्तरं वा स्पृशति 'खुब्भइ' त्ति क्षुभ्यति पृथिवीं प्रविशति क्षोभयति वा पृथिवीं बिभेति वा 'उदीरइ' त्ति प्राबल्येन प्रेरयति पदार्थान्तरं प्रतिपादयति वा। शेषक्रियाभेद-सङ्ग्रहार्थमाह—'तं तं भावं परिणमइ' त्ति उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनादिकपरिणामं यातीत्यर्थः। एषां चैजनादि-भावानां क्रमभावित्वेन सामान्यतः सदेति मन्तव्यं न तु प्रत्येकापेक्षया, क्रमभाविनां युगपदभावादिति। 'तस्स जीवस्स अंते' त्ति मरणान्ते 'अंतकिरिय' त्ति सकलकर्मक्षयरूपा 'आरंभइ' त्ति आरभते पृथिव्यादीनुपद्रवयति। 'सारंभइ' त्ति संरभते तेषु विनाशसङ्कल्पं करोति। 'समारभइ' त्ति समारभते तानेव परितापयति। आह च—"संकप्पो संरंभो, परितापकरो भवे समारंभो। आरंभो उद्दवओ, सव्वनयाणं विसुद्धाणं॥" इदं च क्रियाक्रिययावतोः कथञ्चिदभेद इत्यभिधानाय तयोः

समानाधिकरणत' सूत्रमुक्तम् । अथ तयो' कथञ्चिद्भेदोऽप्यस्तीति दर्शयितु पूर्वोक्तमेवार्थं व्यधिकरणत आह–' आरभे ' इत्यादि, आरम्भे अधिकरणभूते वर्त्तते जीवः, एव सरम्भे समारम्भे च । अनन्तरोक्तवाक्यार्थद्वयानुवादेन प्रकृतयोजनामाह– आरम्भमाणः सरम्भमाणः समारम्भमाणो जीवः, इत्यनेन प्रथमो वाक्यार्थोऽनूदित.। आरम्भे वर्त्तमाने, इत्यादिना तु द्वितीय , ' दुक्खावणताए ' इत्यादौ ताशब्दस्य प्राकृतप्रभवत्वात् दुःखापनायां–मरणलक्षणदुःखप्रापणायाम्, अथवा इष्टवियोगादि-दुःखहेतुप्रापणायां वर्त्तते, इति योगः । तथा शोकापनायां–दैन्यप्रापणायां ' जूरावणताए ' त्ति शोकातिरेकाच्छरीरजीर्णता-प्रापणायां ' तिप्पावणताए ' त्ति तेपापनायां ' तेपृ ष्टेपृ च्चरणार्थे ' इति वचनात्, शोकातिरेकादेवाश्रुलालादिक्षरणप्रापणाया, ' पिट्टावणयाए ' त्ति पिट्टनप्रापणायां ततश्च परितापनायां शरीरसन्तापे वर्त्तते, कचित्पठ्यते ' दुक्खावणयाए ' इत्यादि तच्च व्यक्तमेव, यच्च तत्र 'किलामणयाए उद्दावणयाए' । इत्यधिकमभिधीयते । तत्र 'किलामणयाए' ति ग्लानिनयने, 'उद्दावणयाए' त्ति उत्त्रासने, उक्तार्थविपर्ययमाह–' जीवेण ' इत्यादि, ' णो एयइ ' त्ति शैलेशीकरणे योगनिरोधाभो एजते, इति । एजना-दिरहितस्तु नारम्भादिपु वर्तते । तथा च न प्राणादीनां दुःखापनादिपु तथा च योगनिरोधाभिधानशुक्लध्यानेन सकलकर्म-ध्वसरूपाऽन्तक्रिया भवति । इति श्रीभगवतीसूत्रवृत्तौ तृतीयशतके तृतीयचमराख्योद्देशके ४८७ प्रतौ १०२ । १०३ पत्रे ॥८७॥

इत्थ च केवलिशरीराज्जीवविराधनाऽङ्गीकारे कथ तस्याष्टादशदोषरहितत्वमित्यादिका या तवोक्तिः सा तु अत्यन्तमस-मीचीना । एव चोभयमतसम्मते सुसाधुशरीराज्जीवविराधनास्वीकारे तस्य साधोश्चतुर्महाव्रतित्व वदतोऽपि ते मुखरस्य किमयुक्त स्यात्, इति त्यज्यतामय कठिनो हठः, इति ।

ननु प्रकरणाद्युक्तत्वात् योगोद्वहनं नास्माकमनुमतम् । यदि काऽप्याचाराङ्गादौ श्रुते स्पष्टाक्षरैर्योगोद्वहनं स्यात्तर्हि मन्यत एव । एवं वयस्य ! अतिचमत्कृता स्मः, तव मुखादप्येतादृशाक्षरोद्गमैर्विषकुण्डादिव पीयूषबुद्बुदैः शृणु तावत्सकर्णो भूत्वा साक्षात्सिद्धान्ताक्षराणि योगोद्वहनविषयाणि—तीहिं ठाणेहिं संपन्नेहिं अणगारे अणादीयं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं वितीवएज्जा तंजहा—अणिदाणताए दिट्ठिसंपन्नयाए जोगं वाहिताए ॥ वृत्तिर्यथा—'तिहिं' इत्यादि, कंठ्यम् । नवरं—अनादिकं—आदिरहितं, अनवदग्रं—अनन्तं, । दीर्घाध्वं—दीर्घमार्गं, चत्वारोऽन्ता—विभागा नरकगत्यादयो यस्य तच्चतुरन्तदीर्घत्वं प्राकृतत्वात्, संसारं एव कान्तारं तद्व्यतिव्रजेत्—व्यतिक्रामेदिति, अनादिकत्वादीनि विशेषणानि कान्तारपक्षेऽपि विवक्षया योजनीयानि, तथा ह्यनन्तमरण्यमतिमहत्वात्, तच्चतुरन्तं दिग्भेदादिति निदानं भोगर्द्धिप्रार्थनास्माभावमार्त्तध्यानं तद्वर्जितता अनिदानता तया दृष्टिसम्पन्नता सम्यग्दृष्टिता तया, योगवाहिता श्रुतोपधानकारित्वं समाधिस्थायिता वा तया । इति श्रीस्थानाङ्गतृतीयस्थानकप्रथमोद्देशके ३१० प्रतौ ७४ पत्रे ॥ ८८ ॥

न च वाच्यमत्र योगस्य समाधिस्थायितेत्यर्थष्टीकायां व्याख्यात एव, सत्यं भवतष्टीका यदि प्रमाणं तर्हि श्रुतोपधानकारित्वमित्यनेनार्थेन किमपराद्धम् ? न च श्रुतान्तरासङ्गतोऽयमर्थ इति ब्रुवीथाः, 'जोगवं उवहाणवं' इत्याद्युत्तराध्ययनोक्तानामन्येषामपि शास्त्राक्षराणां प्राग्दर्शितत्वादिति ।

अथ केचिच्छ्रमणोपासकाः साधर्मिकवात्सल्यादावार्द्रशाकादिसंस्कृतौ पापं शङ्कन्ते परं तदयुक्तम्, सदारम्भे पुण्यभूयस्त्वात्, पापस्याल्पत्वात् । इत्थमेव च तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणं पाणं खाइमं

साइम जाव पडिलाभेमाणस्स किं कज्जति ? गोयमा ! बहुयरा से निज्जरा कज्जइ "। इत्यादि भगवतीसूत्र सङ्गच्छते । अस्या च शङ्कायां विचार्यमाणायां विशेष(जिन)प्रासादाद्यपि अकर्त्तव्यमापद्येत । अलं वा युक्तिविस्तरेण । उक्तमपि पूर्वसूरिभिः फलपुष्पपत्रादिविशिष्टसामग्र्या साधर्मिकवात्सल्यम् । यथा–" तं अत्थ तं च सामत्थं, तं विन्नाणं सुउत्तमं । साहम्मियाण कज्जंमि, जं वच्चंति सुसावया ॥ १ ॥ अन्नन्नदेसाउ समागयाण, अन्नन्नजाईउ समुब्भवाण । साहम्मियाण गुणसुट्ठियाण, तित्थकराण वयणे ठियाण ॥२॥ वत्थन्नपाणासणखाइमेहिं, पुप्फेहिं पत्तेहिं य सप्फलेहिं । सुसावयाणं करणिज्जमेयं, कयं तु जम्हा भरहाहिवेण ॥ ३ ॥ वज्जाउहस्स रामेण, जहा वच्छल्लयं कयं । ससत्तिअणुरूवं तु, तहा वच्छल्लयं करे ॥४॥ साहम्मियाण वच्छल्लं, एयं अम्ह वियाहियं । धम्मट्ठाणेसु सीयंत, सव्वभावेण चोयए ॥ २०६ ॥ इति श्रीश्रावकादिनकृत्ये ॥ ८६ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितकृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे सङ्कीर्णविचारसमुच्चयनाम्नी वेला समाप्ता ॥

अनेकसिद्धान्तविचाररत्न–रम्ये गुरूपासनमार्गलभ्ये । विचाररत्नाकरनामशास्त्रे, प्राप्ता समाप्तिं रसरम्यवेला ॥ १ ॥

अथ प्रशस्तिः—

यस्योदग्रसमग्रसम्पदुदधेरूप्यरत्नोद्भवाः, प्राकाराः कपिशीर्षमण्डलमिषादङ्गीकृतोद्द्राविकाः ।
निर्यद्दीधितिदीपिकाभिरभितः पश्यन्ति मोहादरीन्, गर्जन्तः सुरदुन्दुभिध्वनिमिषाद्भ्रान्तपताकाकरा ॥ १ ॥

उद्यत्कोकनदच्छदाकृतिपदाङ्गुष्ठे यदालिङ्गितो, मेरुः कुञ्जरकर्णपर्णचपलो येनार्भकत्वे कृतः ।
सोढं तेन च पामरामृतकृतं कष्टं यदेतद्वयं, स्मारं स्मारमपारमुदद्गुरमणो, नाद्यापि किं मोदते ॥ २ ॥
सार्वः पूर्वमपूर्वपूर्वरचनाबीजं तु पर्वावली, मौलिखञ्चितरत्नकान्तिलहरीनिर्यत्नरम्यक्रमः ।
कल्याणाङ्कुरकन्दलोऽमलमनःसङ्कल्पकल्पद्रुमः, सः श्रीवीरजिनेश्वरः समभवत्क्रुद्द्रुमांभोधरः ॥ ३ ॥ त्रिभिर्विशेषकम्—
तत्पदप्रभुरभूदथ जेता, श्रीसुधर्मजिनशासननेता । आयुगान्तमपि सन्ततिशाखा, भाविनी भगवती भुवि यस्य ॥ ४ ॥
तस्य पट्टसरणाः चरणाढ्याः, सूरयः समभवन् बहवोऽपि । येषु वाच्यमपि वर्षसहस्रै—र्नैव सच्चरितमन्यतमस्य ॥ ५ ॥
श्रीमदानन्दविमलाभिधः समभवद्भुवनभानुस्ततोऽनुक्रमान्मुनिपतिः ।
येन शैथिल्यनिर्मूलनाभिर्मगे, निर्ममेशेन जिनशासनस्योन्नतिः ॥ ६ ॥
तस्य संविग्नचूडामणेर्गुणगणान्, गणयितुं कः क्षमः श्रमणधरणीपतेः ।
यद्विहारेण सद्वासना जज्ञिरे, भुवि जना मलयपवनेन फलदा इव ॥ ७ ॥
तदनु विजयदानः सूरिरासीदसीमोज्ज्वलमहिमनिधानं सर्वसाधुप्रधानम् ।
त्रिदश इह यदंघ्रिद्वन्द्वभक्तो पयोधे—र्वहनविलयमग्नां श्राविकामुद्दधार ॥ ८ ॥
अपरमपि कियतं वर्णयामस्तदीयं, निरुपममहिमानं भासमानं युगेऽस्मिन् ।
अधिरजनिनिकायो हिंसकव्यन्तरो यो, निजविशदचरित्रैः श्रावकं तं चकार ॥ ९ ॥

तत्पट्टक्षितिपालभालतिलकश्चन्द्रान्वयालङ्कृति-र्विद्वन्मडनहारहीरविजयः सूरीश्वरः सोऽभवत् ।
सद्वैराग्यविवेकिता विनयिता सौभाग्यभाग्यादिजं, जाग्रद्यस्य यशो दिशो धवलयत्नाद्यापि किं माद्यति ॥ १० ॥
हेमाचार्यभवार्यवर्ययशस सम्यग्विचार्योऽपि नो, काचिच्चित्तचमत्कृतिः स हि गुरुर्देवीगणोपासितः ।
चित्र किं त्विदमद्य तेन गुरुणा काले कलौ जाग्रति, म्लेच्छ स्वच्छमतिः कृतः कृतधिया भूमीश्वरोऽकब्बरः ॥ ११ ॥
य विश्वैकगुरु ननाम सुमतिर्लुङ्कापतिर्मेघजी-सञ्ज्ञो विज्ञजनै' सम समयविस्यक्त्वाऽधिपत्य महत् ।
हस' केनचिदहसा निपतितश्चेत्पल्वले पङ्किले, स्वच्छ किं तत एति नातिरयत सन्मानसो मानसम् ॥ १२ ॥
यस्योद्गायति डम्बराभिधसरो नित्य निजाङ्केशय-प्राणित्राणभव यशो नवमिव व्यालोलवीचिस्वनैः ।
क्रोडक्रीडदनेकविष्किरगरुत्पातारवोन्मर्दल, झिल्लीझङ्कृतितालमन्तिकगतैः पारापतैर्हुङ्कृतम् ॥ १३ ॥
यौ शत्रुञ्जयरैवताचलगिरी सङ्कोचमाप्तौ पुरा, म्लेच्छोत्सर्पितचण्डदण्डभयतः शीर्षस्थदेवालयौ ।
येनैतावभयाबुभौ तु विहितौ दीप्तौषधीदीपिकौ, रात्रावप्युरुलोकचक्रकलितौ नित्योत्सवौ विश्रुतः ॥ १४ ॥
विद्वल्लोचनसोमसोमविजयो यस्यान्तिपत्कुञ्जरो, मन्त्री सौकृतकृत्यमन्त्रविषये मित्र मनःप्रीणने ।
मञ्जूषा समपार्थसार्थनिकरे भूषा स्वकीयान्वये, मान्यो मानविमानिमानवनुत' श्रीवाचक. सोऽभवत् ॥ १५ ॥
यच्चारित्रमरित्रभक्तिभरगणादाकर्ण्य कर्णामृत, सभ्यानीचितुमक्षमः समभवद्धजाग्निसाननः ।
सर्वत्रोद्गतनेत्रपत्रपटलस्तत्रापि लज्जाकुल., स्व धर्तुं न शशाक पाकमथनो ध्यायन्नहिन्याननम् ॥ १६ ॥

श्रीमद्वीरपरंपरासुरलतां सन्तापितां सागरैः, क्षारोर्मिप्रकरानुकारिवचनैर्व्यालोक्य येनामुना ।
कृत्वा वैजयपक्षमंडपमिमां तत्राधिरोप्यादरात्, प्रौढाकारि तथा यथा जगदिमां तुष्टं फलैः सेवते ॥ १७ ॥

अष्टभिरर्थतः कुलकम्—

तदनु मनुजमान्योऽनन्यसामान्यभाग्यस्त्रिभुवनगुरुपट्टे सूरिशक्रो बभूव ।
विजयिविजयसेनः फेनपिंडावदातः, प्रसृमरवरकीर्तिर्मूर्तिमान् पुण्यराशिः ॥ १८ ॥

येनात्युन्मदवादिवृन्दहृदयक्ष्मापीठजन्मा महान्, गर्वक्षोणिरुहः क्षणादपि तथा निर्मूलमुन्मूलितः ।
भूपाकब्बरसंसदि स्ववचनैर्युक्तिप्रथापेशलै-र्मोघद्बन्धुरसिन्धुरोध्धुरकरैरम्भोजमाला यथा ॥ १९ ॥

तत्पट्टाम्रमुकान्तसुन्दरशिरःशृङ्गारवास्तोष्पतिः, षट्तर्कोदधिमन्दरः स्मरजयी चारित्रिचूडामणिः ।
चञ्चच्चन्द्रकुलाभिधचन्द्रसदृशश्चन्द्रोज्ज्वलश्रीयशाः, स श्रीमान् विजयप्रयुक्ततिलकः सूरीश्वरः सोऽभवत् ॥ २० ॥

यः श्रीसूरिवरः समत्वमदवज्राजिष्णुना जिष्णुना, लक्ष्मीदक्षकटाक्षपात्रमतनुप्रद्युम्नसम्पादकः ।
दध्रे येन जिनाधिराजवचनश्रेणीधरित्री ध्रुवम्, दर्पान्धोरगघोरसागरजलैराप्लाव्यमाना बलात् ॥ २१ ॥

तत्पट्टाधिपतिः क्षितीशततिभिः स्तुत्यक्रमाम्भोरुहः, सूरिश्रेणिशिरोमणिः स विजयानन्दः क्षमाभृद्विभुः ।
स्वच्छश्रीस्तपगच्छराज्यमखिलं शास्ति प्रशस्ताभिध-स्तीर्थाधीशपदारविन्दविलसद्भक्तिर्विशुक्तिप्रियः ॥ २२ ॥

आजन्माऽपि रजःप्रसङ्गरहिते रत्नप्रदीपोज्ज्वले, विद्यामोदिसुवासने श्रुतघने चातुर्यचन्द्रोदये ।
यस्येव सदने निरस्तमदने स्वाध्यायदौवारिके, श्रीधर्मः क्षितिपः क्षमादिगृहिणीवर्गैः सह क्रीडति ॥ २३ ॥
यत्कीर्त्याद्भुतमेतदद्य विहितं शुभ्रं सृजन्त्या जगत्, कृष्णश्वेतरुचिः श्रितः प्रियमिव प्रोवाच शङ्काकुला ।
कस्त्वं त्वद्दयितो न सोऽसितततनुर्नूनं स एव प्रिये, दम्पत्योरितरेतरं सशपथं स्मृतः कलिर्नैकशः ॥ २४ ॥
कण्ठे सारसरस्वती हृदि कृपानीतिर्यमाद्यद्वयोः, वक्त्राब्जे मुखवासिका सुभगता काये करे पुस्तिका ।
भूपालप्रणतिः पदे दिशि दिशि श्लाघाऽमितः सम्पदः, इत्थं भूरिवधूवृतोऽपि विदितो यो ब्रह्मचारीश्वरः ॥ २५ ॥
लक्ष्मीमीश्वरतां च यः परिचितामुत्सृज्य बाल्यादपि, श्रामण्यं श्रितवानगण्यगुणभृत्पुण्यप्रवीणाशयः ।
वश्यैर्ज्ञमपरान्तिके तदितराः स्वस्थाऽपि नाङ्गीकृता-ऽप्येतत्पादपवित्रमोहितवने विद्युत्यहो राजिता ॥ २६ ॥
शीलं यस्य परे स्तुवन्ति यतिनोऽप्यन्तर्मनोऽभीप्सवः, कालेऽस्मिन्नपि जाग्रदुग्रमहिमा यस्योत्तमन्त्रोद्धृतः ।
निःशेषागमवारिधेरपि सुधा दत्तावकाशे हृदि, स्यात् न प्रसरज्जगरमिव यस्य प्रथ चित्रकृत् ॥ २७ ॥
एतेषामादेशात्समुद्धृतः प्रवचनाढ्यं ग्रन्थः । श्रीहीरविजयगणपतिशिशुपाठककीर्तिविजयेन ॥ २८ ॥
सशोधितश्च सुविहितचूडामणिरामविजयबुधशिष्यैः । श्रीदेवविजयवाचकधुर्यैः कोविदकुलोत्तमैः ॥ २९ ॥
किं चात्र लेखनशोधनविषये यत्नं चकार भक्तिप्रयः । विनयविजयाभिधानः, प्रथमादर्शं च स लिलेख ॥ ३० ॥
यद्यपि मया तु किञ्चिन्न लिखितमत्रास्ति नूतनं तदपि । कृतिभिः शोध्यं धर्मप्रणयादविचारितं यदिह ॥ ३१ ॥

इयदागमोक्तयुक्तिप्रचयाद्यदुपार्जितं मया सुकृतम् । तेन ममास्तु विशिष्टा, निरन्तरं बोधिबीजाप्तिः ॥ ३२ ॥
अस्मिन्नुच्चविपक्षपक्षातिमिकप्रासाग्रहप्रस्फुरत्–सत्पक्षौघतिमिङ्गले कलजयश्रीमन्दिरे सुन्दरे ।
उद्यद्भूरिविचारचारुलहरीप्रव्यक्तयुक्त्यावली–मुक्ताः स्वच्छजले चिरं मणिगणैः क्रीडन्तु ते धीवराः ॥ ३३ ॥
यावद्दिव्यवधूविलासरसिकः स्वर्भोगभङ्गीसुखं, जंभारातिरसौ भुनक्ति भगवानुद्भूतभाग्याद्भुतः ।
तावत्सर्गनिरर्गलान्तरतमःस्तोमप्रणाशच्चमं, शस्तं शास्त्रमिदं निरस्तदुरितं पृथ्वीतले नन्दतात् ॥ ३४ ॥
यावद्व्योमतरङ्गिणीजलमिलत्कल्लोलमालालस–दिग्दन्तावलकीर्णवर्ण्यसलिला सेकप्रणष्टश्रमम् ।
ज्योतिश्चक्रमनुक्रमेण नभसि भ्रामत्यजस्रं क्षितौ, तावन्नन्दतु शास्त्रमेतदनघं विद्वज्जनानन्दनम् ॥ ३५ ॥
दर्शनहिमकरगगनग्रैवेयकसङ्ख्यवत्सरे जातः । आश्विनसिति तुर्यायां, यत्नः सफलो गुरुमहिम्ना ॥ ३६ ॥
॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृषरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे संकीर्णविचारसमुच्चयनाम्नीवेला समाप्ता ॥

॥ इति श्रीविचाररत्नाकरः समाप्तः ॥

इति जगद्गुरुश्रीहीरविजयसूरीश्वरशिष्योपाध्याय-
श्रीकीर्त्तिविजयविरचितो विचाररत्नाकरः समाप्तः।

इति श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धारे ग्रन्थांकः-७२.